५२ । ५३ । ५४ । ५५ उत्पत्तिकारणं ५६ । ५७ । ५८ । ५९ ॥ ॥ इतिउद्योगपर्वणि नीलकंठीये भारतभावदीपे षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥ ॥ ॥ दुःखद्वयं 
दुःखकरद्वयं भीष्मशाल्वाख्यं यद्वा । निर्भर्तृकत्वमेकंदुःखंत्वच्छत्रोर्वधश्चेतितापसानांदुःखद्वयं तथाऽपिशत्रुद्वयमध्येकतरस्यकंप्रतिकर्तव्यंहंतुंयत्नंचिकीर्षसि यद्वा एकैकस्यगतिहानिर्मरणंवेतिदुःखद्वयंज्ञेयम्

 तच्छ्रुत्वावचनंभीष्मःसंमंत्र्यसहमंत्रिभिः ॥ निश्चित्यविससर्जैमांसत्यवत्यामतेस्थितः ५२ अनुज्ञातातुभीष्मेणशाल्वंसौभपतिंततः ॥ कन्येयंमुदितातत्रकाले 
वचनमब्रवीत् ५३ विसर्जिताऽस्मिभीष्मेणधर्मंमांप्रतिपादय ॥ मनसाऽभिवृतःपूर्वंमयात्वंपार्थिवर्षभ ५४ प्रत्याचख्यौचशाल्वोऽस्याश्चारित्रस्याभिशंकितः ॥ 
सेयंतपोवनंप्राप्तातापस्येऽभिरताभृशम् ५५ मयाचप्रत्यभिज्ञातावंशस्यपरिकीर्त्तनात् ॥ अस्यदुःखस्यचोत्पत्तिंभीष्ममेवेहमन्यते ५६ ॥ अंबोवाच ॥ भग
वन्नेवमेवेहयथाऽऽहपृथिवीपतिः ॥ शरीरकर्तामातुर्मेसृंजयोहोत्रवाहनः ५७ नह्युत्सहेस्वनगरंप्रतियातुंतपोधन ॥ अपमानभयाच्चैवव्रीडयाचमहामुने ५८ य
त्तुमांभगवान्रामोवक्ष्यतिद्विजसत्तम ॥ तन्मेकार्यतमंकार्यमितिमेभगवन्मतिः ५९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिहोत्रवाहनांबासंवादेष
ट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ अकृतव्रणउवाच ॥ दुःखद्वयमिदंभद्रेकतरस्यचिकीर्षसि ॥ प्रतिकर्तव्यमबलेतत्त्वंवत्सेवदस्वमे १ यदिसौभपतिर्भ
द्रेनियोक्तव्योमतस्तव ॥ नियोक्ष्यतिमहात्मासरामस्त्वद्धितकाम्यया २ अथापगेयंभीष्मंत्वंरामेणेच्छसिधीमता ॥ रणेविनिर्जितंद्रष्टुंकुर्यात्तदपिभार्गवः ३ सृं
जयस्यवचःश्रुत्वातवचैवशुचिस्मिते ॥ यदत्रतेभृशंकार्यंतदद्यैवविचिंत्यताम् ४ ॥ अंबोवाच ॥ अपनीताऽस्मिभीष्मेणभगवन्नविजानता ॥ नाभिजानाति
मेभीष्मोब्रह्मन्शाल्वगतंमनः ५ एतद्विचार्यमनसाभवानेतद्विनिश्चयम् ॥ विचिनोतुयथान्यायंविधानंक्रियतांतथा ६ भीष्मेवाकुरुशार्दूलेशाल्वराजेऽथवापुनः
॥ उभयोरेववाब्रह्मन्युक्तंयत्तत्समाचर ७ निवेदितंमयाह्येतद्दुःखमूलंयथातथम् ॥ विधानंतत्रभगवन्कर्तुमर्हसियुक्तितः ८ ॥ अकृतव्रणउवाच ॥ उपपन्न
मिदंभद्रेयदेवंवरवर्णिनि ॥ धर्मंप्रतिवचोब्रूयाःशृणुचेदंवचोमम ९ यदित्वामापगेयोवैननयेद्गजसाह्वयम् ॥ शाल्वस्त्वांशिरसाभीरुगृह्णीयाद्रामचोदितः १० तेन
त्वंनिर्जिताभद्रेयस्मान्नीताऽसिभाविनि ॥ संशयःशाल्वराजस्यतेनत्वयिसुमध्यमे ११ भीष्मःपुरुषमानीचजितकाशीतथैवच ॥ तस्मात्प्रतिक्रियायुक्ताभीष्मेकार
यितुंतव १२ ॥ अंबोवाच ॥ ममाप्येषसदाब्रह्मन्हृदिकामोऽभिवर्तते ॥ घातयेयंयदिरणेभीष्ममित्येवनित्यदा १३ भीष्मंवाशाल्वराजंवायंवादोषेणगच्छसि ॥
प्रशाधितंमहाबाहोयत्कृतेऽहंसुदुःखिता १४ ॥ भीष्मउवाच ॥ एवंकथयतामेवतेषांसदिवसोगतः ॥ रात्रिश्चभरतश्रेष्ठसुखशीतोष्णमारुता १५ ततोरामःप्रा
दुरासीत्प्रज्वलन्निवतेजसा ॥ शिष्यैःपरिवृतोराजन्जटाचीरधरोमुनिः १६ 

१ नियोक्तव्यस्तवपाणिग्रहणार्थमितिशेषः २ भीष्मस्यतुसत्यप्रतिज्ञस्यत्वत्सुखार्थंजयमात्रंकर्तव्यंनतुतावतातवहितमित्याशयेनाह अथेति ३ । ४ । ५ पिधानंप्रतीकारं ६ । ७ । ८ । ९ । १० । ११
१२ । १३ । १४ । १५ । १६

१७ । १८ । १९ आसातांलङिद्विवचनम् २० । २१ । २२ परमंतवविवक्षितंयत्तन्मेऽवश्यंवक्तव्यमित्यर्थः २३ शिरसौश्रेष्ठौ । 'शिरःप्रधानेसेनाग्रे' इतिमेदिनी पुंस्त्वमार्षम् २४ । २५ । २६ सृंजयस्य

धनुष्पाणिरदीनात्माखङ्गंबिभ्रत्परश्वधी ॥ विरजाराजशार्दूलसृंजयंसोऽभ्ययान्नृपम् १७ ततस्तंतापसाद्दृष्ट्वासचराजामहातपाः ॥ तस्थुःप्रांजलयोराजन्साचकन्या
तपस्विनी १८ पूजयामासुरव्यग्रामधुपर्केणभार्गवम् ॥ अर्चितश्चयथान्यायंनिषसादसहैवतैः १९ ततःपूर्वव्यतीतानिकथयंतौस्मतावुभौ ॥ आसातांजाम
दग्न्यश्चसृंजयश्चैवभारत २० तथाकथांतेराजर्षिर्भृगुश्रेष्ठंमहाबलम् ॥ उवाचमधुरंकालेराममंवचनमर्थवत् २१ रामेयंममदौहित्रीकाशिराजसुताप्रभो ॥ अस्याः
शृणुयथातत्त्वंकार्यंकार्यविशारद २२ परमंकथ्यतांचेतितांरामःप्रत्यभाषत ॥ ततःसाऽभ्यवदद्रामंज्वलंतमिवपावकम् २३ ततोऽभिवाद्यचरणौरामस्यशिरसौ
शुभौ ॥ स्पृष्ट्वापद्मदलाभाभ्यांपाणिभ्यामग्रतःस्थिता २४ रुरोदसाशोकवतीबाष्पव्याकुललोचना ॥ प्रपेदेशरणंचैवशरण्यंभृगुनंदनम् २५ ॥ रामउवाच ॥
यथात्वंसृंजयस्यास्यतथामेत्वंनृपात्मजे ॥ ब्रूहियत्तेमनोदुःखंकरिष्येवचनंतव २६ ॥ अंबोवाच ॥ भगवञ्शरणंत्वाद्यप्रपन्नाऽस्मिमहाव्रतम् ॥ शोकपंकार्ण
वान्मग्नांघोरादुद्धरमांविभो २७ ॥ भीष्मउवाच ॥ तस्याश्चदृष्ट्वारूपंचवपुश्चाभिनवंपुनः ॥ सौकुमार्यंपरंचैवरामश्चिंतापरोऽभवत् २८ किमियंवक्ष्यतीत्येवं
विममर्शभृगूद्वहः ॥ इतिदध्यौचिरंरामःकृपयाऽभिपरिप्लुतः २९ कथ्यतामितिसाभूयोरामेणोक्ताशुचिस्मिता ॥ सर्वमेवयथातत्त्वंकथयामासभार्गवे ३०
तच्छ्रुत्वाजामदग्न्यस्तुराजपुत्र्यावचस्तदा ॥ उवाचतांवरारोहांनिश्चित्यार्थविनिश्चयम् ३१ ॥ रामउवाच ॥ प्रेषयिष्यामिभीष्मायकुरुश्रेष्ठायभाविनि ॥ क
रिष्यतिवचोमह्यंश्रुत्वाचसनराधिपः ३२ नचेत्करिष्यतिवचोमयोक्तंजान्हवीसुतः ॥ धक्ष्याम्यहंरणेभद्रेसामात्यंशस्त्रतेजसा ३३ अथवातेमतिस्तत्रराजपुत्रि
नवर्तते ॥ यावच्छाल्वपतिंवीरंयोजयाम्यत्रकर्मणि ३४ ॥ अंबोवाच ॥ विसर्जिताऽहंभीष्मेणश्रुत्वैवभृगुनंदन ॥ शाल्वराजगतंभावंममपूर्वंमनीषितम् ३५
सौभराजमुपेत्याहमवोचंदुर्वचंवचः ॥ नचमांप्रत्यगृह्णात्सचारित्र्यपरिशंकितः ३६ एतत्सर्वंविनिश्चित्यस्वबुद्ध्याभृगुनंदन ॥ यदत्रौपयिकंकार्यंतच्चिंतयितुमर्हसि ३७
ममतुव्यसनस्यास्यभीष्मोमूलंमहाव्रतः ॥ येनाहंवशमानीतासमुत्क्षिप्यबलात्तदा ३८ भीष्मंजहिमहाबाहोयत्कृतेदुःखमीदृशम् ॥ प्राप्ताऽहंभृगुशार्दूलचराम्य
प्रियमुत्तमम् ३९ सहिलुब्धश्चनीचश्चजितकाशीचभार्गव ॥ तस्मात्प्रतिक्रियाकर्तुंयुक्तातस्मैत्वयाऽनघ ४० एषमेक्रियमाणायाभारतेनतदाविभो ॥
अभवद्धृदिसंकल्पोघातयेयंमहाव्रतम् ४१

दौहित्रीतिशेषः २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ लुब्धोयतोमांहृतवान् नीचोयतोमदंगीकारंस्वयंनकृतवान् अकामुकस्यकन्याहरणंदोषइतिभावः
४० क्रियमाणायाः बलादाहरणेनहिंस्यमानायाः कृञ्हिंसायांस्वादिः ४१

४२ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेसप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥ ॥ ॥ ॥ एवमिति १ काश्येकाशिराजकन्ये २ । ३ । ४ । ५ । ६ । ७

तस्मात्कामंममाद्येमंरामसंपादयानघ ॥ जहिभीष्मंमहाबाहोयथावृत्रंपुरंदरः ४२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणि अंबोपा० रामांबासंवादेसप्तसप्तत्यधिकशततमो
ऽध्यायः ॥ १७७ ॥ ॥ ॥ ॥ भीष्मउवाच ॥ एवमुक्तस्तदारामोजहिभीष्ममितिप्रभो ॥ उवाचरुदतींकन्यांचोदयंतींपुनःपुनः १ काश्येनकामंगृह्णा
मिशस्त्रंवैवरवर्णिनि ॥ ऋतेब्रह्मविदांहेतोःकिमन्यत्करवाणिते २ वाचाभीष्मश्चशाल्वश्चममराज्ञिवशानुगौ ॥ भविष्यतोऽनवद्यांगितत्करिष्यामिमाशुच ३ नतुशस्त्रं
ग्रहीष्यामिकथंचिदपिभाविनि ॥ ऋतेनियोगाद्विप्राणामेषमेसमयःकृतः ४ ॥ अंबोवाच ॥ ममदुःखंभगवताव्यपनेयंयतस्ततः ॥ तत्तुभीष्मप्रसूतंमेतंजहीश्वर
माचिरम् ५ ॥ रामउवाच ॥ काशिकन्येपुनर्ब्रूहिभीष्मस्तेचरणावुभौ ॥ शिरसावंदनार्होऽपिग्रहीष्यतिगिरामम ६ ॥ अंबोवाच ॥ जहिभीष्मंरणेरामगर्जंतमसुरं
यथा ॥ समाहूतोरणेराममममचेदिच्छसिप्रियम् ॥ प्रतिश्रुतंचयदपितत्सत्यंकर्तुमर्हसि ७ ॥ भीष्मउवाच ॥ तयोःसंवदतोरेवंराजन्रामांबयोस्तदा ॥ ऋषिःपरम
धर्मात्माइदंवचनमब्रवीत् ८ शरणागतांमहाबाहोकन्यांनत्यक्तुमर्हसि ॥ यदिभीष्मोरणेरामसमाहूतस्त्वयामृधे ९ निर्जितोऽस्मीतिवाब्रूयात्कुर्याद्वावचनंतव ॥ कृतम
स्याभवेत्कार्यंकन्यायाभृगुनंदन १० वाक्यंसत्यंचतेवीरभविष्यतिकृतंविभो ॥ इयंचापिप्रतिज्ञातेतदाराममहामुने ११ जित्वावैक्षत्रियान्सर्वान्ब्राह्मणेषुप्रतिश्रुता ॥
ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चैवरणेयदि १२ ब्रह्मद्विड्भवितातंवैहनिष्यामीतिभार्गव ॥ शरणार्थंप्रपन्नानांभीतानांशरणार्थिनाम् १३ नशक्ष्यामिपरित्यागंकर्तुंजीवन्कथं
चन ॥ यश्चकृत्स्नंरणेक्षत्रंविजेष्यतिसमागतम् १४ दीप्तात्मानमहंतंचहनिष्यामीतिभार्गव ॥ सएवंविजयीरामभीष्मःकुरुकुलोद्वहः ॥ तेनयुध्यस्वसंग्रामेसमेत्यभृगुनंदन
१५॥रामउवाच ॥ स्मराम्यहंपूर्वकृतांप्रतिज्ञामृषिसत्तम ॥ तथैवचचरिष्यामियथासाम्नैवलप्स्यते १६ कार्यमेतन्महद्ब्रह्मन्काशिकन्यामनोगतम् ॥ गमिष्यामिस्वयंतत्र
कन्यामादाययत्रसः १७ यदिभीष्मोरणश्लाघीनकरिष्यतिमेवचः ॥ हनिष्याम्येनमुद्रिक्तमितिमेनिश्चितामतिः १८ नहिबाणामयोत्सृष्टाःसज्जंतीहशरीरिणाम् ॥ कायेषु
विदितंतुभ्यंपुराक्षत्रियसंगरे १९ एवमुक्त्वाततोरामःसहतैर्ब्रह्मवादिभिः ॥ प्रयाणायमतिंकृत्वासमुत्तस्थौमहातपाः २० ततस्तेतामुषित्वातुरजनींतत्रतापसाः ॥ हुताग्नि
योजप्तजप्याःप्रतस्थुर्मज्जिघांसया २१ अभ्यगच्छत्ततोरामःसहतैर्ब्रह्मवादिभिः ॥ कुरुक्षेत्रंमहाराजकन्ययासहभारत २२ न्यविशंततःसर्वेपरिगृह्यसरस्वतीं ॥ तापसा
स्तेमहात्मानोभृगुश्रेष्ठपुरस्कृताः २३ ॥ भीष्मउवाच ॥ ततस्तृतीयेदिवसेसंदिदेशव्यवस्थितः ॥ कुरुप्रियंसमेराजन्प्राप्तोऽस्मीतिमहाव्रतः २४ तमागतमहंश्रुत्वाविष
यांतंमहाबलम् ॥ अभ्यगच्छंजवेनाशुप्रीत्यातेजोनिधिंप्रभुम् २५

ऋषिः अकृतव्रणः पाठांतरेतुस्पष्टमेवस्यकीर्त्यते ८ । ९ । १० । ११ । १२ १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५

२६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ अवलिप्तस्यदक्षस्य ४८ । ४९

गांपुरस्कृत्यराजेन्द्रब्राह्मणैःपरिवारितः ॥ ऋत्विग्भिर्देवकल्पैश्चतथैवचपुरोहितैः २६ समामभिगतंदृष्ट्वाजामदग्न्यःप्रतापवान् ॥ प्रतिजग्राहतांपूजांत्रचनंचेद
मब्रवीत् २७ ॥ रामउवाच ॥ भीष्मकांबुद्धिमास्थायकाशिराजसुतातदा ॥ अकामेनत्वयाऽऽनीतापुनश्चैवविसर्जिता २८ विभ्रंशितात्वयाहीयंधर्मादास्ते
यशस्विनी ॥ परामृष्टांत्वयाहीमांकोहिगंतुमिहार्हति २९ प्रत्याख्याताहिशाल्वेनत्वयानीतेतिभारत ॥ तस्मादिमांमन्नियोगात्प्रतिगृह्णीष्वभारत ३० स्वधर्मं
पुरुषव्याघ्रराजपुत्रीलभत्वियम् ॥ नयुक्तस्त्ववमानोऽयंराज्ञांकर्तुंत्वयाऽनघ ३१ ततस्तंवैविमनसमुदीक्ष्याहमथाब्रुवम् ॥ नाहमेनांपुनर्दद्यांब्रह्मन्भ्रात्रेकथंच
न ३२ शाल्वस्याहमितिप्राहपुरामामेवभार्गव ॥ मयाचैवाभ्यनुज्ञातागतेयंनगरंप्रति ३३ नभयान्नाप्यनुक्रोशान्नार्थलोभान्नकाम्यया ॥ क्षात्रंधर्ममहंजह्यामि
तिमेव्रतमाहितम् ३४ अथमामब्रवीद्रामःक्रोधपर्याकुलेक्षणः ॥ नकरिष्यसिचेदेतद्वाक्यंमेनरपुंगव ३५ हनिष्यामिसहामात्यंत्वामद्येतिपुनःपुनः ॥ संरंभाद
ब्रवीद्रामःक्रोधपर्याकुलेक्षणः ॥ ३६ तमहंगीर्भिरिष्टाभिःपुनःपुनररिंदम ॥ अयाचंभृगुशार्दूलंनचैवमशशामसः ३७ प्रणम्यतमहंमूर्ध्नाभूयोब्राह्मणसत्तमम् ॥
अब्रुवंकारणंकिंतद्यत्त्वंयुद्धंमयेच्छसि ३८ इष्वस्त्रंममबालस्यभवतैवचतुर्विधम् ॥ उपदिष्टंमहाबाहोशिष्योऽस्मितवभार्गव ३९ ततोमामब्रवीद्रामःक्रोधसंरक्त
लोचनः ॥ जानीषेमांगुरुंभीष्मगृह्णासीमांनचैवह ४० सुतांकाश्यस्यकौरव्यमत्प्रियार्थंमहामते ॥ नहितेविद्यतेशांतिरन्यथाकुरुनंदन ४१ गृहाणेमांमहाबा
होरक्षस्वकुलमात्मनः ॥ त्वयाविभ्रंशिताहीयंभर्तारंनाधिगच्छति ४२ तथाब्रुवंतंतमहंरामंपरपुरंजयम् ॥ नैतदेवंपुनर्भाविब्रह्मर्षेकिंश्रमेणते ४३ गुरुत्वंत्वयि
संप्रेक्ष्यजामदग्न्यपुरातनम् ॥ प्रसादयेत्वांभगवंस्त्यक्तैषातुपुरामया ४४ कोजातुपरभावांहिनारींव्यालीमवस्थिताम् ॥ वासयेतगृहेजानन्स्त्रीणांदोषोमहात्ययः
४५ नभयाद्वासवस्यापिधर्मंजह्यांमहाव्रत ॥ प्रसीदमावायद्वातेकार्यंतत्कुरुमाचिरम् ४६ अयंचापिविशुद्धात्मन्पुराणेश्रूयतेविभो ॥ मरुत्तेनमहाबुद्धेगीतःश्लो
कोमहात्मना ४७ गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः ॥ उत्पथप्रतिपन्नस्यपरित्यागोविधीयते ४८ सत्वंगुरुरितिप्रेम्णामयासंमानितोभृशम् ॥ गुरुवृत्तिंनजा
नीषेतस्माद्योत्स्यामिवैत्वया ४९ गुरुंनहन्यांसमरेब्राह्मणंचविशेषतः ॥ विशेषतस्तपोवृद्धमेवंक्षांतंमयातव ५० उद्यतेषुमथोदृष्ट्वाब्राह्मणंक्षत्रबंधुवत् ॥ योहन्यात्स
मरेकुद्धंयुध्यंतमपलायिनम् ५१ ब्रह्महत्यानतस्यस्यादितिधर्मेषुनिश्चयः ॥ क्षत्रियाणांस्थितोधर्मेक्षत्रियोऽस्मितपोधन ५२ योयथावर्ततेयस्मिंस्तस्मिन्नेवप्रवर्तयन् ॥
नाधर्मंसमवाप्नोतिनचाश्रेयश्चविंदति ५३

५० । ५१ । ५२ यःपुमान्यस्मिन्नरेयथाप्रीत्याद्वेषेणवावर्ततेसनरस्तस्मिन्तथैवप्रीतिंद्वेषंवाप्रवर्तयन् ५३

ननुत्वामपेथंप्रवर्नयन्नहंत्वयिप्रीतिमेवकरोमीत्याशंक्याह अर्थेवेति । अर्थेगुरुवाक्याद्दारकरणे धर्मेपितृप्रीत्यर्थस्त्रीकृतेब्रह्मचर्ये विषयेदेशकालानुसारेणसमर्थोविवेककुशलः तत्रधर्मलोपेनगुरुवाक्यात्प्राप्यमा
णोऽर्थःश्रेयानुतनेत्यर्थेसंशयवानुतगुरुवाक्यविरोधेनापिपाल्यमानोधर्मःश्रेयानुतनेतिधर्मेसंशयवान् । एतयोर्मध्येअर्थेसंशयमापन्नोऽर्थमननुतिष्ठन्श्रेयान् परिशेषात्धर्मेतुनिःसंशयोधर्ममेवानुतिष्ठन्श्रेयान्निरर्थः

॥१४१॥ अर्थेवायदिवाधर्मेसमर्थोदेशकालवित् ॥ अर्थसंशयमापन्नःश्रेयान्निःसंशयोनरः ५४ यस्मात्संशयितेऽप्यर्थेऽयथान्यायंप्रवर्तसे ॥ तस्माद्योत्स्यामिसहितस्त्व
यारामममहाहवे ५५ पश्यमेबाहुवीर्यंचविक्रमंचातिमानुषम् ॥ एवंगतेऽपितुमयायच्छक्यंभृगुनंदन ५६ तत्करिष्येकुरुक्षेत्रेयोत्स्येविप्रत्वयासह ॥ द्वंद्वेराम १७८
यथेष्टंमेसज्जीभवमहाद्युते ५७ तत्रत्वंनिहतोराममयाशरशतार्दितः ॥ प्राप्स्यसेनिर्जितांल्लोकान्शस्त्रपूतोमहारणे ५८ सगच्छविनिवर्तस्वकुरुक्षेत्रंरणप्रिय ॥ तत्रे
ष्यामिमहाबाहोयुद्धायत्वांतपोधन ५९ अपियत्रत्वयारामकृतंशौचंपुरापितुः ॥ तत्राहमपिहत्वात्वांशौचंकर्ताऽस्मिभार्गव ६० तत्रामसमागच्छत्वरितंयुद्धदु
र्मद ॥ व्यपनेष्यामितेदर्पंपौराणंब्राह्मणब्रुवः ६१ यच्चापिकत्थसेरामबहुशःपरिवत्सरे ॥ निर्जिताःक्षत्रियालोकेमयैकेनेतितच्छृणु ६२ नतदाजातवान्भीष्मःक्ष
त्रियोवाऽपिमद्विधः ॥ पश्चाज्जातानितेजांसितृणेपुज्वलितंत्वया ६३ यस्तेयुद्धमयंदर्पंकामंचव्यपनाशयेत् ॥ सोऽहंजातोमहाबाहोभीष्मःपरपुरंजयः ॥ व्यपने
ष्यामितेदर्पंयुद्धेरामनसंशयः ६४ ॥ भीष्मउवाच ॥ ततोमामब्रवीद्रामःप्रहसन्निवभारत ॥ दिष्ट्याभीष्ममयासार्धंयोद्धुमिच्छसिसंगरे ६५ अयंगच्छामिकौर
व्यकुरुक्षेत्रंत्वयासह ॥ भाषितंतेकरिष्यामितत्रागच्छपरंतप ६६ तत्रत्वांनिहतंमातामयाशरशताचितम् ॥ जान्हवीपश्यतांभीष्मगृध्रकंकबलाशनम् ६७ कृ
पणंत्वामभिप्रेक्ष्यसिद्धचारणसेविता ॥ मयाविनिहतंदेवीरोदतामद्यपार्थिव ६८ अतदर्हामहाभागाभगीरथसुतानघा ॥ यात्वामजीजनन्मन्दंयुद्धकामुकमातुरम्
६९ एहिगच्छमयाभीष्मयुद्धकामुकदुर्मद ॥ गृहाणसर्वंकौरव्यरथादिभरतर्षभ ७० इतिब्रुवाणंतमहंरामंपरपुरंजयम् ॥ प्रणम्यशिरसाराममेवमस्त्वित्यथाब्रुवम्
७१ एवमुक्त्वाययौरामःकुरुक्षेत्रंयुयुत्सया ॥ प्रविश्यनगरंचाहंसत्यवत्यैन्यवेदयम् ७२ ततःकृतस्वस्त्ययनोमात्राचप्रतिनंदितः ॥ द्विजातीन्वाच्यपुण्याहंस्व
स्तिचैवमहाद्युते ७३ रथमास्थायरुचिरंराजतंपांडुरैर्हयैः ॥ सूपस्करंस्वधिष्ठानंवैयाघ्रपरिवारणम् ७४ उपपन्नंमहाशस्त्रैःसर्वोपकरणान्वितम् ॥ तत्कुलीने
नवीरेणहयशास्त्रविदारणे ७५ यत्तंसूतेनशिष्टेनबहुशोदृष्टकर्मणा ॥ दंशितःपांडुरेणाहंकवचेनवपुष्मता ७६ पांडुरंकार्मुकंगृह्यप्रायांभरतसत्तम ॥ पांडुरेणा
तपत्रेणध्रियमाणेनमूर्धनि ७७

५४ अयथान्यायमितिच्छेदः न्यायातिक्रमेणमांप्रवर्तयसे ५५ बाहुवीर्यंशाणरक्षेपादौ एवंगतेएवंस्थितेत्वयि ५६ । ५७ । ५८ । ५९ अपियत्रेति । पितृवद्गुरुमरणेऽप्याशौचप्राप्तौसत्यांतत्रैवतीर्थेशौचंमचै
लस्नानादिनादशमेऽह्निशुद्धिंस्वस्यकरिष्यामीत्यर्थः शौचंरुधिरांजलिदानमित्यर्वाचीनः ६० पौराणंपुराकृतम् ६१ । ६२ । ६३ । ६४ । ६५ । ६६ बलाःकाकाःतेषामशनंअन्नभूतं ६७ । ६८ । ६९ ॥१४१॥
७० । ७१ । ७२ । ७३ सूपस्करंस्वंगं स्वधिष्ठानंसुचक्रं वैयाघ्रंव्याघ्रचर्मतदेवपरिवारणंआच्छादनंयस्यतं ७४ । ७५ । ७६ । ७७

७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ भार्गवस्यरामस्य ८५ देवीगंगा ८६ । ८७ । ८८ क्षत्रियहणःक्षत्रियहंता ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ ॥ ॥ इतिश्रीउद्योगपर्व

पांडुरैश्चापिव्यजनैर्वीज्यमानोनराधिप ॥ शुक्लवासाःसितोष्णीषःसर्वशुक्लविभूषणः ७८ स्तूयमानोजयाशीर्भिर्निष्क्रम्यगजसाह्वयात् ॥ कुरुक्षेत्रंरणक्षेत्रमुपायांभर
तर्षभ ७९ तेहयाश्चोदितास्तेनसूतेनपरमाहवे ॥ अवहन्मांभृशंराजन्मनोमारुतरंहसः ८० गत्वाऽहंतत्कुरुक्षेत्रंसचरामःप्रतापवान् ॥ युद्धायसहसाराजन्परा
क्रांतौपरस्परम् ८१ ततःसंदर्शनेऽतिष्ठंरामस्यातितपस्विनः ॥ प्रगृह्यशंखप्रवरंततःप्राधममुत्तमम् ८२ ततस्तत्रद्विजाराजंस्तापसाश्चवनौकसः ॥ अपश्यंत
रणंदिव्यंदेवाःसेन्द्रगणास्तदा ८३ ततोदिव्यानिमाल्यानिप्रादुरासंस्ततस्ततः ॥ वादित्राणिचदिव्यानिमेघवृंदानिचैवह ८४ ततस्तेतापसाःसर्वेभार्गवस्यानुया
यिनः ॥ प्रेक्षकाःसमपद्यंतपरिवार्यरणाजिरम् ८५ ततोमामब्रवीद्देवीसर्वभूतहितैषिणी ॥ मातास्वरूपिणीराजन्किमिदंतेचिकीर्षितम् ८६ गत्वाहंजामदग्न्यं
तुम्प्रयाचिष्येकुरूद्वह ॥ भीष्मेणसहमायोत्सीःशिष्येणेतिपुनःपुनः ८७ मामैवंपुत्रनिर्बंधंकुरुविप्रेणपार्थिव ॥ जामदग्न्येनसमरेयोद्धुमित्येवभर्त्सयत् ८८ किंन
वैक्षत्रियहणोहरतुल्यपराक्रमः ॥ विदितःपुत्ररामस्तेयतस्तंयोद्धुमिच्छसि ८९ ततोहमब्रुवंदेवीमभिवाद्यकृतांजलिः ॥ सर्वंतद्भरतश्रेष्ठयथावृत्तंस्वयंवरे ९०
यथाचरामोराजेन्द्रमयापूर्वंप्रचोदितः ॥ काशिराजसुतायाश्चयथाकर्मपुरातनम् ९१ ततःसाराममभ्येत्यजननीमेमहानदी ॥ मदर्थंतमृषिंवीक्ष्यक्षमयामासभार्गव
म् ९२ भीष्मेणसहमायोत्सीःशिष्येणेतिवचोऽब्रवीत् ॥ सचतामाहयाचंतींभीष्ममेवनिवर्तय ॥ नचमेकुरुतेकाममित्यहंतमुपागमम् ९३ ॥ वैशंपायनउवाच ॥
ततोगंगासुतस्नेहाद्भीष्मंपुनरुपागमत् ॥ नचास्याश्चाकरोद्वाक्यंक्रोधपर्याकुलेक्षणः ९४ अथादृश्यतधर्मात्माभृगुश्रेष्ठोमहातपाः ॥ आह्वयामासचतदायुद्धायद्विजसत्त
मः ९५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिपरशुरामभीष्मयोःकुरुक्षेत्रावतरणेअष्टसप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ भीष्मउवाच ॥ तमहंस्मय
न्निवरणेप्रत्यभाषंव्यवस्थितम् ॥ भूमिष्ठंनोत्सहेयोद्धुंभवंतंरथमास्थितः १ आरोहस्यंदनंवीरकवचंचमहाभुज ॥ बधानसमरेरामयदियोद्धुंमयेच्छसि २ ततोमाम
ब्रवीद्रामःस्मयमानोरणाजिरे ॥ रथोमेमेदिनीभीष्मवाहावेदाःसदश्ववत् ३ सूतश्चमातरिश्वावैकवचंवेदमातरः ॥ सुसंवीतोरणेताभिर्योत्स्येऽहंकुरुनंदन ४ एवं
ब्रुवाणोगांधारेरामोमांसत्यविक्रमः ॥ शरव्रातेनमहतासर्वतःप्रत्यवारयत् ५ ततोऽपश्यंजामदग्न्यंरथमध्येव्यवस्थितम् ॥ सर्वायुधवरेश्रीमत्यद्भुतोपमदर्शने ६ मनसावि
हितेपुण्येविस्तीर्णेनगरोपमे ॥ दिव्याश्वयुजिसन्नद्धेकांचनेनविभूषिते ७ कवचेनमहाबाहोसोमार्ककृतलक्ष्मणा ॥ धनुर्धरोबद्धतूणोबद्धगोधांगुलित्रवान् ८

ण्विनीलकंठीये भारतभावदीपेअष्टसप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ तमिति। स्मयन्निवहसन्निव १ । २ । ३ वेदमातरोगायत्रीसावित्रीसरस्वत्यः ४ सव्यतिक्रमइतिपाठेलंघितक्रमः ५ अद्भुतोप
मंअभूतोपमंदर्शनंयस्यतस्मिन् ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ नतुतेजयमाशासेइत्युक्तिर्भूतिमिच्छतात्वयाप्रागेवमदभिवंदनस्यजयहेतोःकृतत्वादितिभावः तथैवमेतत्कुरुश्रेष्ठकर्तव्यंभूतिमिच्छतेत्यनेनसूचितं १७ । १८

सारथ्यंकृतवांस्तत्रयुयुत्सोरकृतव्रणः ॥ सखावेदविदत्यंतंदयितोभार्गवस्यह ९ आह्वयानःसमांयुद्धेमनोहर्षयतीवमे ॥ पुनःपुनरभिक्रोशन्नभियाहीतिभार्गवः
१० तमादित्यमिवोद्यंतमनाधृष्यंमहाबलम् ॥ क्षत्रियांतकरंराममेकमेकःसमासदम् ११ ततोऽहंबाणपातेषुत्रिषुवाहान्निगृह्यवै ॥ अवतीर्यधनुर्न्यस्यपदाति
र्ऋषिसत्तमम् १२ अभ्यागच्छंतदाराममर्चिष्यन्द्विजसत्तमम् ॥ अभिवाद्यचैनंविधिवदब्रुवंवाक्यमुत्तमम् १३ योत्स्येत्वयारणेराममसदृशेनाधिकेनवा ॥ गुरु
णाधर्मशीलेनजयमाशास्वमेविभो १४ ॥ रामउवाच ॥ एवमेतत्कुरुश्रेष्ठकर्तव्यंभूतिमिच्छता ॥ धर्मोह्येषमहाबाहोविशिष्टैःसहयुध्यताम् १५ शपेयंत्वां
नचेदेवमागच्छेथाविशांपते ॥ युध्यस्वत्वंरणेयत्तोधैर्यमालंब्यकौरव १६ नतुतेजयमाशासेत्वांविजेतुमहंस्थितः ॥ गच्छयुध्यस्वधर्मेणप्रीतोऽस्मिचरितेनते
१७ ततोऽहंतंनमस्कृत्यरथमारुह्यसत्वरः ॥ प्राध्मापयंरणेशंखंपुनर्हेमपरिष्कृतम् १८ ततोयुद्धंसमभवन्ममतस्यचभारत ॥ दिवसान्सुबहून्राजन्परस्परजिगी
षया १९ समेतस्मिन्रणेपूर्वंप्राहरत्कंकपत्रिभिः ॥ षष्ट्याशतैश्चनवभिःशराणांनतपर्वणाम् २० चत्वारस्तेनमेवाहाःसूतश्चैवविशांपते ॥ प्रतिरुद्धास्तथैवा
हंसमरेदंशितःस्थितः २१ नमस्कृत्यचदेवेभ्योब्राह्मणेभ्योविशेषतः ॥ तमहंस्मयन्निवरणेप्रत्यभाषंव्यवस्थितम् २२ आचार्यतामानितामेनिर्मर्यादेह्यपित्वयि
॥ भूयश्चशृणुमेब्रह्मन्संपदंधर्मसंग्रहे २३ येतेवेदाःशरीरस्थाब्राह्मण्यंयच्चतेमहत् ॥ तपश्चतेमहत्तप्तंनतेभ्यःप्रहराम्यहम् २४ प्रहारेक्षत्रधर्मस्ययंत्वंरामसमाश्रि
तः ॥ ब्राह्मणःक्षत्रियत्वंहियातिशस्त्रसमुद्यमात् २५ पश्यमेधनुषोवीर्यंपश्यबाह्वोर्बलंमम ॥ एषतेकार्मुकंवीरच्छिनद्मिनिशितेषुणा २६ तस्याहंनिशितंभल्लं
चिक्षेपभरतर्षभ ॥ तेनास्यधनुषःकोटिंछित्वाभूमावपातयम् २७ तथैवचपृषत्कानांशतानिनतपर्वणाम् ॥ चिक्षेपकंकपत्राणांजामदग्न्यरथंप्रति २८ कायेविष
क्तास्तुतदावायुनासमुदीरिताः ॥ चेलुःक्षरंतोरुधिरंनागाइवचतेशराः २९ क्षतजोक्षितसर्वांगःक्षरन्सरुधिरंरणे ॥ बभौरामस्तदाराजन्मेरुर्धातुमिवोत्सृजन् ३०
हेमंतान्तेऽशोकइवरक्तस्तबकमंडितः ॥ बभौरामस्तथाराजन्प्रफुल्लइवकिंशुकः ३१ ततोऽन्यद्धनुरादायरामःक्रोधसमन्वितः ॥ हेमपुंखान्सुनिशितान्शरांस्तान्
हिववर्षसः ३२ तेसमासाद्यमांरौद्राबहुधामर्मभेदिनः ॥ अकंपयन्महावेगाःसर्पानलविषोपमाः ३३ तमहंसमवष्टभ्यपुनरात्मानमाहवे ॥ शतसंख्यैःशरैः
क्रुद्धस्तदाराममवाकिरम् ३४ सतैरग्न्यर्कसंकाशैःशरैराशीविषोपमैः ॥ शितैरभ्यर्दितोरामोमंदचेताइवाभवत् ३५ ततोऽहंकृपयाऽऽविष्टोविष्टभ्यात्मानमा
त्मना ॥ धिग्धिगित्यब्रुवंयुद्धंक्षत्रधर्मंचभारत ३६

१९ । २० । २१ । २२ मेमयामानिता २३ । २४ । २५ । २६ चिक्षेपेतिपारोक्ष्यार्थेलिट्प्रयोगोहेलयाकृतत्वसूचनार्थः २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

॥१४२॥

३७ । ३८ । ३९ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे ऊनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥ ॥ आत्मनइति १ स्नातापवृत्तैःस्नातैःपरावृत्तैश्च २ । ३ । ४ । ५ सुतेजितान्सुष्ठुतीक्ष्णो

असकृच्चाब्रुवंराजन्शोकवेगपरिप्लुतः ॥ अहोबतकृतंपापंमयेदंक्षत्रधर्मणा ३७ गुरुर्द्विजातिर्धर्मात्मायदेवंपीडितःशरैः ॥ ततोनप्राहरंभूयोजामदग्न्यायभारत ३८
अथावताप्यपृथिवींपूषादिवससंक्षये ॥ जगामास्तंसहस्रांशुस्ततोयुद्धमुपारमत् ३९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणि रामभीष्मयुद्धेऊनाशीत्य
धिकशततमोऽध्यायः ॥ १७९ ॥ ॥ भीष्मउवाच ॥ आत्मनस्तुततःसूतोहयानांचविशांपते ॥ ममचापनयामासशल्यान्कुशलसंमतः १ स्नातापवृत्तैस्तुरगैर्ल
ब्धतोयैरविह्वलैः ॥ प्रभातेचोदितेसूर्येततोयुद्धमवर्तत २ दृष्ट्वामांतूर्णमायांतंदंशितंस्यंदनेस्थितम् ॥ अकरोद्रथमत्यर्थंरामःसज्जंप्रतापवान् ३ ततोऽहंराममायांतंदृष्ट्वा
समरकांक्षिणम् ॥ धनुःश्रेष्ठंसमुत्सृज्यसहसाऽवतरंरथात् ४ अभिवाद्यतथैवाहंरथमारुह्यभारत ॥ युयुत्सुर्जामदग्न्यस्यप्रमुखेवीतभीःस्थितः ५ ततोऽहंशरवर्षेणमहता
समवाकिरम् ॥ सचमांशरवर्षेणवर्षंतंसमवाकिरत् ६ संक्रुद्धोजामदग्न्यस्तुपुनरेवसुतेजितान् ॥ संप्रैषीन्मेशरान्घोरान्दीप्तास्यानुरगानिव ७ ततोऽहंनिशितैर्भल्लैःशतशोऽ
थसहस्रशः ॥ अच्छिदंसहसाराजन्नंतरिक्षेपुनःपुनः ८ ततस्त्वस्त्राणिदिव्यानिजामदग्न्यःप्रतापवान् ॥ मयिप्रयोजयामासतान्यहंप्रत्यषेधयम् ९ अस्त्रैरेवमहाबाहो
चिकीर्षन्नधिकांक्रियाम् ॥ ततोदिविमहान्नादःप्रादुरासीत्समंततः १० ततोऽहमस्त्रंवायव्यंजामदग्न्येप्रयुक्तवान् ॥ प्रत्याजघ्नेचतद्रामोगुह्यकास्त्रेणभारत ११ ततोऽहम
स्त्रमाग्नेयमनुमंत्र्यप्रयुक्तवान् ॥ वारुणेनैवतद्रामोवारयामासमेविभुः १२ एवमस्त्राणिदिव्यानिरामस्याहमवारयम् ॥ रामश्चममतेजस्वीदिव्यास्त्रविदरिंदमः १३ ततो
मांसव्यतोराजन्रामःकुर्वन्द्विजोत्तमः ॥ उरस्यविध्यत्संक्रुद्धोजामदग्न्यःप्रतापवान् १४ ततोऽहंभरतश्रेष्ठसंन्यषीदंरथोत्तमे ॥ ततोमांकश्मलाविष्टंसूतस्तूर्णमुदावहत्
१५ ग्लायंतंभरतश्रेष्ठरामबाणप्रपीडितम् ॥ ततोमामपयातंवैभृशंविद्धमचेतसम् १६ रामस्यानुचराहृष्टाःसर्वेदृष्ट्वाविचुक्रुशुः ॥ अकृतव्रणप्रभृतयःकाशिकन्याचभारत
१७ ततस्तुलब्धसंज्ञोऽहंज्ञात्वासूतमथाब्रुवम् ॥ याहिसूतयतोरामःसज्जोऽहंगतवेदनः १८ ततोमामवहत्सूतोहयैःपरमशोभितैः ॥ नृत्यद्भिरिवकौरव्यमारुतप्रतिमै
र्गतौ १९ ततोऽहंराममासाद्यबाणवर्षैश्चकौरव ॥ अवाकिरंसुसंरब्धःसंरब्धंचजिगीषया २० तानापततएवासौरामोबाणानजिह्मगान् ॥ बाणैरेवाच्छिनत्तूर्णमेकैकं
त्रिभिराहवे २१ ततस्तेसूदिताःसर्वेममबाणाःसुसंशिताः ॥ रामबाणैर्द्विधाच्छिन्नाःशतशोऽथसहस्रशः २२ ततःपुनःशरंदीप्तंसुप्रभंकालसंमितम् ॥ असृजंजामदग्न्या
यरामायाहंजिघांसया २३ तेनत्वभिहतोगाढंबाणवेगवशंगतः ॥ मुमोहसमरेरामोभूमौचनिपपातह २४ ततोहाहाकृतंसर्वंरामेभूतलमाश्रिते ॥ जगद्भारतसंविग्नंयथार्क
पतनेभवेत् २५ ततएनंसमुद्विग्नाःसर्वएवाभिदुद्रुवुः ॥ तपोधनास्तेसहसाकाश्याचकुरुनंदन २६

कृतान् ६ । ७ । ८ । ९ । १० । ११ । १२ १३ । १४ । १५ । १६ । १७ । १८ । १९ २० । २१ । २२ । २३ । २४ । २५ । २६

 २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ ॥ ॥ 

॥१४३॥ ततएनंपरिष्वज्यशनैराश्वासयंस्तदा ॥ पाणिभिर्जलशीतैश्चजयाशीर्भिश्चकौरव २७ ततःसविह्वलंवाक्यंरामउत्थायचाब्रवीत् ॥ तिष्ठभीष्महतोऽसीतिबाणंसंधाय
कार्मुके २८ समुक्तोन्यपतत्तूर्णंसव्येपार्श्वेमहाहवे ॥ येनाहंभ्रशमुद्विग्नोव्याघूर्णितइवद्रुमः २९ हत्वाहयांस्ततोरामःशीघ्रास्त्रेणमहाहवे ॥ अवाकिरन्मांविस्रब्धोबाणै अ०
स्तैर्लोमवाहिभिः ३० ततोऽहमपिशीघ्रास्त्रंसमरप्रतिवारणम् ॥ अवासृजंमहाबाहोतेऽन्तराधिष्ठिताःशराः ३१ रामस्यममचैवाशुव्योमावृत्यसमंततः ॥ नस्मसूर्यःप्रत १८१
पतिशरजालसमावृतः ३२ मातरिश्वाततस्तस्मिन्मेघरुद्धइवाभवत् ॥ ततोवायोःप्रकंपाच्चसूर्यस्यचगभस्तिभिः ३३ अभिघातप्रभावाच्चपावकःसमजायत ॥ तेशराः
स्वसमुत्थेनप्रदीप्ताश्चित्रभानुना ३४ भूमौसर्वेतदाराजन्भस्मभूताःप्रपेदिरे ॥ तदाशतसहस्राणिप्रयुतान्यर्बुदानिच ३५ अयुतान्यथखर्वाणिनिखर्वाणिचकौरव ॥ रामः
शराणांसंक्रुद्धोमयितूर्णंन्यपातयत् ३६ ततोऽहंतानपिरणेशरैराशीविषोपमैः ॥ संछिद्यभूमौनृपतेपातयेयंनगानिव ३७ एवंतदभवद्युद्धंतदाभरतसत्तम ॥ संध्याकाले
व्यतीतेतुव्यपायात्सचमेगुरुः ३८ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणि रामभीष्मयुद्धेअशीत्यधिकशततमोध्यायः ॥ १८० ॥ ॥ ॥
॥ भीष्मउवाच ॥ समागतस्यरामेणपुनरेवातिदारुणम् ॥ अन्येद्युस्तुमुलंयुद्धंतदाभरतसत्तम १ ततोदिव्यास्त्रविच्छूरोदिव्यान्यस्त्राण्यनेकशः ॥ अयोजयत्सधर्मात्मा
दिवसेदिवसेविभुः २ तान्यहंतत्प्रतीघातैरस्त्रैरस्त्राणिभारत ॥ व्यधमंतुमुलेयुद्धेप्राणांस्त्यक्त्वासुदुस्त्यजान् ३ अस्त्रैरस्त्रेषुबहुधाहतेष्वेवचभारत ॥ अक्रुध्यतमहातेजास्त्यक्त
प्राणःससंयुगे ४ ततःशक्तिंप्राहिणोद्घोररूपामस्त्रैरुद्धेजामदग्न्योमहात्मा ॥ कालोत्सृष्टांप्रज्वलितामिवोल्कांसंदीप्ताग्रांतेजसाव्याप्यलोकम् ५ ततोऽहंतामिषुभिर्दीप्य
मानांसमायांतीमंतकालार्कदीप्ताम् ॥ छित्वात्रिधापातयामासभूमौततोववौपवनःपुण्यगंधिः ६ तस्यांछिन्नायांक्रोधदीप्तोऽथरामःशक्तीर्घोराःप्राहिणोद्द्वादशान्याः ॥
तासांरूपंभारतनोतशक्यंतेजस्वित्वाल्लाघवाच्चैववक्तुम् ७ किंत्वेवाहंविह्वलःसंप्रदृश्यदिग्भ्यःसर्वास्तामहोल्काइवाग्नेः ॥ नानारूपास्तेजसोग्रेणदीप्तायथाऽऽदित्या
द्वादशलोकसंक्षये ८ ततोजालंबाणमयंविवृत्तंसंदृश्यभित्त्वाशरजालेनराजन् ॥ द्वादशेषून्प्राहिणवंरणेऽहंततःशक्तीरप्यधमंघोररूपाः ९ ततोराजन्जामद
ग्न्योमहात्माशक्तीर्घोराव्याक्षिपद्धेमदंडाः ॥ विचित्रिताःकांचनपट्टनद्धायथामहोल्काज्वलितास्तथाताः १० ताश्चाप्युग्राश्चर्मणावारयित्वाखड्गेनाजौपात
यित्वानरेन्द्र ॥ बाणैर्दिव्यैर्जामदग्न्यस्यसंख्येदिव्यानश्वानभ्यवर्षंससूतान् ११ निर्मुक्तानांपन्नगानांसरूपादृष्ट्वाशक्तीर्हेमचित्रानिकृत्ताः ॥ प्रादुश्चक्रेदिव्यमस्त्रं
महात्माक्रोधाविष्टोहैहयेशप्रमाथी १२ ॥१४३॥

समागतस्येति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ निकृत्ताःछिन्नाः हैहयेशप्रमाथीकार्तवीर्यस्यहंता १२

१.३ शरकृत्तःबाणैश्छिन्नः १.४ । १.५ अस्तंमहीध्रं अस्ताचलं १.६ ॥ इतिश्रीमहाभारते उद्योगपर्वणिनीलकंठीये भारतभावदीपे एकाशीत्यधिकशततमोऽध्यायः ॥ १.८१ ॥ ततइति १. अभ्रांतेमेघ

ततःश्रेण्यःशलभानामिवोग्राःसमापेतुर्विशिखानांप्रदीप्ताः ॥ समाचिनोच्चापिभृशंशरीरंहयान्सूतंसरथंचैवमह्यम् १३ रथःशरैर्मेनिचितःसर्वतोऽभूत्तथावाहाःसार
थिश्चैवराजन् ॥ युगंरथेषांचतथैवचक्रेतथैवाक्षःशरकृत्तोऽथभग्नः १४ ततस्तस्मिन्बाणवर्षेव्यतीतेशरौघेणप्रत्यवर्षंगुरुंतम् ॥ सविक्षतोमार्गणैर्ब्रह्मराशिर्देहादसक्तं
मुमुचेभूरिरक्तम् १५ यथारामोबाणजालाभितप्तस्तथैवाहंसुभृशंगाढविद्धः ॥ ततोयुद्धंव्यरमच्चापराण्हेभानावस्तंप्रतियातेमहीध्रम् १६ ॥ इतिश्रीमहाभारतेउद्यो
गपर्वणिअंबोपाख्यानपर्वणिएकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ भीष्मउवाच ॥ ततःप्रभातेराजेन्द्रसूर्येविमलतांगते ॥ भार्गवस्यमयासार्धंपुनर्युद्ध
मवर्तत १ ततोऽभ्रांतेरथेतिष्ठन्रामःप्रहरतांवरः ॥ ववर्षशरजालानिमयिमेघइवाचले २ ततःसूतोममसुहृच्छरवर्षेणताडितः ॥ अपयातोरथोपस्थान्मनोममवि
षादयन् ३ ततःसूतोममात्यर्थंकश्मलंप्राविशन्महत् ॥ पृथिव्यांचशराघातान्निपपातमुमोहच ४ ततःसूतोऽजहात्प्राणान्रामबाणप्रपीडितः ॥ मुहूर्तादिव
राजेंद्रमांचभीराविशत्तदा ५ ततःसूतेहतेतस्मिन्क्षिपतस्तस्यमेशरान् ॥ प्रमत्तमनसोरामःप्राहिणोन्मृत्युसंमितम् ६ ततःसूतव्यसनिनंविप्लुतंमांसभार्गवः ॥ श
रेणाभ्यहनद्गाढंविकृष्यबलवद्धनुः ७ समेभुजांतरेराजन्निपत्यरुधिराशनः ॥ मयैवसहराजेन्द्रजगामवसुधातलम् ८ मत्वातुनिहतंरामस्ततोमांभरतर्षभ ॥ मेघ
वद्विननादोच्चैर्जहृषेचपुनःपुनः ९ तथातुपतितेराजन्मयिरामोमुदायुतः ॥ उदक्रोशन्महानादंसहतैरनुयायिभिः १० ममतत्राभवन्येतुकुरवःपार्श्वतःस्थिताः ॥
आगताअपियुद्धंतज्जनास्तत्रदिदृक्षवः ॥ आर्तिंपरमिकांजग्मुस्तेतदापतितेमयि ११ ततोपश्यंपतितोराजसिंहद्विजानष्टौसूर्यहुताशनाभान् ॥ तेमांसमंतात्परिवा
र्यतस्थुःस्वबाहुभिःपरिधार्याजिमध्ये १२ रक्ष्यमाणश्चतैर्विप्रैर्नाहंभूमिमुपास्पृशम् ॥ अंतरिक्षेधृतोह्यस्मितैर्विप्रैर्बांधवैरिव १३ श्वसन्निवांतरिक्षेचजलबिंदुभिरुक्षितः ॥
ततस्तेब्राह्मणाराजन्नब्रुवन्परिगृह्यमाम् १४ माभैरितिसमंसर्वेस्वस्तितेऽस्त्वितिचासकृत् ॥ ततस्तेषामहंवाग्भिस्तर्पितःसहसोत्थितः ॥ मातरंसरितांश्रेष्ठामपश्यंरथमा
स्थिताम् १५ हयाश्चमेसंगृहीतास्तयाऽऽसन्महानद्यासंयतिकौरवेंद्र ॥ पादौजनन्याःप्रतिगृह्यचाहंतथापितॄणांरथमभ्यरोहम् १६ ररक्षसामांसरथंहयांश्चोपस्क
राणिच ॥ तामहंप्रांजलिर्भूत्वापुनरेवव्यसर्जयम् १७ ततोऽहंस्वयमुद्यम्यहयांस्तान्वातरंहसः ॥ अयुध्यंजामदग्न्येननिवृत्तेऽहनिभारत १८ ततोऽहंभरतश्रेष्ठवे
गवंतंमहाबलम् ॥ अमुंचंसमरेबाणंरामायहृदयच्छिदम् १९ ततोजगामवसुधांममबाणप्रपीडितः ॥ जानुभ्यांधनुरुत्सृज्यरामोमोहवशंगतः २० ततस्तस्मिन्निपति
तेरामेभूरिसहस्रदे ॥ आवव्रुर्जलदाव्योमक्षरंतोरुधिरंबहु २१ उल्काश्चशतशःपेतुःसनिर्घाताःसकंपनाः ॥ अर्कंचसहसादीप्तंस्वर्भानुरभिसंवृणोत् २२

मंडलसमीपे २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ द्विजान्ब्राह्मणरूपधरान्वसून् १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० भूरिसहस्रदेस्वर्णसहस्राणांदातरि ।
'भूरिर्नावासुदेवेचहरेचपरमेष्ठिनि । नपुंसकंसुवर्णेचप्राज्येस्याद्वाच्यलिंगके' इतिमेदिनी २१ सकंपनाः सविद्युतः २२

बलाःबलाकाः २३ । २४ । २५ विह्वलःव्याकुलः क्रोधावेशादेववृद्धिमतः २६ बलसंनिभंगधकरसवत् । ' बलंगंधरसरूपे ' इतमेदिनी मायमन्त्रिमित्तं आददानंशरमितिशेषः शरंमय्याददानमिति पाठांतरम् २७ मेमयिअहरवत्संहृतवान्मुनीनांवाक्यादित्यर्थः २८ मंत्रमयाःमरीचयोमंडलंचयस्यसतथा । तथाचश्रुतिः । ' सैषात्रय्येवविद्यातपतीति ' प्रत्यवहारयावःसमाप्तंकृतवंतौआवामितिशेषः



ववुश्चवाताःपरुषाश्चलिताचवसुंधरा ॥ गृध्राबलाश्चकंकाश्चपरिपेतुर्मुदायुताः २३ दीप्तायांदिशिगोमायुर्दारुणंमुहुरुन्नदत् ॥ अनाहतादुंदुभयोविनेदुर्भृशनिः



स्वनाः २४ एतदौत्पातिकंसर्वंघोरमासीद्भयंकरम् ॥ विसंज्ञकल्पेधरणींगतेसमेमहात्मनि २५ ततोवैसहसोत्थायरामोमामभ्यवर्तत ॥ पुनर्युद्धायकौरव्यवि
ह्वलःक्रोधमूर्छितः २६ आददानोमहाबाहुःकार्मुकंबलसंनिभम् ॥ ततोमय्याददानंतंराममेवन्यवारयन् ॥ २७ महर्षयःकृपायुक्ताःक्रोधाविष्टोऽथभार्गवः ॥ स
मेऽहरदमेयात्माशरंकालानलोपमम् २८ ततोरविर्मंत्रमरीचिमंडलोजगामास्तंपांसुपुंजावगूढः ॥ निशाव्यगाहत्सुखशीतमारुतातत्तोयुद्धंप्रत्यवहारयावः २९ एवं
राजन्नवहारोबभूवततःपुनर्विमलेऽभूत्सुघोरम् ॥ कल्यंकल्यंविंशतिंवैदिनानितथैवचान्यानिदिनानित्रीणि ३० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानप
र्वणिरामभीष्मयुद्धेद्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥ ॥ ॥ भीष्मउवाच ॥ ततोऽहंनिशिराजेन्द्रप्रणम्यशिरसातदा ॥ ब्राह्मणानांपितॄणांचदे
वतानांचसर्वशः १ नक्तंचराणांभूतानांराजन्यानांविशांपते ॥ शयनंप्राप्यरहितेमनसासमचिंतयम् २ जामदग्न्येनमेयुद्धमिदंपरमदारुणम् ॥ अहानिचबहून्यद्य
वर्ततेसुमहात्ययम् ३ नचरामंमहावीर्यंशक्तोमिरणमूर्धनि ॥ विजेतुंसमरेविप्रंजामदग्न्यंमहाबलम् ४ यदिशक्योमयाजेतुंजामदग्न्यःप्रतापवान् ॥ दैवतानिप्रसन्नानि
दर्शयंतुनिशांमम ५ ततोनिशिचराजेन्द्रप्रसुप्तःशरविक्षतः ॥ दक्षिणेनहपार्श्वेनप्रभातसमयेतदा ६ ततोऽहंविप्रमुख्यैस्तैर्यैरस्मिपतितोरथात् ॥ उत्थापितोधृतश्चैव
माभैरितिचसांत्वितः ७ तएवम्मांमहाराजस्वप्नदर्शनमेत्यवै ॥ परिवार्याब्रुवन्वाक्यंतन्निबोधकुरूद्वह ८ उत्तिष्ठमाभैर्गांगेयनभयंतेऽस्तिकिंचन ॥ रक्षामहेत्वांकौरव्य
स्वशरीरंहिनोभवान् ९ नत्वांरामोरणेजेताजामदग्न्यःकथंचन ॥ त्वमेवसमरेरामंविजेताभरतर्षभ १० इदमस्त्रंसुदयितंप्रत्यभिज्ञास्यतेभवान् ॥ विदितंहितवाप्येतत्पूर्व
स्मिन्देहधारणे ११ प्राजापत्यंविश्वकृतंप्रस्वापंनामभारत ॥ नहीदंवेदरामोऽपिपृथिव्यांवापुमान्क्वचित् १२ तत्स्मरस्वमहाबाहोभृशंसंयोजयस्वच ॥ उपस्थास्यति
राजेन्द्रस्वयमेवतवानघ १३ येनसर्वान्महावीर्यान्प्रशासिष्यसिकौरव ॥ नचरामःक्षयंगंतातेनास्त्रेणनराधिप १४ एनसानतुसंयोगंप्राप्स्यसेजातुमानद ॥ स्व
प्स्यतेजामदग्न्योऽसौत्वद्बाणबलपीडितः १५ ततोजित्वात्वमेवैनंपुनरुत्थापयिष्यसि ॥ अस्त्रेणदयितेनाजौभीष्मसंबोधनेनवै १६ एवंकुरुष्वकौरव्यप्रभातेरथमा
स्थितः ॥ प्रसुप्तंवामृतंवेतितुल्यंमन्यामहेवयम् १७

२९ विमलेदिवसेत्रितमसीत्यर्थः कल्यंकल्यंप्रातःप्रातः ३० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥ ॥ ततोऽहमिति १ रहितेएकांते २ । ३ । ४ निशांनिशि दर्शयंतुआत्मानंप्रकाशयंतु ५ । ६ । ७ । ८ । ९ । १० प्रत्यभिज्ञापरिचयस्तंप्राप्स्यसेपूर्वस्मिन्वसुभावे ११ । १२ । १३ । १४ । १५ । १६ । १७

१८ । १९ ॥ इतिश्रीउद्योगपर्वणिनीलकंठीये भारतभावदीपे त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ ॥ ॥ ततइति १ । २ । ३ ४ । ५ धिष्ण्यंनक्षत्रं । ' धिष्ण्यंस्थानाग्नि

नचरामेणमर्त्यंकदाचिदपिपार्थिव ॥ ततःसमुत्पन्नमिदंप्रस्वापंयुज्यतामिति १८ इत्युक्त्वांऽतर्हिताराजन्सर्वएवद्विजोत्तमाः ॥ अष्टौसदृशरूपास्तेसर्वेभास्वर
मूर्तयः १९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिभीष्मप्रस्वापनास्त्रलाभेत्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ ॥ भीष्मउवाच ॥
ततोरात्रौव्यतीतायांप्रतिबुद्धोऽस्मिभारत ॥ ततःसंचिंत्यवैस्वप्नमवापंहर्षमुत्तमम् १ ततःसमभवद्युद्धंममतस्यचभारत ॥ तुमुलंसर्वभूतानांलोमहर्षणमद्भुतम् २
ततोबाणमयंवर्षंववर्षमयिभार्गवः ॥ न्यवारयमहंतच्चशरजालेनभारत ३ ततःपरमसंक्रुद्धःपुनरेवमहातपाः ॥ ह्यस्तनेनचकोपेनशक्तिंवैप्राहिणोन्मयि ४ इंद्रा
शनिसमस्पर्शांयमदंडसमप्रभाम् ॥ ज्वलंतीमग्निवत्संख्येलेलिहानांसमंततः ५ ततोभरतशार्दूलधिष्ण्यमाकाशगंयथा ॥ समामभ्यवधीत्तूर्णंजत्रुदेशेकुरूद्वह ६
अथासृग्मस्रवद्घोरंगिरेर्गैरिकधातुवत् ॥ रामेणसुमहाबाहोक्षतस्यक्षतजेक्षण ७ ततोऽहंजामदग्न्यायभृशंक्रोधसमन्वितः ॥ चिक्षेपमृत्युसंकाशंबाणंसर्पविषोपमम्
८ सतेनाभिहतोवीरोललाटेद्विजसत्तमः ॥ अशोभतमहाराजसशृंगइवपर्वतः ९ ससंरब्धःसमावृत्त्यशरंकालांतकोपमम् ॥ संदधेबलवत्कृष्यघोरंशत्रुनिबर्हणम्
१० सवक्षसिपपातोग्रःशरोव्यालइवश्वसन् ॥ महींराजंस्ततश्चाहमगमंरुधिराविलः ११ संप्राप्यतुपुनःसंज्ञांजामदग्न्यायधीमते ॥ प्राहिण्वंविमलांशक्तिंज्वलंती
मशनीमिव १२ सातस्यद्विजमुख्यस्यनिपपातभुजांतरे ॥ विह्वलश्चाभवद्राजन्वेपथुश्चैनमाविशत् १३ ततएनंपरिष्वज्यसखाविप्रोमहातपाः ॥ अकृतव्रणःशु
भैर्वाक्यैराश्वासयदनेकधा १४ समाश्वस्तस्ततोरामःक्रोधामर्षसमन्वितः ॥ प्रादुश्चक्रेतदाब्राह्मंपरमास्त्रंमहाव्रतः १५ ततस्तत्प्रतिघातार्थंब्राह्ममेवास्त्रमुत्तमम् ॥
मयाप्रयुक्तंजज्वालयुगांतमिवदर्शयत् १६ तयोर्ब्रह्मास्त्रयोरासीदंतरावैसमागमः ॥ असंप्राप्यैवरामंचमांचभारतसत्तम १७ ततोव्योम्निप्रादुरभूत्तेजएवहिकेवलम्
भूतानिचैवसर्वाणिजग्मुरार्तिंविशांपते १८ ऋषयश्चसगंधर्वादेवताश्चैवभारत ॥ संतापंपरमंजग्मुरस्त्रतेजोभिपीडिताः १० ततश्चचालपृथिवीसपर्वतवनद्रुमा ॥
संतप्तानिचभूतानिविषादंजग्मुरुत्तमम् २० प्रजज्वालनभोराजन्धूमायंतेदिशोदश ॥ नस्थातुमंतरिक्षेचशेकुराकाशगास्तदा २१ ततोहाहाकृतेलोकेसदेवासुररा
क्षसे ॥ इदमंतरमित्येवंमोक्तुकामोऽस्मिभारत २२ प्रस्वापमस्त्रंत्वरितोवचनाद्ब्रह्मवादिनाम् ॥ विचित्रंचतदस्त्रंमेमनसिप्रत्यभात्तदा २३ ॥ इतिश्रीमहाभारते
उद्योगपर्वणिअंबोपाख्यानपर्वणिपरस्परब्रह्मास्त्रप्रयोगे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ ॥ ॥ ॥ ॥ ॥

सत्रम्ग् । शक्तावृक्षेच ' इतिमेदिनी जत्रुदेशेकंठकक्षयोरंतराले ६ असृंशोणितं पाठांतरेऽसृगपितदेव ७ । ८ । ९ कृष्यआकृष्य १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९
२० । २१ । २२ । २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिनीलकण्ठीये भारतभावदीपे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततइति। दिविदेवानामितिशेषः १ । २ । ३ । ४ । ५ । ६ चक्रेकृतवानहं ७ हेभीष्म सुमंदबुद्धिरहंजितोऽस्मीतिसंबंधः ८ । ९ । १० । ११ । १२ । १३ । १४ देवैर्निवारितः

॥ भीष्मउवाच ॥ ततोहलहलाशब्दोदिविराजन्महानभूत् ॥ प्रस्वापंभीष्ममास्त्राक्षीरितिकौरवनंदन १ अयुंजमेवचैवाहंतदस्त्रंभृगुनंदने ॥ प्रस्वापंमांप्रयुंजा
नंनारदोवाक्यमब्रवीत् २ एतेवियतिकौरव्यदिविदेवगणाःस्थिताः ॥ तेत्वांनिवारयंत्यद्यप्रस्वापंमाप्रयोजय ३ रामस्तपस्वीब्रह्मण्योब्राह्मणश्चगुरुश्चते ॥ तस्याव
मानंकौरव्यमास्मकार्षीःकथंचन ४ ततोऽपश्यंदिविष्ठान्वैतानष्टौब्रह्मवादिनः ॥ तेमांस्मयंतोराजेन्द्रशनकैरिदमब्रुवन् ५ यथाऽऽहभरतश्रेष्ठनारदस्तत्तथाकुरु ॥ ए
तद्धिपरमंश्रेयोलोकानांभरतर्षभ ६ ततश्चप्रतिसंहृत्यतदस्त्रंस्वापनंमहत् ॥ ब्रह्मास्त्रंदीपयांचक्रेतस्मिन्युधियथाविधि ७ ततोरामोहृषितोराजसिंहदृष्ट्वातदस्त्रंविनिव
र्तितंवै ॥ जितोऽस्मिभीष्मेहसुमंदबुद्धिरित्येववाक्यंसहसाव्यमुंचत् ८ ततोऽपश्यत्पितरंजामदग्न्यःपितुस्तथापितरंचास्यमान्यम् ॥ तेतत्रचैनंपरिवार्यतस्थुरूचु
श्चैनंसांत्वपूर्वंतदानीम् ९ ॥ पितरऊचुः ॥ मास्मैवंसाहसंतातपुनःकार्षीःकथंचन ॥ भीष्मेणसंयुगंगंतुंक्षत्रियेणविशेषतः १० क्षत्रियस्यतुधर्मोऽयंयद्युद्धंभृगुनंदन ॥
स्वाध्यायोव्रतचर्याऽथब्राह्मणानांपरंधनम् ११ इदंनिमित्तेकस्मिंश्चिदस्माभिःप्रागुदाहृतम् ॥ शस्त्रधारणमत्युग्रंतच्चाकार्यंकृतंत्वया १२ वत्सपर्याप्तमेतावद्भीष्मेण
सहसंयुगे ॥ विमर्दस्तेमहाबाहोव्यपयाहिरणादितः १३ पर्याप्तमेतद्भद्रंतेतवकार्मुकधारणम् ॥ विसर्जयैतद्दुर्धर्षतपस्तप्यस्वभार्गव १४ एषभीष्मःशांतनवोदेवैः
सर्वैर्निवारितः ॥ निवर्तस्वरणादस्मादितिचैवप्रसादितः १५ रामेणसहमायोत्सीर्गुरुणेतिपुनःपुनः ॥ नहिरामोरणेजेतुंत्वयान्याय्यःकुरूद्वह १६ मानंकुरुष्वगां
गेयब्राह्मणस्यरणाजिरे ॥ वयंतुगुरवस्तुभ्यंतस्मात्त्वांवारयामहे १७ भीष्मोवसूनामन्यतमोदिष्ट्याजीवसिपुत्रक ॥ गांगेयःशांतनोःपुत्रोवसुरेषमहायशाः १८ क
थंशक्यस्त्वयाजेतुंनिवर्तस्वेहभार्गव ॥ अर्जुनःपांडवश्रेष्ठःपुरंदरसुतोबली १९ नरःप्रजापतिर्वीरःपूर्वदेवःसनातनः ॥ सव्यसाचीतिविख्यातस्त्रिषुलोकेषुवीर्यवान् ॥
भीष्ममृत्युर्यथाकालंविहितोवैस्वयंभुवा २० ॥ भीष्मउवाच ॥ एवमुक्तःसपितृभिःपितॄन्रामोऽब्रवीदिदम् ॥ नाहंयुधिनिवर्तेयमितिमेव्रतमाहितम् २१ ननिवर्ति
तपूर्वश्चकदाचिद्रणमूर्धनि ॥ निवर्त्यतामापगेयःकामंयुद्धात्पितामहाः २२ नत्वहंविनिवर्तिष्येयुद्धादस्मात्कथंचन ॥ ततस्तेमुनयोराजन्नृचीकप्रमुखास्तदा २३ नार
देनैवसहिताःसमागम्येदमब्रुवन् ॥ निवर्तस्वरणात्तातमानयस्वद्विजोत्तमम् २४ इत्यवोचमहंतांश्चक्षत्रधर्मव्यपेक्षया ॥ ममव्रतमिदंलोकेनाहंयुद्धात्कदाचन २५ विमु
खोविनिवर्तेयंपृष्ठतोऽभ्याहतःशरैः ॥ नाहंलोभान्नकार्पण्यान्नभयान्नार्थकारणात् २६ त्यजेयंशाश्वतंधर्ममितिमेनिश्चितामतिः ॥ ततस्तेमुनयःसर्वेनारदप्रमुखान्नृप ॥
२७ भागीरथीचमेमातारणमध्यंप्रपेदिरे ॥ तथैवात्तशरोधन्वीतथैवदृढनिश्चयः ॥ स्थिरोऽहमाहवेयोद्धुंततस्तेराममब्रुवन् २८

इत्येतदेवाहुःनिवर्तस्वेति १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ २३ । २४ । २५ । २६ । २७ । २८

शाम्यशांतोभव २९ । ३० न्यासयांचक्रिरेत्याजितवंतः ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेपंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ प्रत्यक्षमिति

समेत्यसहिताभूयःसमरेभृगुनंदनम् ॥ नावनीतंहिहृदयंविप्राणांशाम्यभार्गव २९ रामरामनिवर्तस्वयुद्धादस्माद्द्विजोत्तम ॥ अवध्योवैत्वयाभीष्मस्त्वंचभीष्म
स्यभार्गव ३० एवंब्रुवंतस्तेसर्वेप्रतिरुध्यरणाजिरम् ॥ न्यासयांचक्रिरेशस्त्रंपितरोभृगुनंदनम् ३१ ततोऽहंपुनरेवाथतानष्टौब्रह्मवादिनः ॥ अद्राक्षंदीप्यमाना
न्वैग्रहानष्टाविवोदितान् ३२ तेमांसप्रणयंवाक्यमब्रुवन्समरेस्थितम् ॥ प्रैहिरामंमहाबाहोगुरुंलोकहितंकुरु ३३ दृष्ट्वानिवर्तितंरामंसुहृद्वाक्येनतेनवै ॥ लो
कानांचहितंकुर्वन्नहमप्याददेवचः ३४ ततोऽहंराममासाद्यववंदेभृशविक्षतः ॥ रामश्चाभ्युत्स्मयन्प्रेम्णामामुवाचमहातपाः ३५ त्वत्समोनास्तिलोकेऽस्मिन्क्ष
त्रियःपृथिवीचरः ॥ गम्यतांभीष्मयुद्धेऽस्मिंस्तोषितोऽहंभृशंत्वया ३६ ममचैवसमक्षंतांकन्यामाहूयभार्गवः ॥ उक्तवान्दीनयावाचामध्येतेषांमहात्मनाम् ३७
॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणियुद्धनिवृत्तौपंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ ॥ ॥ रामउवाच ॥ प्रत्यक्षमे
तल्लोकानांसर्वेषामेवभाविनि ॥ यथाशक्त्यामयायुद्धंकृतंवैपौरुषंपरम् १ नचैवमपिशक्नोमिभीष्मंशस्त्रभृतांवरम् ॥ विशेषयितुमत्यर्थमुत्तमास्त्राणिदर्शयन् २
एषामेपरमाशक्तिरेतन्मेपरमंबलम् ॥ यथेष्टंगम्यतांभद्रेकिमन्यद्वाकरोमिते ३ भीष्ममेवप्रपद्यस्वनतेन्याविद्यतेगतिः ॥ निर्जितोह्यस्मिभीष्मेणमहास्त्राणिप्रमुंचता ४
एवमुक्त्वाततोरामोविनिःश्वस्यमहामनाः ॥ तूष्णीमासीत्ततःकन्याप्रोवाचभृगुनंदनम् ५ भगवन्नेवमेवैतद्यथाऽऽहभगवांस्तथा ॥ अजेयोयुधिभीष्मोऽयमपिदे
वैरुदारधीः ६ यथाशक्तियथोत्साहंममकार्यंकृतंत्वया ॥ अनिवार्यंरणेवीर्यमस्त्राणिविविधानिच ७ नचैवशक्यतेयुद्धेविशेषयितुमंततः ॥ नचाहमेनंयास्या
मिपुनर्भीष्मंकथंचन ८ गमिष्यामितुतत्राहंयत्रभीष्मंतपोधन ॥ समरेपातयिष्यामिस्वयमेवभृगूद्वह ९ एवमुक्त्वाययौकन्यारोषव्याकुललोचना ॥ तापस्ये
धृतसंकल्पासामेचिंतयतीवधम् १० ततोमहेंद्रंसहितैर्मुनिभिर्भृगुसत्तमः ॥ यथागतंतथासोऽगान्मामुपामंत्र्यभारत ११ ततोरथंसमारुह्यस्तूयमानोद्विजातिभिः
॥ प्रविश्यनगरंमात्रेसत्यवत्यैन्यवेदयम् १२ यथावृत्तंमहाराजसाचमांप्रत्यनंदत ॥ पुरुषांश्चादिशंप्राज्ञान्कन्यावृत्तांतकर्मणि १३ दिवसेदिवसेह्यस्यागतिजल्पि
तचेष्टितम् ॥ प्रत्याहरंश्चमेयुक्ताःस्थिताःप्रियहितेसदा १४ यदैवहिवनंप्रायात्साकन्यातपसेधृता ॥ तदैवव्यथितोदीनोगतचेताइवाभवम् १५ नहिमांक्षत्रियःक
श्चिद्वीर्येणव्यजयद्युधि ॥ ऋतेब्रह्मविदस्ताततपसासंशितव्रतात् १६ अपिचैतन्मयाराजन्नारदेऽपिनिवेदितम् ॥ व्यासेचैवतथाकार्यंतौचोभौमामवोचताम् १७ नविषा
दस्त्वयाकार्योभीष्मकाशिसुतांप्रति १८ दैवंपुरुषकारेणकोनिवर्तितुमुत्सहेत् ॥ साकन्यातुमहाराजप्रविश्याश्रममंडलम् ॥ यमुनातीरमाश्रित्यतपस्तेपेऽतिमानुषम् १९

१ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ अस्याः काशिराजकन्यायाः १४ । १५ । १६ । १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ वार्षिकीवर्षास्वेववहतीतिवार्षिकी ३४ । ३५ । ३६ । ३७ । ३८ पतितागता परिधावंतीपर्यटंती ३९

निराहाराकृशारुक्षाजटिलामलपंकिनी ॥ षण्मासान्वायुभक्षाचस्थाणुभूतातपोधना २० यमुनाजलमाश्रित्यसंवत्सरमथापरम् ॥ उदवासंनिराहारापारयामा
सभाविनी २१ शीर्णपर्णेनचैकेनपारयामाससापरम् ॥ संवत्सरंतीव्रकोपापादांगुष्ठाग्रधिष्ठिता २२ एवंद्वादशवर्षाणितापयामासरोदसी ॥ निवर्त्यमानाऽपि
चसाज्ञातिभिर्नैवशक्यते २३ ततोऽगमद्वत्सभूमिंसिद्धचारणसेविताम् ॥ आश्रमंपुण्यशीलानांतापसानांमहात्मनाम् २४ तत्रपुण्येषुतीर्थेषुसाऽऽप्लुतांगीदि
वानिशम् ॥ व्यचरत्काशिकन्यासायथाकामविचारिणी २५ नंदाश्रमेमहाराजतथोलूकाश्रमेशुभे ॥ च्यवनस्याश्रमेचैवब्रह्मणःस्थानएवच २६ प्रयागेदेव
यजनेदेवारण्येषुचैवह ॥ भोगवत्यांमहाराजकौशिकस्याश्रमेतथा २७ मांडव्यस्याश्रमेराजन्दिलीपस्याश्रमेतथा ॥ रामह्रदेचकौरव्यपैलगर्गस्यचाश्रमे २८
एतेषुतीर्थेषुतदाकाशिकन्याविशांपते ॥ आप्लावयतगात्राणिव्रतमास्थायदुष्करम् २९ तामब्रवीच्चकौरव्यममलाताजलेस्थिता ॥ किमर्थंक्लिश्यसेभद्रेतथ्यमेव
वदस्वमे ३० सैनामथाब्रवीद्राजन्कृतांजलिरनिंदिता ॥ भीष्मेणसमरेरामोनिर्जितश्चारुलोचने ३१ कोऽन्यस्तमुत्सहेज्जेतुमुद्यतेषुंमहीपतिः ॥ साऽहंभीष्म
विनाशायतपस्तप्स्येसुदारुणम् ३२ विचरामिमहींदेवियथाहन्यामहंनृपम् ॥ एतद्व्रतफलंदेविपरमस्मिन्यथाहिमे ३३ ततोऽब्रवीत्सागरगाजिह्मंचरसिभाविनि ॥
नैषकामोऽनवद्यांगिशक्यःप्राप्तुंत्वयाऽबले ३४ यदिभीष्मविनाशायकाश्येचरसिवैव्रतम् ॥ व्रतस्थाचशरीरंत्वंयदिनामविमोक्ष्यसि ३५ नदीभविष्यसिशुभेकुटि
लावार्षिकोदका ॥ दुस्तीर्थानतुविज्ञेयावार्षिकीनाष्टमासिकी ३६ भीमग्राहवतीघोरासर्वभूतभयंकरी ॥ एवमुक्त्वाततोराजन्काशिकन्यांन्यवर्तत ३७ माताम
ममहाभागास्मयमानेवभाविनी ॥ कदाचिदष्टमेमासिकदाचिद्दशमेतथा ॥ नप्राश्नीतोदकमपिपुनःसावरवर्णिनी ३८ सावत्सभूमिंकौरव्यतीर्थलोभात्ततस्ततः
॥ पतितापरिधावंतीपुनःकाशिपतेःसुता ३९ सानदीवत्सभूम्यांतुप्रथितांबेतिभारत ॥ वार्षिकीग्राहबहुलादुस्तीर्थाकुटिलातथा ४० साकन्यातपसातेनदेहार्धेन
व्यजायत ॥ नदीचराजन्वत्सेषुकन्याचैवाभवत्तदा ४१ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिअंबातपस्यायांषडशीत्यधिकशततमोऽध्यायः ॥
॥ १८६ ॥ ॥ भीष्मउवाच ॥ ततस्तेतापसाःसर्वेतपसेधृतनिश्चयाम् ॥ दृष्ट्वान्यवर्तयंस्तातकिंकार्यमितिचाब्रुवन् १ तानुवाचततःकन्यातपोवृद्धानृषीं
स्तदा ॥ निराकृताऽस्मिभीष्मेणभ्रंशितापतिधर्मतः २ वधार्थंतस्यदीक्षामेनलोकार्थंतपोधनाः ॥ निहत्यभीष्मंगच्छेयंशांतिमित्येवनिश्चयः ३ यत्कृतेदुःख
वसतिमिमांप्राप्ताऽस्मिशाश्वतीं ॥ पतिलोकाद्विहीनाचनैवस्त्रीनपुमानिह ४ नाहत्वायुधिगांगेयंनिवर्तिष्येतपोधनाः ॥ एषमेहृदिसंकल्पोयदिदंकथितंमया ५

४० । ४१ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ ॥ ॥ ॥ ततइति १ । २ । ३ । ४ । ५

६ । ७ । ८ । ९ शांतंशौर्यधर्मरहितं १० । ११ । १२ । १३ । १४ १५ । १६ । १७ । १८ यमुनामभितः यमुनाद्वीपेइत्यर्थः ॥ १९ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपेसप्ताशीत्य
धिकशततमोऽध्यायः ॥ १८७ ॥ ॥ ॥ कथंशिखंडीति १ । २ । ३ । ४ स्त्रीपुमान्पूर्वंस्त्रीत्वेवपश्चात्पुमान् पूर्वकालैकसर्वेतिसमासः ५ । ६ । ७ । ८ द्रुपदंप्रविवेशहतेनसहमिथुनी

स्त्रीभावेपरिनिर्विण्णापुंस्त्वार्थेकृतनिश्चया ॥ भीष्मेप्रतिचिकीर्षामिनास्मिवार्येतिवैपुनः ६ तांदेवोदर्शयामासशूलपाणिरुमापतिः ॥ मध्येतेषांमहर्षीणांस्वेनरूपेण
तापसीम् ७ छंद्यमानावरेणाथसावव्रेमत्पराजयम् ॥ हनिष्यसीतितांदेवःप्रत्युवाचमनस्विनीम् ८ ततःसापुनरेवाथकन्यारुद्रमुवाचह ॥ उपपद्येत्कथंदेवस्त्रियायुधिजयो
मम ९ स्त्रीभावेनचमेगाढंमनःशांतमुमापते ॥ प्रतिश्रुतश्चभूतेशत्वयाभीष्मपराजयः १० यथाससत्योभवतितथाकुरुवृषध्वज ॥ यथाहन्यांसमागम्यभीष्मंशांत
नवंयुधि ११ तामुवाचमहादेवःकन्यांकिलवृषध्वजः ॥ नमेवागनृतंप्राहसत्यंभद्रेभविष्यति १२ हनिष्यसिरणेभीष्मंपुरुषत्वंचलप्स्यसे ॥ स्मरिष्यसिचतत्सर्वंदेह
मन्यंगतासती १३ द्रुपदस्यकुलेजाताभविष्यसिमहारथः ॥ शीघ्रास्त्रश्चित्रयोधीचभविष्यसिसुसंमतः १४ यथोक्तमेवकल्याणिसर्वमेतद्भविष्यति ॥ भविष्यसिपुमा
न्पश्चात्कस्माच्चित्कालपर्ययात् १५ एवमुक्त्वामहादेवःकपर्दीवृषभध्वजः ॥ पश्यतामेवविप्राणांतत्रैवांतरधीयत १६ ततःसापश्यतांतेषांमहर्षीणामनिंदिता ॥
समाहृत्यवनात्तस्मात्काष्ठानिवरवर्णिनी १७ चितांकृत्वासुमहतींप्रदायचहुताशनम् ॥ प्रदीप्तेऽग्नौमहाराजरोषदीप्तेनचेतसा १८ उक्त्वाभीष्मवधायेतिप्रविवेश
हुताशनम् ॥ ज्येष्ठाकाशिसुताराजन्यमुनामभितोनदीम् १९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिअंबाहुताशनप्रवेशे सप्ताशीत्यधिकशततमो
ऽध्यायः ॥ १८७ ॥ ॥ ॥ दुर्योधनउवाच ॥ कथंशिखंडीगांगेयकन्याभूत्वापुरातदा ॥ पुरुषोऽभूद्युधिश्रेष्ठतन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ भार्या
तुतस्यराजेन्द्रद्रुपदस्यमहीपतेः ॥ महिषीदयिताह्यासीदपुत्राचविशांपते २ एतस्मिन्नेवकालेतुद्रुपदोवैमहीपतिः ॥ अपत्यार्थेमहाराजतोषयामासशंकरम् ३ अस्मद्वधा
र्थेनिश्चित्यतपोघोरंसमास्थितः ॥ ऋतेकन्यांमहादेवपुत्रोमेस्यादितिब्रुवन् ४ भगवन्पुत्रमिच्छामिभीष्मंप्रतिचिकीर्षया ॥ इत्युक्तोदेवदेवेनस्त्रीपुमांस्तेभविष्यति
५ निवर्तस्वमहीपालनैतज्जात्वन्यथाभवेत् ॥ सतुगत्वाचनगरंभार्यामिदमुवाचह ६ कृतोयत्नोमहादेवस्तपसाऽऽराधितोमया ॥ कन्याभूत्वापुमान्भावीइति
चोक्तोऽस्मिशंभुना ७ पुनःपुनर्याच्यमानोदिष्टमित्यब्रवीच्छिवः ॥ नतदन्यद्धिभविताभवितव्यंहितत्तथा ८ ततःसानियताभूत्वाऋतुकालेमनस्विनी ॥ पत्नीद्रुपद
राजस्यद्रुपदंप्रविवेशह ९ लेभेगर्भंयथाकालंविधिदृष्टेनकर्मणा ॥ पार्षतस्यमहीपालयथामांनारदोऽब्रवीत् १० ततोदधारसादेवीगर्भंराजीवलोचना ॥ तांसराजाप्रियां
भार्यांद्रुपदःकुरुनन्दन ११ पुत्रस्नेहान्महाबाहुःसुखंपर्यचरत्तदा ॥ सर्वानभिप्रायकृतान्भार्याऽलभतकौरव १२

भावंजगाम ९ विधिदृष्टेनशास्त्रदृष्टेनकर्मणागर्भाधानाख्येन पार्षतस्यगर्भंदधारइतिउत्तरेणसंबंधः १० । ११ अभिप्रायकृतान्वासनानिर्मितान्दोहदानीत्यर्थः १२

१३ प्राजायतनरपुत्तवी १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ चकारेति १ । २ । ३ शूल्युक्तःपाणिः

अपुत्रस्यसतोराज्ञोद्रुपदस्यमहीपतेः ॥ यथाकालंतुसादेवीमहिषीद्रुपदस्यह १३ कन्यांप्रवररूपांतुप्राजायतनराधिप ॥ अपुत्रस्यतुराज्ञःसाद्रुपदस्यमनस्विनी १४
ख्यापयामासराजेन्द्रपुत्रोह्येषममेतिवै ॥ ततःसराजाद्रुपदःप्रच्छन्नायानराधिप १५ पुत्रवत्पुत्रकार्याणिसर्वाणिसमकारयत् ॥ रक्षणंचैवमंत्रस्यमहिषीद्रुपदस्यसा १६
चकारसर्वयत्नेनब्रुवाणापुत्रइत्युत ॥ नचतांवेदनगरेकश्चिदन्यत्रपार्षतात् १७ श्रद्दधानोहितद्वाक्यंदेवस्याच्युततेजसः ॥ छादयामासतांकन्यांपुमानितिचसोऽब्रवीत्
१८ जातकर्माणिसर्वाणिकारयामासपार्थिवः ॥ पुंवद्विधानयुक्तानिशिखंडीतिचतांविदुः १९ अहमेकस्तुचारेणवचनान्नारदस्यच ॥ ज्ञातवान्देववाक्येनअंबायास्त
पसातथा २० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिशिखंड्युत्पत्तावष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ॥ भीष्मउवाच ॥ चकार
यत्नंद्रुपदःसुतायाःसर्वकर्मसु ॥ ततोलेख्यादिषुतथाशिल्पेषुचपरंतप १ इष्वस्त्रेचैवराजेन्द्रद्रोणशिष्योबभूवह ॥ तस्यमातामहाराजराजानंवरवर्णिनी २ चोदयामास
भार्यार्थंकन्यायाःपुत्रवत्तदा ॥ ततस्तांपार्षतोदृष्ट्वाकन्यांसंप्राप्तयौवनाम् ॥ स्त्रियंमत्वाततश्चिंतांप्रपेदेसहभार्यया ३ ॥ द्रुपदउवाच ॥ कन्याममेयंसंप्राप्तायौवनंशोक
वर्धिनी ॥ मयाप्रच्छादिताचेयंवचनाच्छूलपाणिनः ४ ॥ भार्योवाच ॥ नतन्मिथ्यामहाराजभविष्यतिकथंचन ॥ त्रैलोक्यकर्ताकस्माद्धिवृथावक्तुमिहार्हति ५
यदितेरोचतेराजन्वक्ष्यामिशृणुमेवचः ॥ श्रुत्वेदानींप्रपद्येथाःस्वांमतिंपृषतात्मज ६ क्रियतामस्ययत्नेनविधिवद्दारसंग्रहः ॥ भवितातद्वचःसत्यमितिमेनिश्चितामतिः
७ ततस्तौनिश्चयंकृत्वातस्मिन्कार्येऽथदंपती ॥ वरयांचक्रतुःकन्यांदशार्णाधिपतेःसुताम् ८ ततोराजाद्रुपदोराजसिंहःसर्वान्राज्ञःकुलतःसन्निशाम्य ॥ दाशार्णकस्य
नृपतेस्तनूजांशिखंडिनेवरयामासदारान् ९ हिरण्यवर्मेतिनृपोयोऽसौदाशार्णकःस्मृतः ॥ सचप्रादान्महीपालःकन्यांतस्मैशिखंडिने १० सचराजादशार्णेषुमहानासी
त्सुदुर्जयः ॥ हिरण्यवर्मादुर्धर्षोमहासेनोमहामनाः ११ कृतेविवाहेतुतदासाकन्याराजसत्तम ॥ यौवनंसमनुप्राप्तासाचकन्याशिखंडिनी १२ कृतदारःशिखंडीचकांपिल्यं
पुनरागमत् ॥ ततःसावेदतांकन्यांकंचित्कालंस्त्रियंकिल ॥ हिरण्यवर्मणःकन्याज्ञात्वातांतुशिखंडिनीम् १३ धात्रीणांचसखीनांचव्रीडयानान्यवेदयत् ॥ कन्यां
पंचालराजस्यसुतांतांवैशिखंडिनीम् १४ ततस्ताराजशार्दूलधात्र्योदाशार्णिकास्तदा ॥ जग्मुरार्तिंपरांप्रेष्याःप्रेषयामासुरेवच १५ ततोदशार्णाधिपतेःप्रेष्याः
सर्वान्यवेदयन् ॥ विप्रलंभंयथावृत्तंसचुक्रोधपार्थिवः १६

शूलपाणिःसोऽस्यास्तीतिशूलपाणीतस्यशूलपाणिनः व्रीह्यादित्वान्मत्वर्थीयइनिः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ धात्रीणांपितृगृहादागतानांसखीनांच १४ ताएवधात्र्यःस्वाःप्रेष्या
दासीःप्रेषयामासुःदशार्णपतिमितिशेषः १५ विप्रलंभंवंचनां १६

१७ । १८ । १९ उत्सार्यनीत्वा २० अभिषंगात्पराभवात् २१ । २२ उद्धरामिउच्छेत्स्यामि २३ ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे ऊननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

शिखंड्यपिमहाराजपुंवद्राजकुलेतदा ॥ विजहारमुदायुक्तःस्त्रीत्वंनैवातिरोचयन् १७ ततःकांतपयाहस्यतच्छ्रुत्वाभरतर्षभ ॥ हिरण्यवर्माराजेन्द्ररोषादार्तिंजगामह
१८ ततोदाशार्णकोराजातीव्रकोपसमन्वितः ॥ दूतंप्रस्थापयामासद्रुपदस्यनिवेशनम् १९ ततोद्रुपदमासाद्यदूतःकांचनवर्मणः ॥ एकएकांतमुत्सार्यरहोवचनम
ब्रवीत् २० दाशार्णराजोराजंस्त्वामिदंवचनमब्रवीत् ॥ अभिषंगात्प्रकुपितोविप्रलब्धस्त्वयाऽनघ २१ अवमन्यसेमांनृपतेनूनंदुर्मंत्रितंतव ॥ यन्मेकन्यांस्वक
न्यार्थेमोहाद्याचितवानसि २२ तस्याद्यविप्रलंभस्यफलंप्राप्नुहिदुर्मते ॥ एषत्वांसजनामात्यमुद्धरामिस्थिरोभव २३ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपा
ख्यानपर्वणिहिरण्यवर्मदूतागमनेऊननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ ॥ ॥ ॥ भीष्मउवाच ॥ एवमुक्तस्यदूतेनद्रुपदस्यतदानृप ॥ चोरस्येव
गृहीतस्यनप्रावर्ततभारती १ सयत्नमकरोत्तीव्रंसम्बन्धिन्यनुमानने ॥ दूतैर्मधुरसंभाषैर्नैतदस्तीतिसंदिशन् २ सराजाभूयएवाथज्ञात्वातत्त्वमथागमत् ॥ कन्येतिपां
चालसुतांत्वरमाणोविनिर्ययौ ३ ततःसंप्रेषयामाससमित्राणाममितौजसाम् ॥ दुहितुर्विप्रलंभंतंधात्रीणांवचनात्तदा ४ ततःसमुदयंकृत्वाबलानांराजसत्तमः ॥ अ
भियानेमतिंचक्रेद्रुपदंप्रतिभारत ५ ततःसंमंत्रयामाससमंत्रिभिःसमहीपतिः ॥ हिरण्यवर्माराजेन्द्रपांचाल्यंपार्थिवंप्रति ६ तत्रवैनिश्चितंतेषामभूद्राज्ञांमहात्मनाम् ॥
तथ्यंभवतिचेदेतत्कन्याराजन्शिखंडिनी ७ बद्ध्वापंचालराजानमानयिष्यामहेगृहम् ॥ अन्यंराजानमाधायपंचालेषुनरेश्वरम् ८ घातयिष्यामनृपतिंपांचालंसशिखं
डिनम् ९ तत्तदाऽनृतमाज्ञायपुनर्दूतान्नराधिपः ॥ प्रास्थापयत्पार्षतायनिहन्मीतिस्थिरोभव १० ॥ भीष्मउवाच ॥ सहिप्रकृत्यावैभीतःकिल्बिषीचनराधिपः ॥
भयंतीव्रमनुप्राप्तोद्रुपदःपृथिवीपतिः ११ विसृज्यदूतान्दाशार्णेद्रुपदःशोकमूर्छितः ॥ समेत्यभार्यांरहितेवाक्यमाहनराधिपः १२ भयेनमहताऽऽविष्टोहृदिशोके
नचाहतः ॥ पांचालराजोदयितांमातरंवैशिखंडिनः १३ अभियास्यतिमांकोपात्संबंधीसुमहाबलः ॥ हिरण्यवर्मानृपतिःकर्षमाणोवरूथिनीम् १४ किमिदानींक
रिष्यावोमूढौकन्यामिमांप्रति ॥ शिखंडीकिलपुत्रस्तेकन्येतिपरिशंकितः १५ इतिसंचिंत्ययत्नेनसमित्रःसबलानुगः । वंचितोऽस्मीतिमन्वानोमांकिलोद्धर्तुमि
च्छति १६ किमत्रतथ्यंसुश्रोणिमिथ्याकिंब्रूहिशोभने ॥ श्रुत्वात्त्वत्तःशुभंवाक्यंसंविधास्याम्यहंतथा १७ अहंहिसंशयंप्राप्तोबालाचेयंशिखंडिनी ॥ त्वंचराज्ञि
महत्कृच्छ्रंसंप्राप्तावरवर्णिनि १८ सात्वंसर्वविमोक्षायतत्त्वमाख्याहिपृच्छतः ॥ तथाविदध्यांसुश्रोणिकृत्यमाशुशुचिस्मिते १९

एवमिति १ । २ अगमत्ज्ञातवान् ३ । ४ समुदयंसमुदायं ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

भार्यया अदंडयत्वं जानन्नू स्वस्य निर्दोषतां ख्यापयितुमुभयकृतमप्यपराधं लोकमध्ये भार्यायामेवासंजयितुं तामाह शिखंडिनीति । यद्यप्यहं शिखंडयर्थे त्वया शिखंडिन्या च वंचितस्तथाऽपि त्वं माभैः शिखंडिनि विषये विधास्ये युवयोर्धारणं च करिष्ये न तु हिंसिष्ये इत्यर्थः यद्वा । हे शिखंडिनि त्वं माभैः हे वरारोहे भार्ये त्वं च माभैरिति द्वयोरपि अभयं दत्वा जनमध्ये पृच्छति २० मयेति । विधास्ये करिष्ये २१ परस्य शत्रोर्लोकस्य च २२ ॥ इति उद्योगपर्वणि नीलकंठीये भारतभावदीपे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ॥ ॥ ॥ तत इति १ । २ । ३ । ४ ५ सम्बन्धकं समर्थ्ययुक्तमेव सांबंधिकं

शिखंडिनि च माभैस्त्वं विधास्ये तत्र तत्त्वतः ॥ कृपयाऽहं वरारोहे वंचितः पुत्रधर्मतः २० मया दाशार्णको राजा वंचितः स महीपतिः ॥ तदाचक्ष्व महाभागे विधास्ये तत्र यद्धितम् २१ जानताहि नरेन्द्रेण ख्यापनार्थं परस्य वै ॥ प्रकाशं चोदिता देवी प्रत्युवाच महीपतिम् २२ ॥ इतिश्रीमहाभारते उद्योगपर्वणि अंबोपाख्यानपर्वणि द्रुपदप्रश्ने नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ॥ ॥ ॥ भीष्म उवाच ॥ ततः शिखंडिनो माता यथातत्त्वं नराधिप ॥ आचचक्षे महाबाहो भर्त्रे कन्यां शिखंडिनीम् १ अपुत्रया मया राजन्सपत्नीनां भयादिदम् ॥ कन्या शिखंडिनी जाता पुरुषो वै निवेदिता २ त्वया चैव नरश्रेष्ठ तन्मे प्रीत्याऽनुमोदितम् ॥ पुत्रकर्म कृतं चैव कन्यायाः पार्थिवर्षभ ३ भार्या चोढा त्वया राजन्दशार्णाधिपतेः सुता ॥ मया च प्रत्यभिहितं देववाक्यार्थदर्शनात् ॥ कन्या भूत्वा पुमान्भावी त्येवं चैतदुपेक्षितम् ४ एतच्छ्रुत्वा द्रुपदो यज्ञसेनः सर्वं तत्त्वं मंत्रविद्भ्यो निवेद्य ॥ मंत्रं राजा मंत्रयामास राजन्यथायुक्तं रक्षणे वै प्रजानाम् ५ संबंधकं चैव समर्थ्य तस्मिन्दाशार्णके वै नृपतौ नरेन्द्र ॥ स्वयं कृत्वा विप्रलंभं यथावन्मंत्रैकाग्रो निश्चयं वै जगाम ६ स्वभावगुप्तं नगरमापत्काले तु भारत ॥ गोपयामास राजेन्द्र सर्वतः समलंकृतम् ७ आर्तिं च परमां राजा जगाम सह भार्यया ॥ दशार्णपतिना सार्धं विरोधे भरतर्षभ ८ कथं संबंधिना सार्धं न मे स्याद्विग्रहो महान् ॥ इति संचिंत्य मनसा दैवतामर्चयत्तदा ९ तं तु दृष्ट्वा तदा राजन्देवी देवपरं तदा ॥ अर्चां प्रयुंजानमथो भार्या वचनमब्रवीत् १० देवानां प्रतिपत्तिश्च सत्यं साधुमता सताम् ॥ किमु दुःखार्णवं प्राप्य तस्मादर्चय तां गुरून् ११ दैवतानि च सर्वाणि पूज्यंतां भूरिदक्षिणम् ॥ अग्नयश्चापि हूयंतां दाशार्णप्रतिषेधने १२ अयुद्धेन निवृत्तिं च मनसा चिंतय प्रभो ॥ देवतानां प्रसादेन सर्वमेतद्भविष्यति १३ मंत्रिभिर्मंत्रितं सार्धं त्वया पृथुलोचन ॥ पुरस्यास्याविनाशाय यच्च राजंस्तथा कुरु १४ दैवं हि मानुषोपेतं भृशं सिद्ध्यति पार्थिव ॥ परस्परविरोधाद्धि सिद्धिरस्ति न चैतयोः १५ तस्माद्विधाय नगरे विधानं सचिवैः सह ॥ अर्चयस्व यथाकामं दैवतानि विशांपते १६ एवं संभाषमाणौ तु दृष्ट्वा शोकपरायणौ ॥ शिखंडिनी तदा कन्या व्रीडितेव तपस्विनी १७ ततः सा चिंतयामास मत्कृते दुःखितावुभौ ॥ इमाविति ततश्चक्रे मतिं प्राणविनाशने १८ एवं सा निश्चयं कृत्वा भृशं शोकपरायणा ॥ निर्जगाम गृहं त्यक्त्वा गहनं निर्जनं वनम् १९ यक्षेणर्द्धिमता राजन्स्थूणाकर्णेन पालितम् ॥ तद्भयादेव च जनो विसर्जयति तद्वनम् २०

मया कृतं न प्रतारणा कृतेति उपपाद्य ६ । ७ । ८ । ९ देवी राज्ञी १० साधुमता कल्याणवतापि देवानां प्रतिपत्तिः पूजा नित्यं कर्तव्येति शेषः किमु दुःखार्णवं प्राप्य कर्तव्येति तस्मात् भवान् गुरून् देवाराधनार्थं ब्राह्मणान् अर्चयतां पूजयतु ११ भूरिदक्षिणं यथा स्यात्तथा प्रतिषेधने परावृत्त्यर्थं १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

सुधामृत्तिकलेपनंसुधाचूर्णंमैवमृत्तिकातयालेपनंयस्य लाजोल्लापिकःलाजानिउशीराणिउल्लापयतिसूचयतीतिलाजोल्लापिकः उशीरपरिमलयुक्तधूमाढ्यमित्यर्थः । 'उशीरेलाजमुद्दिष्टम्' इतिविश्वः २१
२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ ॥ शिखंडीति । चिंत्यचिंतयित्वा १

तत्रचस्थूणभवनंसुधामृत्तिकलेपनम् ॥ लाजोल्लापिकधूमाढ्यमुच्चप्राकारतोरणम् २१ तत्प्रविश्यशिखंडीसाद्रुपदस्यात्मजान्नृप ॥ अनश्नानाबहुतिथंशरीरमुद
शोषयत् २२ दर्शयामासतांयक्षःस्थूणोमार्दवसंयुतः ॥ किमर्थोयंतवारंभःकरिष्येब्रूहिमाचिरम् २३ अशक्यमितिसायक्षंपुनःपुनरुवाचह ॥ करिष्यामी
तिवैक्षिप्रंप्रत्युवाचाथगुह्यकः २४ धनेश्वरस्यानुचरोवरदोऽस्मिन्नृपात्मजे ॥ अदेयमपिदास्यामिब्रूहियत्तेविवक्षितम् २५ ततःशिखंडीतत्सर्वमखिलेनन्यवेदय
त् ॥ तस्मैयक्षप्रधानायस्थूणाकर्णायभारत २६ ॥ शिखंड्युवाच ॥ अपुत्रोमेपितायक्षनचिरान्नाशमेष्यति ॥ अभियास्यतिसक्रोधोदशार्णाधिपतिर्हितम् ॥
२७ महाबलोमहोत्साहःसहेमकवचोनृपः ॥ तस्माद्रक्षस्वमांयक्षमातरंपितरंचमे २८ प्रतिज्ञातोहिभवतादुःखप्रतिशमोमम ॥ भवेयंपुरुषोयक्षत्वत्प्रसादादनिं
दितः २९ यावदेवसराजावैनोपयातिपुरंमम ॥ तावदेवमहायक्षप्रसादंकुरुगुह्यक ३० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिस्थूणाकर्णसमाग
मेएकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ भीष्मउवाच ॥ शिखंडिवाक्यंश्रुत्वाऽथसयक्षोभरतर्षभ ॥ प्रोवाचमनसाचिंत्यदैवेनोपनिपीडितः १
भवितव्यंतथातद्धिममदुःखायकौरव ॥ भद्रेकामंकरिष्यामिसमयंतुनिबोधमे २ किंचित्कालांतरेदास्येपुल्लिंगंस्वमिदंतव ॥ आगंतव्यंत्वयाकालेसत्यंचैववदस्व
मे ३ प्रभुःसंकल्पसिद्धोऽस्मिकामचारीविहंगमः ॥ मत्प्रसादात्पुरंचैवत्राहिबंधूंश्चकेवलम् ४ स्त्रीलिंगंधारयिष्यामितवेदंपार्थिवात्मजे ॥ सत्यंमेप्रतिजानीहि
करिष्यामिप्रियंतव ५ ॥ शिखंड्युवाच ॥ प्रतिदास्यामिभगवन्पुल्लिंगंतवसुव्रत ॥ किंचित्कालांतरंस्त्रीत्वंधारयस्वनिशाचर ६ प्रतियातेदशार्णेतुपार्थिवे
हेमवर्मणि ॥ कन्यैवहिभविष्यामिपुरुषस्त्वंभविष्यसि ७ ॥ भीष्मउवाच ॥ इत्युक्त्वासमयंतत्रचक्रातेतावुभौनृप ॥ अन्योन्यस्याभिसंदेहेतौसंक्रामयतांततः
८ स्त्रीलिंगंधारयामासस्थूणायक्षोऽथभारत ॥ यक्षरूपंचतद्दीप्तंशिखंडीप्रत्यपद्यत ९ शिखंडीपांचाल्यःपुंस्त्वमासाद्यपार्थिव ॥ विवेशनगरंहृष्टःपितरंचसमासदत्
१० यथावृत्तंतुतत्सर्वमाचख्यौद्रुपदस्यतत् ॥ द्रुपदस्तस्यतच्छ्रुत्वाहर्षमाहारयत्परम् ११ सभार्यस्तच्चसस्मारमहेश्वरवचस्तदा ॥ ततःसंप्रेषयामासदशार्णा
धिपतेर्नृपः १२ पुरुषोऽयंममसुतःश्रद्धत्तांमेभवानिति ॥ अथदाशार्णकोराजासहसाऽभ्यागमत्तदा १३ पंचालराजंद्रुपदंदुःखशोकसमन्वितः ॥ ततःकांपि
ल्यमासाद्यदशार्णाधिपतिस्ततः १४ प्रेषयामाससत्कृत्यदूतंब्रह्मविदांवरम् ॥ ब्रूहिमद्वचनाद्दूतपांचाल्यंतंनृपाधमम् १५

२ । ३ विहंगमःआकाशगामी ४ । ५ । ६ । ७ समयंशपथं संदेहेलिंगे सम्यग्दिह्येतेउपचीयेतेरतिकालेप्रथेतेइतिव्युत्पत्तेः । अभिसंदोहेइतिपाठेऽपिसंदुह्यतेप्रजाआभ्यामितिव्युत्पत्त्यातेएव ८ । ९
१० । ११ । १२ । १३ । १४ । १५

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ उत्तरंउत्कृष्टतरं २४ । २५ । २६ आगमःपरीक्षा २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ लाज्यैःउशीरजैः पाठांतरेलाजैरुशीरैः । भक्ष्यंल

दूतःप्रयातोनगरंदाशार्णंनृपचोदि
यन्मेकन्यांस्वकन्यार्थेवृतवानसिदुर्मते ॥ फलंतस्यावलेपस्यद्रक्ष्यस्यद्यनसंशयः १६ एवमुक्तश्चतेनासौब्राह्मणोराजसत्तम ॥ दूतःप्रयातोनगरंदाशार्णनृपचोदि
तः १७ ततआसादयामासपुरोधाद्रुपदंपुरे ॥ तस्मैपांचालकोराजागामर्घ्यंचसुसत्कृतम् १८ प्रापयामासराजेन्द्रसहतेनशिखंडिना ॥ तांपूजांनाभ्यनंदत्सवा
क्यंचेदमुवाचह १९ यदुक्तंतेनवीरेणराज्ञाकांचनवर्मणा ॥ यत्तेऽहमधमाचारदुहित्राऽस्म्यभिवंचितः २० तस्यपापस्यकरणात्फलंप्राप्नुहिदुर्मते ॥ तेहियुद्धं
नरपतेममाद्यरणमूर्धनि २१ उद्धरिष्यामितेसद्यःसामात्यसुतबांधवम् ॥ तदुपालंभसंयुक्तंश्रावितःकिलपार्थिवः २२ दशार्णपतिनाचोक्तोमंत्रिमध्येपुरोधसा ॥
अभवद्भरतश्रेष्ठद्रुपदःप्रणयानतः २३ यदाहमांभवान्ब्रह्मन्संबंधिवचनाद्वचः ॥ अस्योत्तरंप्रतिवचोदूतोराज्ञेवदिष्यति २४ ततःसंप्रेषयामासद्रुपदोऽपिमहात्म
ने ॥ हिरण्यवर्मणेदूतंब्राह्मणंवेदपारगम् २५ तमागम्यतुराजानंदशार्णाधिपतिंतदा ॥ तद्वाक्यमाददेराजन्यदुक्तंद्रुपदेनह २६ आगमःक्रियतांव्यक्तःकुमारोऽ
यंसुतोमम ॥ मिथ्यैतदुक्तंकेनापितदश्रद्धेयमित्युत २७ ततःसराजाद्रुपदस्यश्रुत्वाविमर्षयुक्तोयुवतीर्वरिष्ठाः ॥ संप्रेषयामाससुचारुरूपाःशिखंडिनंस्त्रीपुमान्वेतिवे
त्तुम् २८ ताःप्रेषितास्तत्त्वभावंविदित्वाप्रीत्याराज्ञेतच्छशंसुर्हिसर्वम् ॥ शिखंडिनंपुरुषंकौरवेन्द्रदाशार्णराजायमहानुभावम् २९ ततःकृत्वातुराजासआगमंप्रीति
मानथ ॥ संबंधिनासमागम्यहृष्टोवासमुवासह ३० शिखंडिनेचमुदितःप्रादाद्वित्तंजनेश्वरः ॥ हस्तिनोश्वांश्चगाश्चैवदास्योऽथबहुलास्तथा ३१ पूजितश्चप्र
तियौनिर्भर्त्स्यतनयांकिल ॥ विनीतकिल्बिषेप्रीतेहेमवर्मणिपार्थिवे ३२ प्रतियातेदशार्णेतुहृष्टरूपाशिखंडिनी ॥ कस्यचित्त्वथकालस्यकुबेरोनरवाहनः ॥
लोकयात्रांप्रकुर्वाणःस्थूणस्यागान्निवेशनम् ३३ सतद्गृहस्योपरिवर्तमानआलोकयामासधनाधिगोप्ता ॥ स्थूणस्ययक्षस्यविवेशवेश्मस्वलंकृतंमाल्यगुणैर्विचित्रैः
३४ लाज्यैश्चगंधैश्चतथावितानैरभ्यर्चितंधूपनधूपितंच ॥ ध्वजैःपाताकाभिरलंकृतंचभक्ष्यान्नपेयामिषदंतहोमम् ३५ तत्स्थानंतस्यदृष्ट्वातुसर्वतःसमलंकृतम् ॥
मणिरत्नसुवर्णानांमालाभिःपरिपूरितम् ३६ नानाकुसुमगंधाढ्यंसिक्तसंमृष्टशोभितम् ॥ अथाब्रवीद्यक्षपतिस्तान्यक्षाननुगांस्तदा ३७ स्वलंकृतमिदंवेश्मस्थूण
स्यामितविक्रमाः ॥ नोपसर्पतिमांचैवकस्माद्द्यसमन्दधीः ३८ यस्माज्जानन्समन्दात्मामामसौनोपसर्पति ॥ तस्मात्तस्मैमहादंडोधार्यःस्यादितिमेमतिः ३९
॥ यक्षाऊचुः ॥ द्रुपदस्यसुताराजन्राज्ञोजाताशिखंडिनी ॥ तस्यानिमित्तेकस्मिंश्चित्प्रादात्पुरुषलक्षणम् ४०

क्षुकेक्षुदंडादिदंतव्यापारग्राह्यं । अन्नंअदनीयंओदनपायसखंडशर्करादिभोज्यंलेह्यरूपं । पेयंसुरासवादि । आमिषंमांसंअभ्यर्हितत्वादस्यभक्ष्यात्पृथक्करणं एतान्येवदंतहोमादन्तैर्हूयंतइतिव्युत्पत्त्याऽभ्यवहार्या
णियस्मिन्स्तंभक्ष्यान्नपेयामिषदंतहोमं । आमिषमप्रमेयमितिपाठस्तुमूर्खकल्पितः ३५ । ३६ । ३७ । ३८ । ३९ । ४०

तिष्ठतेगृहेएवस्थिरोऽस्ति ४१ त्वाऽद्यत्वामद्य ४२। ४३। ४४। ४५। ४६। ४७। ४८ ४९। ५०। ५१। ५२। ५३। ५४। ५५। ५६। ५७। ५८। ५९। ६० चतुष्पादंग्रहणधा

अग्रहीलक्षणंस्त्रीणांस्त्रीभूतोतिष्ठतेगृहे ॥ नोपसर्पतितेनासौसव्रीडःस्त्रीसरूपवान् ४१ एतस्मात्कारणाद्राजन्स्थूणोनत्वाद्यसर्पति ॥ श्रुत्वाकुरुयक्षान्यायंविमानमिह
तिष्ठताम् ४२ आनीयतांस्थूणइतिततोयक्षाधिपोऽब्रवीत् ॥ कर्ताऽस्मिनिग्रहंतस्यप्रत्युवाचपुनःपुनः ४३ सोऽभ्यगच्छतयक्षेन्द्रमाहूतःपृथिवीपते ॥ स्त्रीसरूपोमहा
राजतस्थौव्रीडासमन्वितः ४४ तंशशापाथसंक्रुद्धोधनदःकुरुनंदन ॥ एवमेवभवत्वद्यस्त्रीत्वंपापस्यगुह्यकाः ४५ ततोऽब्रवीद्यक्षपतिर्महात्मायस्माददास्त्ववमन्येहय
क्षान् ॥ शिखंडिनोलक्षणंपापबुद्धेःस्त्रीलक्षणंचाग्रहीःपापकर्मन् ४६ अप्रवृत्तंसुदुर्बुद्धेयस्मादेतत्त्वयाकृतम् ॥ तस्मादद्यप्रभृत्येवस्त्रीत्वंसापुरुषस्तथा ४७ ततःप्रसाद
यामासुर्यक्षावैश्रवणंकिल ॥ स्थूणस्यार्थेकुरुष्वांतंशापस्येतिपुनःपुनः ४८ ततोमहात्मायक्षेन्द्रःप्रत्युवाचानुगामिनः ॥ सर्वान्यक्षगणांस्तातशापस्यांतचिकीर्षया
४९ शिखंडिनिहतेयक्षाःस्वंरूपंप्रतिपत्स्यते ॥ स्थूणायक्षोनिरुद्वेगोभवत्विितिमहामनाः ५० इत्युक्त्वाभगवान्देवोयक्षराजःसुपूजितः ॥ प्रययौसहितःसर्वैर्निमेषां
तरचारिभिः ५१ स्थूणस्तुशापंसंप्राप्यतत्रैवन्यवसत्तदा ॥ समयेचागमत्तूर्णंशिखंडीतंक्षपाचरम् ५२ सोऽभिगम्याब्रवीद्वाक्यंप्राप्तोऽस्मिभगवन्निति ॥ तमब्रवीत्ततः
स्थूणःप्रीतोऽस्मीतिपुनःपुनः ५३ आर्जवेनागतंदृष्ट्वाराजपुत्रंशिखंडिनम् ॥ सर्वमेवयथावृत्तमाचचक्षेशिखंडिने ५४ ॥ यक्षउवाच ॥ शप्तोवैश्रवणेनाहंत्वत्कृते
पार्थिवात्मज ॥ गच्छेदानींयथाकामंचरल्लोकान्यथासुखम् ५५ दिष्टमेतत्पुरामन्येनशक्यमतिवर्तितुम् ॥ गमनंतवचेतोहिपौलस्त्यस्यचदर्शनम् ५६ ॥ भीष्म
उवाच ॥ एवमुक्तःशिखंडीतुस्थूणयक्षेणभारत ॥ प्रत्याजगामनगरंहर्षेणमहतावृतः ५७ पूजयामासविविधैर्गंधमाल्यैर्महाधनैः ॥ द्विजातीन्देवताश्चैवचैत्यानथचतु
ष्पथान् ५८ द्रुपदःसहपुत्रेणसिद्धार्थेनशिखंडिना ॥ मुदंचपरमांलेभेपांचाल्यःसहबांधवैः ५९ शिष्यार्थंप्रददौचाथद्रोणायकुरुपुंगव ॥ शिखंडिनंमहाराजपुत्रंस्त्रीपूर्विणं
तथा ६० प्रतिपेदेचतुष्पादंधनुर्वेदंनृपात्मजः ॥ शिखंडीसहयुष्माभिर्धृष्टद्युम्नश्चपार्षतः ६१ ममत्वेतच्चरास्तातयथावत्प्रत्यवेदयन् ॥ जडांधबधिराकारायेमुक्ताद्रुपदे
मया ६२ एवमेषमहाराजस्त्रीपुमान्द्रुपदात्मजः ॥ ससंभूतःकुरुश्रेष्ठशिखंडीरथसत्तमः ६३ ज्येष्ठाकाशिपतेःकन्याअंबानामेतिविश्रुता ॥ द्रुपदस्यकुलेजाताशिखंडी
भरतर्षभ ६४ नाहमेनंधनुष्पाणिंयुयुत्सुंसमुपस्थितम् ॥ मुहूर्तमपिपश्येयंप्रहरेयंनचाप्युत ६५ व्रतमेतन्ममसदापृथिव्यामपिविश्रुतम् ॥ स्त्रियांस्त्रीपूर्वकेचैवस्त्रीना
म्निस्त्रीसरूपिणि ६६ नमुंचेयमहंबाणमितिकौरवनंदन ॥ नहन्यामहमेतेनकारणेनशिखंडिनम् ६७ एतत्तत्त्वमहंवेदजन्मताताशिखंडिनः ॥ ततोनैनंहनिष्यामिसमरे
ष्वाततायिनम् ६८ यदिभीष्मःस्त्रियंहन्यात्संतःकुर्युर्विगर्हणम् ॥ नैनंतस्माद्धनिष्यामिदृष्ट्वापिसमरेस्थितम् ६९

रणप्रयोगप्रतीकारैश्चतुर्भिःपादैर्युक्तम ६१। ६२। ६३। ६४। ६५। ६६। ६७। ६८। ६९

युक्तस्त्रीपुंअयुद्धमितिशेषः ७० ॥ इतिउद्योगपर्वणिनीलकंठीये भारतभावदीपे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ॥ प्रभातायामिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०



वैशंपायनउवाच ॥ एतच्छ्रुत्वातुकौरव्योराजादुर्योधनस्तदा ॥ मुहूर्तमिवसध्यात्वाभीष्मेयुक्तममन्यत ७० ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणि
शिखंडिपुंस्त्वप्राप्तौद्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ॥ संजयउवाच ॥ प्रभातायांतुशर्वर्यांपुनरेवसुतस्तव ॥ मध्येसर्वस्यसैन्यस्यपितामहमपृच्छत १
पांडवेयस्यगांगेययदेतत्सैन्यमुद्यतम् ॥ प्रभूतनरनागाश्वंमहारथसमाकुलम् २ भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः ॥ लोकपालसमैर्गुप्तंधृष्टद्युम्नपुरोगमैः ३
अप्रधृष्यमनावार्यमुद्धूतमिवसागरम् ॥ सेनासागरमक्षोभ्यमपिदेवैर्महाहवे ४ केनकालेनगांगेयक्षपयेथामहाद्युते ॥ आचार्योवामहेष्वासःकृपोवाऽऽशुमहाबलः ५ कर्णो
वासमरश्लाघीद्रौणिर्वाद्विजसत्तमः ॥ दिव्यास्त्रविदुषःसर्वेभवंतोहिबलेमम ६ एतदिच्छाम्यहंज्ञातुंपरंकौतूहलंहिमे ॥ हृदिनित्यंमहाबाहोवक्तुमर्हसितन्मम ७
॥ भीष्मउवाच ॥ अनुरूपंकुरुश्रेष्ठत्वय्येतत्पृथिवीपते ॥ बलाबलममित्राणांतेषांयदिहपृच्छसि ८ शृणुराजन्ममरणेयाशक्तिःपरमाभवेत् ॥ शस्त्रवीर्यंरणेयच्चभुजयोश्च
महाभुज ९ आर्जवेनैवयुद्धेनयोद्धव्यइतरोजनः ॥ मायायुद्धेनमायावीइत्येतद्धर्मनिश्चयः १० हन्यामहंमहाभागपांडवानामनीकिनीम् ॥ दिवसेदिवसेकृत्वाभागं
प्रागान्हिकंमम ११ योधानांदशसाहस्रंकृत्वाभागंमहाद्युते ॥ सहस्रंरथिनामेकमेषभागोमतोमम १२ अनेनाहंविधानेनसन्नद्धःसततोत्थितः ॥ क्षपयेयंमहत्सैन्यंकाले
नानेनभारत १३ मुंचेयंयदिवास्त्राणिमहांतिसमरेस्थितः ॥ शतसाहस्रघातीनिहन्यांमासेनभारत १४ ॥ संजयउवाच ॥ श्रुत्वाभीष्मस्यतद्वाक्यंराजादुर्योधनस्ततः ॥
पर्यपृच्छतराजेन्द्रद्रोणमंगिरसांवरम् १५ आचार्यकेनकालेनपांडुपुत्रस्यसैनिकान् ॥ निहन्याइतितंद्रोणःप्रत्युवाचहसन्निव १६ स्थविरोऽस्मिमहाबाहोमंदप्राणविचे
ष्टितः ॥ शस्त्राग्निनानिर्दहेयंपांडवानामनीकिनीम् १७ यथाभीष्मःशांतनवोमासेनेतिमतिर्मम ॥ एषामेपरमाशक्तिरेतन्मेपरमंबलम् १८ द्वाभ्यामेवतुमासाभ्यां
कृपःशारद्वतोऽब्रवीत् ॥ द्रौणिस्तुदशरात्रेणप्रतिजज्ञेबलक्षयम् १९ कर्णस्तुपंचरात्रेणप्रतिजज्ञेमहास्त्रवित् ॥ तच्छ्रुत्वासूतपुत्रस्यवाक्यंसागरगासुतः २० जहाससस्वनं
हासंवाक्यंचेदमुवाचह ॥ नहियावद्रणेपार्थंबाणशंखधनुर्धरम् २१ वासुदेवसमायुक्तंरथेनायांतमाहवे ॥ समागच्छसिराधेयतेनैवमभिमन्यसे ॥ शक्यमेवंचभूयश्च
त्वयावक्तुंयथेष्टतः २२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिभीष्मादिशक्तिकथनेत्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ वैशंपायनउवाच ॥
एतच्छ्रुत्वातुकौन्तेयःसर्वान्भ्रातॄनुपह्वरे ॥ आहूयभरतश्रेष्ठइदंवचनमब्रवीत् १ ॥ युधिष्ठिरउवाच ॥ ॥ धार्तराष्ट्रस्यसैन्येषुयेचारपुरुषामम ॥ तेप्रवृत्तिं
प्रयच्छंतिममेमांव्युषितांनिशाम् २

प्रागाह्निकंअन्हःपूर्वभागकार्यं ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणिनीलकंठीयेभारतभावदीपे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥
॥ एतच्छ्रुत्वेति १ व्युषितांनिशांप्रभातकाले २

२ । ४ । ५ । ६ । ७ । ८ । ९ । १० भूतमुत्पन्नंभव्यमुत्पाद्यमा। अनशोर्बीजभूतयोर्नाशेवीजाभावाद्भविष्यस्यापिनाशोममैवकर्तव्यइत्यर्थः ११ । १२ । १३ । १४ । १५ । १६ वेदांताव

दुर्योधनःकिलापृच्छदापगेयंमहाव्रतम् ॥ केनकालेनपांडूनांहन्याःसैन्यमितिप्रभो ३ मासेनेतिचतेनोक्तोधार्तराष्ट्रःसुदुर्मतिः ॥ तावताचापिकालेनद्रोणोऽपिप्र
तिजज्ञिवान् ४ गौतमोद्विगुणंकालमुक्तवानितिनःश्रुतम् ॥ द्रौणिस्तुदशरात्रेणप्रतिजज्ञेमहास्त्रवित् ५ तथादिव्यास्त्रवित्कर्णःसंपृष्टःकुरुसंसदि ॥ पंचभिर्दिवसै
र्हंतुंससैन्यंप्रतिजज्ञिवान् ६ तस्मादहमपीच्छामिश्रोतुमर्जुनतेवचः ॥ कालेनकियताशत्रून्क्षपयेरितिफाल्गुन ७ एवमुक्तोगुडाकेशःपार्थिवेनधनंजयः ॥ वासुदेवं
समीक्ष्येदंवचनंप्रत्यभाषत ८ सर्वएतेमहात्मानःकृतास्त्राश्चित्रयोधिनः ॥ असंशयंमहाराजहन्युरेवनसंशयः ९ अपैतुतेमनस्तापोयथासत्यंब्रवीम्यहम् ॥ हन्या
मेकरथेनैववासुदेवसहायवान् १० सामरानपिलोकांस्त्रीन्सर्वान्स्थावरजंगमान् ॥ भूतंभव्यंभविष्यंचनिमेषादितिमेमतिः ११ यत्तद्घोरंपशुपतिःप्रादादस्त्रंमहन्मम ॥
कैरातेद्वंद्वयुद्धेतुतदिदंमयिवर्तते १२ यद्युगांतेपशुपतिःसर्वभूतानिसंहरन् ॥ प्रयुङ्क्तेपुरुषव्याघ्रतदिदंमयिवर्तते १३ तन्नजानातिगांगेयोनद्रोणोनचगौतमः ॥ नचद्रो
णसुतोराजन्कुतएवतुसूतजः १४ नतुयुक्तंरणेहंतुंदिव्यैरस्त्रैःपृथग्जनम् ॥ आर्जवेनैवयुद्धेनविजेष्यामोवयंपरान् १५ तथेमेपुरुषव्याघ्राःसहायास्तवपार्थिव ॥
सर्वेदिव्यास्त्रविद्वांसःसर्वेयुद्धाभिकांक्षिणः १६ वेदांतावभृथस्नाताःसर्वएतेऽपराजिताः ॥ निहन्युःसमरेसेनांदेवानामपिपांडव १७ शिखंडीयुयुधानश्चधृष्टद्युम्न
श्चपार्षतः ॥ भीमसेनोयमौचोभौयुधामन्यूत्तमौजसौ १८ विराटद्रुपदौचोभौभीष्मद्रोणसमौयुधि ॥ शंखश्चैवमहाबाहुर्हैडिंबश्चमहाबलः १९ पुत्रोऽस्यांजनपर्वा
तुमहाबलपराक्रमः ॥ शैनेयश्चमहाबाहुःसहायोरणकोविदः २० अभिमन्युश्चबलवान्द्रौपद्याःपंचचात्मजाः ॥ स्वयंचापिसमर्थोऽसित्रैलोक्योत्सादनेऽपिच २१
क्रोधाद्यंपुरुषंपश्येस्तथाशक्रसमद्युते ॥ सक्षिप्रंनभवेद्व्यक्तमितित्वांवेद्मिकौरव २२ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिअर्जुनवाक्येचतुर्नवत्यधिकशत
तमोऽध्यायः ॥ १९४ ॥ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततःप्रभातेविमलेधार्तराष्ट्रेणचोदिताः ॥ दुर्योधनेनराजानःप्रययुःपांडवान्प्रति १ आप्ला
व्यशुचयःसर्वेस्रग्विणःशुक्लवाससः ॥ गृहीतशस्त्राध्वजिनःस्वस्तिवाच्यहुताग्नयः २ सर्वेब्रह्मविदःशूराःसर्वेसुचरितव्रताः ॥ सर्वेकामकृतश्चैवसर्वेचाहवलक्षणाः ३
आहवेषुपरांल्लोकान्जिगीषंतोमहाबलाः ॥ एकाग्रमनसःसर्वेश्रद्दधानाःपरस्परम् ४ विंदानुविंदावावंत्यौकेकयाबाह्लिकैःसह ॥ प्रययुःसर्वएवैतेभारद्वाजपुरो
गमाः ५ अश्वत्थामाशांतनवःसैन्धवोऽथजयद्रथः ॥ दाक्षिणात्याःप्रतीच्याश्चपार्वतीयाश्चयेनृपाः ६ गांधारराजःशकुनिःप्राच्योदीच्याश्चसर्वशः ॥ शकाःकिरा
तायवनाःशिबयोऽथवसातयः ७

भृथस्नाताः वेदग्रहणांतएवदारक्रिययासहैवयागंकृतवंतइत्यर्थः १७ । १८ । १९ । २० । २१ । २२ ॥ इतिउद्योगपर्वणि नीलकंठीये भारतभावदीपे चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥
ततःप्रभातेइति १ आप्लाव्यस्नात्वा २ । ३ । ४ । ५ । ६ । ७

८ । ९ । १० । ११ । १२ । १३ । १४ उत्सृज्य उत्कर्षेण सृष्ट्वा पंचयोजनं वर्तुलं परिधिं कृत्वेत्यर्थः सेनानिवेशाः सैनिकाः वणिक्शूराश्वादयः १५ । १६ । १७ । १८ । १९ ॥ इतिउद्योगपर्वणि नीलकं

स्वैःस्वैरनीकैःसहिताःपरिवार्यमहारथम् ॥ एतेमहारथाःसर्वेद्वितीयेनिर्ययुर्बले ८ कृतवर्मासहानीकस्त्रिगर्तश्चमहारथः ॥ दुर्योधनश्चनृपतिर्भ्रातृभिःपरिवारितः
९ शलोभूरिश्रवाःशल्यःकौसल्योऽथबृहद्रथः ॥ एतेपश्चादनुगताधार्तराष्ट्रपुरोगमाः १० तेसमेत्ययथान्यायंधार्तराष्ट्रामहाबलाः ॥ कुरुक्षेत्रस्यपश्चार्धेव्यवा
तिष्ठंतदंशिताः ११ दुर्योधनस्तुशिबिरंकारयामासभारत ॥ यथैवहास्तिनपुरंद्वितीयंसमलंकृतम् १२ नविशेषंविजानंतिपुरस्यशिबिरस्यवा ॥ कुशलाअपि
राजेन्द्रनरानगरवासिनः १३ तादृशान्येवदुर्गाणिराज्ञामपिमहीपतिः ॥ कारयामासकौरव्यःशतशोऽथसहस्रशः १४ पंचयोजनमुत्सृज्यमंडलंतद्रणाजिरम् ॥
सेनानिवेशास्तेराजन्नाविशञ्छतसंघशः १५ तत्रतेपृथिवीपालायथोत्साहंयथाबलम् ॥ विविशुःशिबिराण्यत्रद्रव्यवंतिसहस्रशः १६ तेषांदुर्योधनोराजाससैन्यानां
महात्मनाम् ॥ व्यादिदेशसबाह्यानांभक्ष्यभोज्यमनुत्तमम् १७ सनागाश्वमनुष्याणांयेचशिल्पोपजीविनः ॥ येचान्येऽनुगतास्तत्रसूतमागधबंदिनः १८ वणिजो
गणिकाश्चारायेचैवप्रेक्षकाजनाः ॥ सर्वांस्तान्कौरवोराजाविधिवत्प्रत्यवैक्षत १९ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिकौरवसैन्यनिर्याणे पंचनवत्य
धिकशततमोऽध्यायः ॥ १९५ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ तथैवराजाकौन्तेयोधर्मपुत्रोयुधिष्ठिरः ॥ धृष्टद्युम्नमुखान्वीरांश्चोदयामासभारत १
चेदिकाशिकरूषाणांनेतारंदृढविक्रमम् ॥ सेनापतिममित्रघ्नंधृष्टकेतुमथादिशत् २ विराटंद्रुपदंचैवयुयुधानंशिखंडिनम् ॥ पांचाल्यौचमहेष्वासौयुधामन्यूत्तमौजसौ
३ तेशूराश्चित्रवर्माणस्तप्तकुंडलधारिणः ॥ आज्यावसिक्ताज्ज्वलिताधिष्ण्येष्विवहुताशनाः ४ अशोभंतमहेष्वासाग्रहाःप्रज्वलिताइव ॥ अथसैन्यंयथायोगंपूजयि
त्वानरर्षभः ५ दिदेशतान्यनीकानिप्रयाणायमहीपतिः ॥ तेषांयुधिष्ठिरोराजाससैन्यानांमहात्मनाम् ६ व्यादिदेशसबाह्यानांभक्ष्यभोज्यमनुत्तमम् ॥ सगजाश्वमनु
ष्याणांयेचशिल्पोपजीविनः ७ अभिमन्युंबृहंतंचद्रौपदेयांश्चसर्वशः ॥ धृष्टद्युम्नमुखानेतान्प्राहिणोत्पांडुनंदनः ८ भीमंचयुयुधानंचपांडवंचधनंजयम् ॥ द्वितीयं
प्रेषयामासबलस्कंधंयुधिष्ठिरः ९ भांडंसमारोपयतांचरतांसंप्रधावताम् ॥ हृष्टानांतत्रयोधानांशब्दोदिवमिवास्पृशत् १० स्वयमेवततःपश्चाद्विराटद्रुपदान्वितः ॥ अ
थापरैर्महीपालैःप्रययौपृथिवीपतिः ११ भीमधन्वायनीसेनाधृष्टद्युम्नेनपालिता ॥ गंगेवपूर्णास्तिमितास्यंदमानाव्यदृश्यत १२ ततःपुनरनीकानिव्ययोजयतबुद्धि
मान् ॥ मोहयन्धृतराष्ट्रस्यपुत्राणांबुद्धिनिश्चयम् १३ द्रौपदेयान्महेष्वासानभिमन्युंचपांडवः ॥ नकुलंसहदेवंचसर्वांश्चैवप्रभद्रकान् १४

ठीये भारतभावदीपे पंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥ ॥ ॥ तथैवेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ बलस्कंधंसैन्यसमुदायं ९ भांडंयुद्धोपकरणम् १०
११ भीमधन्वानःअयन्तेप्रचरन्त्यस्यामितिभीमधन्वायनी १२ । १३ । १४

१५ । १६ । १७ कृतप्रहरणाः कृतयुद्धाः १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ शकटाभांडवंतिअनांसि आपणोवणिक्समुदायः वेशोवेश्याजनः यानंयुद्धयोग्यंवाहनं युग्यंकेवलंवाहनं फल्गुवा

दशचाश्वसहस्राणिद्विसहस्राणिदंतिनाम् ॥ अयुतंचपदातीनांरथाःपंचशतंतथा १५ भीमसेनस्यदुर्धर्षंप्रथमंप्रादिशद्बलम् ॥ मध्यमेचविराटंचजयत्सेनंचपांडवः
१६ महारथौचपांचाल्यौयुधामन्यूत्तमौजसौ ॥ वीर्यवंतौमहात्मानौगदाकार्मुकधारिणौ १७ अन्वयातांतदामध्येवासुदेवधनंजयौ ॥ बभूवुरतिसंरब्धाःकृत
प्रहरणानराः १८ तेषांविंशतिसाहस्राहयाःशूरैरधिष्ठिताः ॥ पंचनागसहस्राणिरथवंशाश्चसर्वशः १९ पदातयश्चयेशूराःकार्मुकासिगदाधराः ॥ सहस्रशोऽ
न्वयुःपश्चादग्रतश्चसहस्रशः २० युधिष्ठिरोयत्रसैन्येस्वयमेवबलार्णवे ॥ तत्रतेपृथिवीपालाभूयिष्ठंपर्यवस्थिताः २१ तत्रनागसहस्राणिहयानामयुतानिच ॥
तथारथसहस्राणिपदातीनांचभारत २२ चेकितानःस्वसैन्येनमहतापार्थिवर्षभ ॥ धृष्टकेतुश्चचेदीनांप्रणेतापार्थिवोययौ २३ सात्यकिश्चमहेष्वासोवृष्णीनांप्रव
रोरथः ॥ वृतःशतसहस्रेणरथानांप्रणुदन्बली २४ क्षत्रदेवब्रह्मदेवौरथस्थौपुरुषर्षभौ ॥ जघनंपालयंतौचपृष्ठतोऽनुप्रजग्मतुः २५ शकटापणवेशाश्चयानंयुग्यं
चसर्वशः ॥ तत्रनागसहस्राणिहयानामयुतानिच ॥ फल्गुसर्वंकलत्रंचयत्किंचित्कृशदुर्बलम् २६ कोशसंचयवाहांश्चकोष्ठागारंतथैवच ॥ गजानीकेनसंगृह्यशनैःप्रा
यायुधिष्ठिरः २७ तमन्वयात्सत्यधृतिःसौचित्तिर्युद्धदुर्मदः ॥ श्रेणिमान्वसुदानश्चपुत्रःकाश्यस्यवाविभुः २८ रथाविंशतिसाहस्रायेतेषामनुयायिनः ॥ हया
नांदशकोट्यश्चमहतांकिंकिणीकिनाम् २९ गजाविंशतिसाहस्राईषादंताःप्रहारिणः ॥ कुलीनाभिन्नकरटामेघाइवविसर्पिणः ३० षष्टिर्नागसहस्राणिदशान्यानि
चभारत ॥ युधिष्ठिरस्ययान्यासन्युधिसेनामहात्मनः ३१ क्षरंतइवजीमूताःप्रभिन्नकरटामुखाः ॥ राजानमन्वयुःपश्चाच्चलंतइवपर्वताः ३२ एवंतस्यबलंभीमं
कुंतीपुत्रस्यधीमतः ॥ यदाश्रित्याथयुयुधेधार्तराष्ट्रंसुयोधनम् ३३ ततोऽन्येशतशःपश्चात्सहस्रायुतशोनराः ॥ नर्दन्तःप्रययुस्तेषामनीकानिसहस्रशः ३४ तत्र
भेरीसहस्राणिशंखानामयुतानिच ॥ न्यवादयंतसंहृष्टाःसहस्रायुतशोनराः ३५ ॥ इतिश्रीमहाभारतेउद्योगपर्वणिअंबोपाख्यानपर्वणिपांडवसेनानिर्याणे षण्णवत्य
धिकशततमोऽध्यायः ॥ १९६ ॥ ॥ समाप्तमुद्योगपर्व ॥ ॥ अस्यानन्तरंभीष्मपर्वभविष्यति तस्यायमाद्यःश्लोकः ॥ जनमेजयउवाच ॥
कथंयुयुधिरेवीराःकुरुपांडवसोमकाः ॥ पार्थिवाःसुमहात्मानोनानादेशसमागताः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

लादिकं कलत्रंस्त्र्यादिकं २६ कोशोधनं कोष्ठोधान्यादिसामग्री संगृह्यएकीकृत्य २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंस
गोविंदसूरिसूनोः श्रीनीलकंठस्यकृतौ भारतभावदीपे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥


भीष्म पर्व. ६
श्रीकृष्ण
अर्जुन.
भीष्म.

# ॥ महाभारतम् ॥

## भीष्मपर्व ।

### —६—

### विषयानुक्रमणिका ।

(२) भूमिपर्व



(३) भगवद्गीतापर्व



# भगवद्गीताविषयानुक्रमः ।

तत्प्रदर्शनं भगवता।नित्यकर्मत्या-
गोपपत्त्यभावकथनपुरःसरं ताम-
सादिभेदेन त्यागस्य त्रिविध-
त्वम् । फलासक्तित्यागपूर्वकं
नित्यकर्म कुर्वतो नैष्कर्म्यलक्षण-
ज्ञाननिष्ठाप्राप्तिप्रतिपादनम्। कर्म-
फलत्यागिनस्त्यागीत्यभिधान—
कथनम्। संन्यासिनामनिष्टादि-
त्रिविधफलाभावः। सर्वकर्मणा-
मधिष्ठानादिकारणपञ्चकवर्णनम्।
केवलात्मनि कर्तृत्वाभिमानिनां
दुर्मतित्वस्य कथनम् । कर्तृत्वा-
भिमानरहितस्य सुमतित्वकथ-
नम् । कर्मप्रवर्तकज्ञानादित्रयस्य
करणादित्रयस्य च प्रदर्शनम् ।
ज्ञानकर्मकर्तॄणां गुणभेदेन त्रैविध्य-
कथनप्रतिज्ञा । सात्त्विकादिभेदेन
ज्ञानकर्मकर्तॄणां त्रैविध्यकथनम् ।
बुद्धिधृत्योर्गुणभेदेन त्रैविध्यकथ-
नप्रतिज्ञा । सात्त्विकादिभेदेन बु-
द्धिधृतिसुखानां त्रैविध्यकथनम् ।
संसारान्तर्गतस्य सर्वस्य त्रिगु-
णात्मकत्वम् । ब्राह्मण-क्षत्रिय-
वैश्य-शूद्रकर्मणां विभागः। ब्रा-
ह्मणादीनां स्वस्वकर्मणा भगव-
दाराधनेन ज्ञाननिष्ठायोग्यताल-
क्षणसिद्धिप्रतिपादनम्। स्वधर्म-
स्यात्याज्यताप्रतिपादनम् । आ-
सक्त्यादिरहितस्य संन्यासेन
ज्ञाननिष्ठालक्षणनैष्कर्म्यसिद्धिक-
थनम् । केवलात्मज्ञाननिष्ठारूप
नैष्कर्म्यलक्षणसिद्धिप्राप्तिक्रमक-
थनप्रतिज्ञा। विस्तरेण परज्ञाननि-
ष्ठाप्राप्तिक्रमकथनम् । उक्तक्रमेण
ज्ञानलक्षणभक्तिप्राप्तिप्रतिपादनम्।
ज्ञानलक्षणभक्त्या भगवत्तत्त्व-
ज्ञानसिद्धिकथनम् । ज्ञाननिष्ठा-
योग्यताफलकस्य भगवद्भक्ति-
योगस्य स्तुतिः। अर्जुनं प्रति श्री-
कृष्णकृतो विवेकबुद्ध्या मयीश्वरे
सर्वकर्मसंन्यासपूर्वकं समाहित-
बुद्धित्वाश्रयणेन सर्वदा मदभि-
न्नेश्वरे चित्तस्थापनोपदेशः । म-
च्चित्तत्वे मत्प्रसादात्सर्वदुर्गतर-
णस्यान्यथा विनाशस्य च कृष्ण-
कृतं कथनम् । अहङ्काराश्रयणेन
युद्धाकरणं निश्चयस्य मिथ्या-
निश्चयत्वकथनपूर्वकमर्जुनस्य प्र-
कृतिपरतन्त्रत्वम् । ईश्वरस्यान्त-
र्यामित्वेन सर्वभूतप्रेरकत्वकथ-
नम् । सर्वभावेनेश्वराश्रयणे-
न शाश्वतपदप्राप्तिकथनम्। उक्त-
गुह्यतरज्ञानविचारेणेच्छानुरूप-
करणानुज्ञा। अर्जुनस्य परमप्रि-
प्रियत्वात्सर्वगुह्यतमवचनश्रवण-
प्रवर्तनम्। गुह्यतमस्य कर्मयोगनि-
ष्ठारहस्यस्येश्वरशरणत्वस्य क-
र्मयोगनिष्ठाफलस्य च सम्यग्द-
र्शनस्योपदेशः अपात्रे शास्त्रोपदे-
शनिषेधस्य, पात्रे तदुपदेशफल-
स्य च प्रतिपादनम् । एतच्छा-
स्त्राध्ययनश्रवणयोः फलकथनम्-
मदुक्तगीताशास्त्रश्रवणेनाज्ञानसं-
मोहः प्रनष्टः कच्चिदित्यर्जुनं प्रति
श्रीकृष्णप्रश्नः। 'नष्टो मोहः स्मृ-
तिर्लब्धा' इत्याद्यर्जुनोत्तरम्। 'इ-
त्यहं वासुदेवस्य' इत्यादिकेन स-
ञ्जयभाषणेन गीताशास्त्रस्य
समाप्तिः ... ... ... ६६

## (४) भीष्मवधपर्व

४३ गीता सुगीतेत्यादिना गीता-
पठनप्रशंसनं गीताश्लोकसंख्या-
कथनं च। गीतोपदेशानन्तरमर्जु-
नेन गाण्डीवे धृते हृष्टाः पाण्डवा-
दयः शङ्खान्दध्मुर्देवादयश्च युद्ध-
दर्शनार्थमाजग्मुः । युधिष्ठिरे
भीष्ममभिप्रेक्ष्य रथादवरुह्य
गच्छत्यनुगम्यमानेष्वर्जुनादिषु
पृच्छत्स्वपि निरुत्तरे सति तद-
भिप्रायं श्रीकृष्ण आह। कुरुसैन्ये-
निन्दति सति युधिष्ठिरो भीष्मं
प्रति चरणौ निपीड्य युद्धानुज्ञा-
माशिषं च प्रार्थयति स्म। यद्येव-
मित्यादिनाऽनागमने दोषमभि-

**अष्टमदिवसयुद्धम्।**

## नवमदिवसयुद्धम्।

कृष्णेन सांत्वितो युधिष्ठिरस्तदनु
मत्या वधोपायजिज्ञासया भीष्मं
प्रति कृष्णादिभिः सह जगाम
युधिष्ठिरादीन् प्रति भीष्मेण
स्वागतप्रश्ने कृते युधिष्ठिर-
स्तद्वधोपायं पप्रच्छ । भीष्म-
कथितमात्मवधोपायं श्रुत्वा
युधिष्ठिरादिषु स्वशिबिरमाग-
तेषु भीष्मेण सह युद्ध-
मनिच्छन्तमर्जुनं प्रति श्रीकृष्ण
उपदिदेश। शिखण्डिनं पुरस्कृत्ये-
त्याद्यर्जुनवाक्यं श्रुत्वा सर्वे हृष्टाः
सन्तः स्वानि स्वानि शयनानि
भेजिरे... ... ... ... १३२

## दशमदिवसयुद्धम् ।

१०८ युद्धार्थं निर्गतैः पाण्डवैर्व्यूहे
रचिते कौरवेषु चागतेषु
भीष्मस्य महद्युद्धम् । बाणां-
स्त्यजन्तं शिखण्डिनं प्रति भी-
ष्मेण 'त्वया नाहं योत्स्ये' इ-
त्युक्ते शिखण्डी 'ध्रुवं च त्वां ह-
निष्यामि' इत्याद्युक्त्वा बाणान्
मुमोच। अर्जुनः शिखण्डिनं प्रति
'अहं त्वामनुयास्यामि' इत्या-
द्युक्त्वा भीष्मं प्रति गन्तुं प्रेरया-
मास ... ... ... ... १३३
१०९ 'कथं शिखण्डी' इत्यादिके धृ-
तराष्ट्रप्रश्ने सञ्जयस्योत्तरम्। भी-
ष्मे महायुद्धं कुर्वत्यर्जुन आगत्य
बाणान् विसृजन् कालवच्चकार,
तद्भयात् कौरवसैन्यं दुद्राव च।
तद् दृष्ट्वा दुर्योधनेनोक्तो भीष्मः
'अहं वाद्य हतः शेषे' इत्यादि
प्रतिज्ञाय पाण्डवसैन्यं नाशया-
मास ... ... ... ... १३४
११० अर्जुनप्रेरितः शिखण्डी भीष्मं
प्रति जगाम तमनु धृष्टद्युम्ना-
दयोऽपि । योधप्रतियोधानां
द्वंद्वयुद्धानि । धृष्टद्युम्नोऽर्जु-
नप्रशंसापूर्वकं सर्वान् सैनिकान्
भीष्मं प्रेरयात स्म। दुःशासना-
र्जुनयोर्युद्धम् ... ... १३५
१११ अलम्बुषसात्यक्योर्युध्यमानयो-
रागतेन भगदत्तेन सह सात्यके-
र्युद्धम् । दुर्योधनप्रेरितानां त-
द्भ्रातॄणां सात्यकिना सह युद्धम्।
अभिमन्युकाम्बोजप्रभृतीनां द्वंद्व-
शो युद्धम् ... ... ... १३६
११२ युध्यमानो द्रोणो दुर्निमित्तानि
दृष्ट्वाऽश्वत्थामानं प्रति तत्कथन-
पूर्वकमर्जुनाजय्यात्वादिकं कथ-
यामास ... ... ... १३७
११३ भगदत्तादिभिर्दशभिर्भीमस्य युद्धे
प्रसक्ते तत्साहाय्यार्थमर्जुने आ-
गते सति दुर्योधनप्रेरितः सुश-
र्मा तं प्रत्याजगाम ... १३७
११४ भीमार्जुनयोः कौरवैः सह युध्य-
मानयोरर्जुनपराक्रमं दृष्ट्वा दुर्यो-
धनादिषु भीष्मसमीपं गतेषूभौ
कौरवसैन्यं नाशयामासतुः ।
शल्यार्जुनयोर्भीममागधयोर्द्रोण-
भीमयोश्च युद्धम् । भीष्मादीनां
पाण्डवादीनां च परस्परसमीप-
गमनोत्तरं महद्युद्धम् ... १३८
११५ भीष्मयुद्धजिज्ञासोर्धृतराष्ट्रस्य प्र-
श्ने सञ्जयस्य तत्कथनप्रतिज्ञा। भी-
ष्मोऽयुतशो योधान् हत्वा नि-
र्विण्णः सन्नात्मनाशाय समीपस्थं
युधिष्ठिरं प्रति प्रेरयति स्म। त-
च्छ्रुत्वा शिखण्डिनं पुरस्कृत्य पा-
ण्डवेषु भीष्मं प्रति गतेषु दुर्यो-
धनाज्ञया दुःशासनादयोऽर्जुनं
प्रत्याजग्मुः । सात्यकिप्रभृतिभि-
रश्वत्थामप्रभृतीनां युद्धम्... १३९
११६ अभिमन्युदुर्योधनप्रभृतीनां द्वंद्व-
शो युद्धवर्णनं द्रोणधृष्टद्युम्नयोः
सविस्तरं युद्धवर्णनं च। योद्धुं
भीष्मं प्रति गच्छन्नर्जुनो मध्ये यु-
द्धायागतस्य भगदत्तस्य गजं प्र-
ति बाणान्वर्षन् शिखण्डिनं प्रति
'याहि भीष्मं जहि' इत्युवाच।
भगदत्ते द्रुपदं प्रति गते शिखण्डि-
नं पुरस्कृत्य युद्धं प्रवर्तयन्नर्जुनः
स्वसमीपागतान् कौरववीरान्नि-
जग्राह। शिखण्डिनि बाणान्वर्ष-

ति क्रुद्धो भीष्मोऽस्त्राणि क्षिप्त्वा
सोमकान्निजघ्नन् घोरं युद्धं च-
कार ... ... ... ... १४०
११७ शिखण्डिना दशभिर्भल्लैर्हृदि ता-
डितोऽपि भीष्मस्तस्य स्त्रीत्वं
बुद्ध्वा न प्रतिजहे। अर्जुनप्रेरण-
या शिखण्डिनि बाणान् वर्षत्य-
पि भीष्मस्तमनादृत्यार्जुनं प्रति
बाणांश्चिक्षेप। अर्जुनदुःशासन-
योर्युध्यमानयोरर्जुनेन विजित-
स्यापि दुःशासनस्य पुनर्युद्धम्।
शिखण्डिनो बाणवृष्टिं सहमाने
भीष्मेऽर्जुनो दुर्योधनप्रेरणया
स्वसमीपागतान् योधान् प्रति
बाणान् ववर्ष। अर्जुनो बाणप्रहा-
रेण नानाविधान् योधान्नाशयि-
त्वा दुःशासनमागत्य तस्य सा-
रथिं हयांश्च जघान। अर्जुनेन वि-
रथीकृताः कृपादयो युद्धात्संप्रा-
द्रवन्। सञ्जयो युध्यमानस्यार्जु-
नस्य स्वरूपं वर्णयन् शोणितन-
द्यादिकं युद्धभूमिं च वर्णयामा-
स। अभिमुखमायान्तं भीष्मं
प्रति शिखण्डिनि गतेऽर्जुनो
भीष्ममोहनपूर्वकं सैन्यं नि-
जघ्ने ... ... ... ... १४१
११८ निर्मर्यादे युद्धे प्रवृत्ते शल्यादिभि-
र्विद्धानां भीष्मेण निकृत्तानां पा-
ण्डवसैनिकानां वर्णनम्। पार्थे
सेनां मारयति पराक्रान्तं भीष्म-
मवलोक्य धार्तराष्ट्राः पाण्डवा-
न्प्रति जग्मुः। दुर्योधनकृतक्लेशा-
न् स्मृत्वा पाण्डवेषु निर्भयं युध्य-
मानेषु सेनापतेर्धृष्टद्युम्नस्य प्रेरण-
या योधा भीष्मं प्रति गत्वा श-
रान् ववृषुः। भीष्मो रामात्प्राप्ता-
मस्त्रशिक्षां स्मृत्वा गजाश्वादीन्
निघ्नन् शतानीकं वीरं जघान,
पराक्रान्तं भीष्मं दृष्ट्वा श्रीकृष्णेन प्रे-
रितस्यार्जुनस्य बाणान् स खण्ड-
यामास। भीष्मबाणैः पीड्यमा-
नेषु पाञ्चालराजादिष्वर्जुनेन र-
क्ष्यमाणे शिखण्डिनि भीष्मं प्रति
गते सात्यकिप्रभृतयोऽपि तमभि-
दुद्रुवुः। सात्यकिप्रभृतीनां
बाणान् विधूय सेनां प्रविशति
शिखण्डिनमुपेक्षमाणे भीष्मे
मत्स्यादिभिर्बाणैराच्छन्नेऽर्जुन—
स्य शिखण्डिपुरस्कारेण तत्समी-
पगमनम् ... ... ... १४२
११९ पाण्डवैर्बाणैस्ताडितोऽपि भी-
ष्मोऽव्यथमानो युगान्ताग्निसमो
बभौ। पाञ्चालराजादीनवमत्य
सेनामध्यं प्राप्य सात्यक्यादीन्
विध्यति भीष्मे तद्बाणान्निवार्य ते
बाणांस्तत्यजुः। शिखण्डिपुर-
स्कारेण युध्यमानेनार्जुनेन भीष्म-
धनुषि छिन्ने तदसहमाना द्रोणा-
दयोऽर्जुनाभिमुखं जग्मुः। अर्जुन-
साहाय्यार्थमागतेषु सात्यकि-
प्रमुखेषूभयोः सेनयोर्युद्धे प्रवृत्तेऽ-
र्जुनरक्षितः शिखण्डी भीष्मस्य
धनुरादिकं चिच्छेद। छिन्नश-
क्तिदर्शनेन चिन्ताक्रान्तो भीष्मो
यदा स्वमृत्युं बहु मेने तदा वि-
यत्स्था ऋषयो वसवश्चानुमतिं
दुंदुभिनादपूर्वकं ददुर्देवाश्च पु-
ष्पाणि ववृषुः। शिखण्डिबाण-
प्रहारैरचलस्य भीष्मस्यार्जुनो-
मर्माणि विद्ध्वा ध्वजादिकं चि-
च्छेद। अर्जुनबाणेनातिविद्धो
भीष्मो दुःशासनं प्रति तस्याज-
य्यत्वं कथयित्वा तद्बाणप्रहारवेद-
नामभिनयपूर्वकं प्रदर्श्य तं प्रति
शक्तिं चिक्षेप। अर्जुनेन शक्तौ
छिन्नायां भीष्मः खड्गचर्मणी गृ-
हीत्वा यावद्रथादनवरूढस्तावत्त-
च्चर्म शतधा चिच्छेद। युधिष्ठिर-
प्रेरितेषु सैन्येषु भीष्मं प्रत्याग-
तेषु तज्जयेप्सया धार्तराष्ट्रेषु चाग-
तेषूभयोः सैन्ययोस्तुमुलं युद्धम्।
अर्जुनेन निशितैर्बाणैर्निरन्तरं स-
र्वाङ्गेषु विद्धो भीष्मः प्राक्शिरा
रथात्पपात। दिव्यभावं गतो भी-

॥ समाप्तेयं भीष्मपर्वविषयानुक्रमणिका ॥

श्रीगणेशायनमः ॥ ॥ श्रीलक्ष्मणार्यगुरवेजडजन्तुचक्षुर्बन्धापनोदनमलेनर्हिरोन्चतेऽन्यत ॥ पादावनेजनमुखाऽपचितिस्ततस्तुश्रीभीष्मपर्वणिविदधमहिभावदीपम ॥ १ ॥ पूर्वस्मिन्पर्वणिभगवद्भक्तःसत्य
पिसामर्थ्येयःसत्यंपालयत्यैश्वर्यंचनप्रकाशयतिकालेप्राप्तेऽन्यस्मैउपकरोतिचेतिपांडवाचारप्रदर्शनव्याजेनदर्शितं । तमेवंभूतंस्वयंभगवान्हितोपदेशेनानुगृह्णातितदीयांप्रतिज्ञांचस्वप्रतिज्ञाबाधेनैवसत्यांकरोतीत्यर्जु
नोपदेशेनभीष्मवधार्थंभगवतःशस्त्रधारणेनचदर्शयिष्यन्भीष्मपर्वारभते । पूर्वत्रयुद्धोद्योगंश्रुत्वायुद्धंश्रोतुकामोजनमेजयउवाच कथंयुयुधिरेवीराइति १ तपःक्षेत्रेइति । खड्गधारातीर्थेऽस्मिन्स्नानमत्युचितमिति

श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ जनमेजयउवाच ॥
कथंयुयुधिरेवीराःकुरुपांडवसोमकाः ॥ पार्थिवाःसुमहात्मानोनानादेशसमागताः १ ॥ वैशम्पायनउवाच ॥ यथायुयुधिरेवीराःकुरुपांडवसोमकाः ॥ कुरुक्षेत्रे
तपःक्षेत्रेशृणुत्वंपृथिवीपते २ तेऽवतीर्यकुरुक्षेत्रंपांडवाःसहसोमकाः ॥ कौरवाःसमवर्तन्तजिगीषंतोमहाबलाः ३ वेदाध्ययनसंपन्नाःसर्वेयुद्धाभिनंदिनः ॥ आशं
संतोजयंयुद्धेबलेनाभिमुखारणे ४ अभियायचदुर्धर्षांधार्त्तराष्ट्रस्यवाहिनीम् ॥ प्राङ्मुखाःपश्चिमेभागेन्यविशंतससैनिकाः ५ समंतपंचकाद्बाह्यंशिबिराणिसहस्र
शः ॥ कारयामासविधिवत्कुंतीपुत्रोयुधिष्ठिरः ६ शून्याचपृथिवीसर्वाबालवृद्धावशेषिता ॥ निरश्वपुरुषेवासीद्रथकुंजरवर्जिता ७ यावत्तपतिसूर्योहिजंबूद्वीप
स्यमंडलम् ॥ तावदेवसमायातंबलंपार्थिवसत्तम ८ एकस्थाःसर्ववर्णास्तेमंडलंबहुयोजनम् ॥ पर्याक्रामंतदेशांश्चनदीःशैलान्वनानिच ९ तेषांयुधिष्ठिरोराजा
सर्वेषांपुरुषर्षभ ॥ व्यादिदेशसबाह्यानांभक्ष्यभोज्यमनुत्तमम् १० शय्याश्चविविधास्ताततेषांरात्रौयुधिष्ठिरः ॥ एवंवेदीवेदितव्यःपांडवेयोऽयमित्युत ११
अभिज्ञानानिसर्वेषांसंज्ञाश्चाभरणानिच ॥ योजयामासकौरव्योयुद्धकालउपस्थिते १२ दृष्ट्वाध्वजाग्रंपार्थस्यधार्तराष्ट्रोमहामनाः ॥ सहसर्वैर्महीपालैःप्रत्यव्यूहतपां
डवम् १३ पांडुरेणातपत्रेणध्रियमाणेनमूर्द्धनि ॥ मध्येनागसहस्रस्यभ्रातृभिःपरिवारितः १४ दृष्ट्वादुर्योधनंहृष्टाःपंचालायुद्धनंदिनः ॥ दध्मुःप्रीतामहाशंखान्भे
रीश्चमधुरस्वनाः १५ ततःप्रहृष्टांतांसेनामभिवीक्ष्याथपांडवाः ॥ बभूवुर्हृष्टमनसोवासुदेवश्चवीर्यवान् १६ ततोहर्षंसमागम्यवासुदेवधनंजयौ ॥ दध्मतुःपुरुषव्या
घ्रौदिव्यौशंखौरथेस्थितौ १७ पांचजन्यस्यनिर्घोषंदेवदत्तस्यचोभयोः ॥ श्रुत्वातुनिनदंयोधाःशकृन्मूत्रंप्रसुस्रुवुः १८ यथासिंहस्यनदतःस्वनंश्रुत्वेतरेमृगाः ॥
त्रसेयुर्निनदंश्रुत्वातथासीदततद्बलम् १९ उदतिष्ठद्रजोभौमंनप्राज्ञायतकिंचन ॥ अस्तंगतइवादित्येसैन्येनसहसाऽऽवृते २० ववर्षतत्रपर्जन्योमांसशोणितवृष्टिमान् ॥
दिक्षुसर्वाणिसैन्यानितदद्भुतमिवाभवत् २१

भावः २ जिगीषंतोऽन्योन्यंजेतुमिच्छंतः ३ । ४ अभियायअभ्येत्य. न्यविशंतपांडवीयाइतिशेषः ५ बाह्यंबहिः ६ । ७ यावत्तपतिसूर्यइत्यनेनकृत्स्नंसप्तद्वीपात्मकंभूवलयंजंबूद्वीपशब्देनोच्यते लिंग
समवायात्छत्रिणोगच्छंतीतिवत् ८ । ९ सबाह्यानांकैवर्तम्लेच्छांत्रादिप्रांत्यदेशवासिनोबाह्यास्तत्सहितानां १० भक्ष्यादिदानफलमाह एवमिति । एवंवेदीविद्वानइतिअन्यैःपांडवेयोज्ञातव्यइत्येतदर्थमि
त्यर्थः ११ अभिज्ञानानिस्वकीयचिह्नानि स्वीयाएवस्वीयान्मानिहन्युरित्येतदर्थं १२ । १३ । १४ । १५ । १६ । १७ शकृद्पुरीषं १८ असीदत्अवसन्नमभूत् १९ । २० । २१

शर्कराःस्थूलवालुकाःकर्षयतीतितथा विनिघ्नन्शर्कराभिरित्यर्थः २२ सागरक्षुभितोपमेक्षुभितसागरोपमे २३ । २४ २५ । २६ धर्मान् पराङ्मुखस्त्यक्तशस्त्रः शरणागतोऽन्येनसंयुक्तश्च नहंतव्यइत्यादीन् २७
धर्मसंस्थापनमेवाह यथापरमिति । यथायोगंतुल्ययोर्योगस्यानतिक्रमणंयथायेनप्रकारेण अपरंअनुत्कृष्टंअन्याय्यमित्यर्थः । तथानकस्यचित्तुल्ययोगातिक्रमःस्यादितिभावः २८ गजधूर्गतःगजस्कंधगतः २९ । ३०

वायुस्ततःप्रादुरभून्नीचैःशर्करकर्षणः ॥ विनिघ्नंस्तान्यनीकानिशतशोऽथसहस्रशः २२ उभेसैन्येचराजेन्द्रयुद्धायमुदितेभृशम् ॥ कुरुक्षेत्रेस्थितेयत्तेसागरक्षुभितोपमे
२३ तयोस्तुसेनयोरासीदद्भुतःसतुसंगमः ॥ युगांतेसमनुप्राप्तेद्वयोःसागरयोरिव २४ शून्याऽऽसीत्पृथिवीसर्वावृद्धबालावशेषिता ॥ निरश्वपुरुषेवासिद्रथकुंजरवर्जिता
२५ तेनसेनासमूहेनसमानीतेनकौरवैः ॥ ततस्तेसमयंचक्रुःकुरुपांडवसोमकाः २६ धर्मान्संस्थापयामासुर्युद्धानांभरतर्षभ ॥ निवृत्तेविहितेयुद्धेस्यात्प्रीतिर्नःपरस्परम्
२७ यथापरंयथायोगंनचस्यात्कस्यचित्पुनः ॥ वाचायुद्धप्रवृत्तानांवाचैवप्रतियोधनम् ॥ निष्क्रांताःपृतनामध्यान्नहंतव्याःकदाचन २८ रथीचरथिनायोध्योगजेन
गजधूर्गतः ॥ अश्वेनाश्वीपदातिश्चपादातेनैवभारत २९ यथायोगंयथाकामंयथोत्साहंयथाबलम् ॥ समाभाष्यप्रहर्त्तव्यंनविश्वस्तेनविह्वले ३० एकेनसहसंयुक्तःप्रपन्नो
विमुखस्तथा ॥ क्षीणशस्त्रोविवर्माचनहंतव्यःकदाचन ३१ नसूतेषुनधुर्येषुनचशस्त्रोपनायिषु ॥ नभेरीशंखवादेषुप्रहर्त्तव्यंकथंचन ३२ एवंतेसमयंकृत्वाकुरुपांडव
सोमकाः ॥ विस्मयंपरमंजग्मुःप्रेक्षमाणाःपरस्परम् ३३ निविश्यचमहात्मानस्ततस्तेपुरुषर्षभाः ॥ हृष्टरूपाःसुमनसोबभूवुःसहसैनिकाः ३४ ॥ इतिश्रीमहाभारते
भीष्मपर्वणिजंबूखंडविनिर्माणपर्वणिसैन्यशिक्षणेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ वैशम्पायनउवाच ॥ ततःपूर्वापरेसैन्येसमीक्ष्यभगवानृषिः ॥ सर्ववेदविदां
श्रेष्ठोव्यासःसत्यवतीसुतः १ भविष्यतिरणेघोरेभरतानांपितामहः ॥ प्रत्यक्षदर्शीभगवान्भूतभव्यभविष्यवित् २ वैचित्रवीर्यंराजानंसरहस्यंब्रवीदिदम् ॥ शोचंतमार्त्तं
ध्यायंतंपुत्राणामनयंतदा ३ ॥ व्यासउवाच ॥ राजन्परीतकालास्तेपुत्राश्चान्येचपार्थिवाः ॥ तेहिंसंतीवसंग्रामेसमासाद्येतरेतरम् ४ तेषुकालपरीतेषुविनश्यत्स्वेव
भारत ॥ कालपर्यायमाज्ञायमास्मशोकेमनःकृथाः ५ यदिचेच्छसिसंग्रामेद्रष्टुमेतान्विशांपते ॥ चक्षुर्ददानितेपुत्रयुद्धंतत्रनिशामय ६ ॥ धृतराष्ट्रउवाच ॥ नरोचये
ज्ञातिवधंद्रष्टुंब्रह्मर्षिसत्तम ॥ युद्धमेतत्त्वशेषेणशृणुयांतवतेजसा ७ ॥ वैशंपायनउवाच ॥ एतस्मिन्नेच्छतिद्रष्टुंसंग्रामंश्रोतुमिच्छति ॥ वराणामीश्वरोव्यासःसंजया
यवरंददौ ८ ॥ व्यासउवाच ॥ एषतेसंजयोराजन्युद्धमेतद्वदिष्यति ॥ एतस्यसर्वसंग्रामेनपरोक्षंभविष्यति ९ चक्षुषासंजयोराजन्दिव्येनैवसमन्वितः ॥ कथयिष्यति
तेयुद्धंसर्वज्ञश्चभविष्यति १० प्रकाशंवाऽप्रकाशंवादिवावायदिवानिशि ॥ मनसाचिंतितमपिसर्वंवेत्स्यतिसंजयः ११ नैनंशस्त्राणिछेत्स्यंतिनैनंबाधिष्यतेश्रमः ॥ गाव
ल्गणिरयंजीवन्युद्धादस्माद्विमोक्ष्यति १२

३१ । ३२ । ३३ । ३४ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपे प्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ततइति १ भविष्यतिभाविनि २ । ३ । ४ हिंसंतीत्वनाशयिष्यंस्येव ४
पर्यायंवैपरीत्यं ५ निशामयपश्य ६ नपरोक्षमितिपाठेप्रत्यक्षं ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ । १६ नगाग्रेषुवृक्षाग्रेषुसंपतंतिएकीभूयपतंति समवायान्संघान् १७ अभ्यग्रंसमीपं क्रव्यादामांसभक्षकाःसृगालकाकादयः १८ वाशंतःशब्दंकुर्वन्तः १९ । २० परिघाःपरिवेषाः
कृष्णग्रीवाः श्वेतलोहितपर्यंताश्च मध्येकृष्णास्ततोबहिःश्वेतास्ततोबहिर्लोहिताइतित्रिवर्णाः संधौसंध्यायां अवारयन्अवेष्टयन् २१ निर्विशेषदिनक्षयंअहोरात्रं निश्चयेनविगतःशेषोयस्यतस्यदिनस्यतिथेः
क्षयोयस्मिन् सूर्योदयद्वयास्पर्शिनीक्षयतिथिर्यस्मिन्अहोरात्रे तन्मयादृष्टं । तदेवविशिनष्टि ज्वलितेति । अर्केन्द्वोर्नक्षत्रममावास्यायामुभाभ्यामाक्रांतंनक्षत्रंतदेवज्वलितंपापग्रहाक्रांतं यस्मिन्दर्शेक्षयतिथिःतन्नक्ष

अहंतुकीर्तिमेतेषांकुरूणांभरतर्षभ ॥ पांडवानांचसर्वेषांप्रथयिष्यामिमाशुचः १३ दिष्टमेतन्नरव्याघ्रनाभिशोचितुमर्हसि ॥ नचैवशक्यंसंयंतुंयतोधर्मस्ततोजयः
१४ ॥ वैशंपायनउवाच ॥ एवमुक्त्वासभगवान्कुरूणांप्रपितामहः ॥ पुनरेवमहाभागोधृतराष्ट्रमुवाचह १५ इहयुद्धेमहाराजभविष्यतिमहान्क्षयः ॥ तथे
हचनिमित्तानिभयदान्युपलक्षये १६ श्येनागृध्राश्चकाकाश्चकंकाश्चसहिताबकैः ॥ संपतंतिनगाग्रेषुसमवायांश्चकुर्वते १७ अभ्यग्रंचप्रपश्यंतियुद्धमानंदिनो
द्विजाः ॥ क्रव्यादाभक्षयिष्यंतिमांसानिगजवाजिनाम् १८ निर्दयंचाभिवाशंतोभैरवाभयवेदिनः ॥ कंकाःप्रयांतिमध्येनदक्षिणामभितोदिशम् १९ उभेपूर्वा
परेसंध्येनित्यंपश्यामिभारत ॥ उदयास्तमनेसूर्यंकबंधैःपरिवारितम् २० श्वेतलोहितपर्यंताःकृष्णग्रीवाःसविद्युतः ॥ त्रिवर्णाःपरिघाःसंधौभानुमंतमवारयन्
२१ ज्वलितार्केन्दुनक्षत्रंनिर्विशेषदिनक्षयम् ॥ अहोरात्रंमयादृष्टंतद्भयायभविष्यति २२ अलक्ष्यःप्रभयाहीनःपौर्णमासींचकार्तिकीम् ॥ चंद्रोऽभूदग्निवर्णश्चपद्मव
र्णनभस्तले २३ स्वप्स्यंतिनिहतावीराभूमिमावृत्यपार्थिवाः ॥ राजानोराजपुत्राश्चशूराःपरिघबाहवः २४ अंतरिक्षेवराहस्यवृषदंशस्यचोभयोः ॥ प्रणादंयु
द्ध्यतोरात्रौरौद्रंनित्यंप्रलक्षये २५ देवताप्रतिमाश्चैवकंपंतिचहसंतिच ॥ वमंतिरुधिरंचास्यैःखिद्यंतिप्रपतंतिच २६ अनाहतादुंदुभयःप्रणदंतिविशांपते ॥
अयुक्ताश्चप्रवर्तंतेक्षत्रियाणांमहारथाः २७ कोकिलाःशतपत्राश्चचाषाभासाःशुकास्तथा ॥ सारसाश्चमयूराश्चवाचोमुंचंतिदारुणाः २८ गृहीतशस्त्राःक्रोशंतिच
र्मिणोवाजिपृष्ठगाः ॥ अरुणोदयेप्रदृश्यंतेशतशःशलभव्रजाः २९ उभेसंध्येप्रकाशंतेदिशोदाहसमन्विते ॥ पर्जन्यःपांसुवर्षीचमांसवर्षीचभारत ३० याचैषा
विश्रुताराजंस्त्रैलोक्येसाधुसंमता ॥ अरुंधतीतयाऽप्येषवसिष्ठःपृष्ठतःकृतः ३१ रोहिणींपीडयन्नेषस्थितोराजन्शनैश्चरः ॥ व्यावृत्तंलक्ष्मसोमस्यभविष्यतिमहद्भ
यम् ३२ अनभ्रेचमहाघोरःस्तनितःश्रूयतेस्वनः ॥ वाहनानांचरुदतांनिपतंत्यश्रुबिंदवः ३३ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिजंबूखंडविनिर्माणपर्वणिश्रीवेदव्या
सदर्शनेद्वितीयोऽध्यायः ॥ २ ॥

त्रंचपापग्रहइत्ययंमहान्दुर्योगइत्यर्थः २२ पद्मवर्णेरक्तपद्मवर्णे । 'लोहिनीद्यौर्भवतियथामंजिष्ठा' इतिश्रुतेर्दिवोरक्तत्वमशुभसूचकं २३ । २४ वराहोगृहकोलो वृषदंशोमार्जारस्तयोर्भूचरयोरप्यंतरिक्षेउत्प्लु
त्ययुद्ध्यतोःप्रणादं २५ । २६ अयुक्ताअश्वैरयोजिताअपिप्रवर्तंतेचलंति महांतोरथामहारथाः २७ । २८ गृहीतशस्त्राःआत्तलोहालोहतुंडाइतियावत् । 'शस्त्रमायुधलोहयोः' इत्यमरः । चर्मिणोभृंग
रिटिसंज्ञाःकृष्णशलभविशेषाः । 'चर्मीफलकपाणौस्याद्भूर्जेभृंगरिटावपि' इतिमेदिनी । तेवाजिपृष्ठगाअश्वांस्तुदंतोदृश्यंतइत्यर्थः २९ । ३० । ३१ व्यावृत्तंनष्टं लक्ष्महीनश्चंद्रोदृश्यतइत्यर्थः ३२ स्त
नितःस्वनो गर्जितरूपःशब्दः ३३ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेद्वितीयोऽध्यायः ॥ २ ॥

खराःप्रजायंतेमिथुनीभवंति उत्पद्यंतइतिवा १ क्रव्यादाःसारमेयादयः २ । ३ विषाणिनःशृंगवंतस्तार्क्ष्याएव ४ । ५ वडवाअश्वा श्वाशुनी करभोमृगविशेषः । 'करभःकलभोवाष्टापदेप्रोक्तोमृगांतरे'इतिविश्वः ६ प्रजायंतेजनयंति ७ पृथग्जनस्यनीचजनस्यसंबंधिनःक्षुद्रकाःव्यंगाःचंडालादिषुजाताःकाणकुब्जादयइत्यर्थः । 'क्षुद्राव्यंगानटी'इत्यादिमेदिनी ८ । ९ नगराणिकृत्रिमाणिशिशवएवावमृद्नंति पद्मानिमहांतिउत्पलानिक्षुद्राणीतिभेदः कुमुदानिचंद्रोदयविकासीनितान्येव १० वर्त्ततेवर्त्तयतिदीप्यतइत्यर्थः नित्यंदावदाहोभवतीतियावत् कल्पतइतिपाठेपिसएवार्थः । कार्तिक्याःपरंहिसंग्रामारंभस्तत्रतुलास्थमर्कराहुरुपैति ११ तदैवश्वेतोग्रहःकेतुश्चित्रामतिक्रामतिस्वात्यादौवर्त्तते नित्यंसमसप्तकस्थौराहुकेतूइदानीमेकराशिगतौमहानिष्टसूचकावितिभावः १२ धूमकेतुरुपग्रहविशेषःसपुष्यंक्षत्रियनक्षत्रमाक्रम्यतिष्ठति तथावक्ष्यमाणरीत्याज्येष्ठास्थेनापिकेतुनापुष्योविद्धस्तथाचस्वनक्षत्रेक्रूराक्रांतेक्रूरविद्धेचसत्यवश्यंक्षत्रियाणांनाशोभवतीत्यर्थः यथोक्तं । 'कृत्तिकायांतथापुष्येरेवत्यांचपुनर्वसौ ॥ वेधे

व्यासउवाच ॥ खरागोषुप्रजायंतेरमन्तेमातृभिःसुताः ॥ अनार्तवंपुष्पफलंदर्शयंतिवनद्रुमाः १ गर्भिण्योऽजातपुत्राश्चजनयंतिविभीषणान् ॥ क्रव्यादाःपक्षिभिश्चापिसहाश्नंतिपरस्परम् २ त्रिविषाणाश्चतुर्नेत्राःपंचपादाद्विमेहनाः ॥ द्विशीर्षाश्चद्विपुच्छाश्चदंष्ट्रिणःपशवोऽशिवाः ३ जायंतेविवृतास्याश्चव्याहरंतोऽशिवागिरः ॥ त्रिपदाःशिखिनस्तार्क्ष्याश्चतुर्दंष्ट्राविषाणिनः ४ तथैवान्याश्चदृश्यंतेस्त्रियोवैब्रह्मवादिनाम् ॥ वैनतेयान्मयूरांश्चजनयंतिपुरेतव ५ गोवत्संवडवासूतेश्वासृगालंमहीपते ॥ कुक्कुरान्करभाश्चैवशुकाश्चाशुभवादिनः ६ स्त्रियःकाश्चित्प्रजायंतेचतस्रःपंचकन्यकाः ॥ जातमात्राश्चनृत्यंतिगायंतिचहसंतिच ७ पृथग्जनस्यसर्वस्यक्षुद्रकाःप्रहसंतिच ॥ नृत्यंतिपरिगायंतिवेदयंतोमहद्भयम् ८ प्रतिमाश्चालिखंत्येताःसशस्त्राःकालचोदिताः ॥ अन्योन्यमभिधावंतिशिशवोदंडपाणयः ९ अन्योन्यमभिमृद्नंतिनगराणियुयुत्सवः ॥ पद्मोत्पलानिवृक्षेषुजायंतेकुमुदानिच १० विष्वग्वाताश्चवांत्युग्रारजोनाप्युपशाम्यति ॥ अभीक्ष्णंवर्त्ततेभूमिरर्कंराहुरुपैतिच ११ श्वेतोग्रहस्तथाचित्रांसमतिक्रम्यतिष्ठति ॥ अभावंहिविशेषेणकुरूणांतत्रपश्यति १२ धूमकेतुर्महाघोरःपुष्यंचाक्रम्यतिष्ठति ॥ सेनयोरशिवंघोरंकरिष्यतिमहाग्रहः १३ मघास्वंगारकोवक्रःश्रवणेचबृहस्पतिः ॥ भगंनक्षत्रमाक्रम्यसूर्यपुत्रेणपीड्यते १४ शुक्रःप्रोष्ठपदेपूर्वेसमारुह्यविरोचते ॥ उत्तरेतुपरिक्रम्यसहितःसमुदीक्षते १५ श्वेतोग्रहःप्रज्वलितःसधूमइवपावकः ॥ ऐन्द्रंतेजस्विनक्षत्रंज्येष्ठामाक्रम्यतिष्ठति १६ ध्रुवंप्रज्वलितोघोरमपसव्यंप्रवर्त्तते ॥ रोहिणींपीडयत्येवमुभौचशशिभास्करौ ॥ चित्रास्वात्यंतरेचैवविष्ठितःपरुषग्रहः १७ वक्रानुवक्रंकृत्वाचश्रवणंपावकप्रभः ॥ ब्रह्मराशिंसमावृत्यलोहितांगोव्यवस्थितः १८

सतिक्रमाद्वेधोवर्णेषुब्राह्मणादिषु'इतिनरपतिविजये १३ भगंनक्षत्रंपूर्वाफल्गुनी श्रुतिमतेतूत्तराफल्गुनी १४ पूर्वेप्रोष्ठपदेपूर्वाभाद्रपदानक्षत्रं समारुह्यपरिक्रम्यपरिघाख्यउपग्रहस्तेनसहितः उत्तरेउत्तराभाद्रपदानक्षत्रं उदीक्षतेआक्रांतुमिच्छति १५ श्वेतोद्वितीयउपग्रहःकेतुसंज्ञः ऐन्द्रंज्येष्ठानक्षत्रमितियोज्यं १६ ध्रुवमिति । परुषग्रहोराहुरेकनक्षत्रस्थौशशिभास्करौपीडयति. अपसव्यंप्रवर्त्ततेसर्वदावक्रीसन्सर्वतोभद्रचक्रेवेधेनस्वातीस्थःसन्रोहिणीनक्षत्रंचपीडयतीत्यर्थः १७ वक्रेति । तत्रैवसर्वतोभद्रचक्रेमघास्थोलोहितांगोऽङ्गारकोवक्रानुवक्रंकृत्वापुनःपुनर्वक्रीभूय ब्रह्मणाबृहस्पतिनाऽऽक्रांतराशिनक्षत्रंश्रवणंसमावृत्यसम्यक्पूर्णदृष्ट्याविद्धातिष्ठति १८

परिच्छन्नाआच्छादिता पंचशीर्षाणिशीर्षसदृशानियेषांतेपंचशीर्षाः १९ । २० । २१ २२ शोणितमयाआवर्त्ताःयस्यां रक्तप्रवाहवतीत्यर्थः अतएवध्वजाएवउडुपानिक्षुद्रनावस्तैःसमाकुला वैशसे विरोधे २३ । २४ छर्दयन्श्रोतॄणांक्लेशकरत्वेनरक्तवमनंकारयन्निव २५ शस्त्राणिप्रभयाज्वलंतीव २६ संवत्सरेति । पूर्वंश्रवणस्थोबृहस्पतिर्भगनक्षत्रस्थःसूर्यपुत्रइत्युक्तं तावुभौविशाखासमीपेतिर्यग्वेधे नक्षत्रपदेचक्रेविशाखानक्षत्रंविध्यतइत्यर्थः तथाहि तस्मिंश्चक्रेखुखेखोइतिश्रवणांत्यपादत्रयंव्युत्क्रमेण विशाखाद्यपादत्रयेणतितुतेइत्यनेनविद्धयते तृतीयेनचतुर्थोद्वितीयेनतृतीयःप्रथमेनद्वितीयइति । तथाउत्तराफल्गुन्याअंत्यपादत्रयेणटोपापीत्यनेन क्रमेण तितुतेइतिविशाखाद्यपादत्रयंतत्रैवचक्रेविध्यतइतितच्चक्रविदांप्रत्यक्षं २७ चंद्रादित्याविति । अपर्वणि पर्वदर्शाख्यंपंचदशेह्निभवति एकतिथिवृद्धौषोडशेवा एकतिथिक्षयेचतुर्दशेवाह्निभवति । तिथिद्वयक्षयस्तुलोकेऽत्यंतमप्रसिद्धइत्यपर्वणीत्युक्तं ग्रहंयातौराहुणाग्रहणंप्राप्तौ एतदेवप्रजासंक्षयहेतुत्वेनशास्त्रेदृष्टमित्याह प्रजेति २८ अशोभिताअमंगलाः २९ चित्रास्वात्यंतरस्थःपरुषांग्रहोरोहिणींपीडयतीत्युक्तं तत्रचित्रांशेस्थित्वारोहिणीमष्टादशत्वेनसामुदायिकनक्षत्रंपीडयति स्वात्यंशेस्थित्वाकृत्तिकांषोडशकत्वेनसांघातिकनक्षत्रंपीडयति सर्वतोभद्रचक्रेतथादर्शनात् तदे

सर्वसस्यपरिच्छन्नापृथिवीसस्यमालिनी ॥ पंचशीर्षायवाश्चापिशतशीर्षाश्चशालयः १९ प्रधानाःसर्वलोकस्ययास्वायत्तमिदंजगत् ॥ तागावःप्रस्नुतावत्सैःशो
णितंप्रक्षरंत्युत २० निश्चेरुरर्चिषश्चापात्खड्गाश्चज्वलिताभृशम् ॥ व्यक्तंपश्यंतिशस्त्राणिसंग्रामंसमुपस्थितम् २१ अग्निवर्णायथाभासःशस्त्राणामुदकस्यच ॥
कवचानांध्वजानांचभविष्यतिमहाक्षयः २२ पृथिवीशोणितावर्ताध्वजोडुपसमाकुला ॥ कुरूणांवैशसेराजन्पांडवैःसहभारत २३ दिक्षुप्रज्वलितास्याश्चव्या
हरंतिमृगद्विजाः ॥ अत्याहितंदर्शयंतोवेदयंतिमहद्भयम् २४ एकपक्षाक्षिचरणःशकुनिःखचरोनिशि ॥ रौद्रंवदतिसंरब्धःशोणितंछर्दयन्निव २५ शस्त्राणिवै
वराजेन्द्रप्रज्वलंतीवसंप्रति ॥ सप्तर्षीणामुदाराणांसमवच्छाद्यतेप्रभा २६ संवत्सरस्थायिनौचग्रहौप्रज्वलितावुभौ ॥ विशाखायाःसमीपस्थौबृहस्पतिशनैश्चरौ
२७ चंद्रादित्यावुभौग्रस्तावेकाह्नाहित्रयोदशीम् ॥ अपर्वणिग्रहंयातौप्रजासंक्षयमिच्छतः २८ अशोभितादिशःसर्वाःपांसुवर्षैःसमंततः ॥ उत्पातमेघारौद्राश्च
रात्रौवर्षंतिशोणितम् २९ कृत्तिकांपीडयंस्तीक्ष्णैर्नक्षत्रंपृथिवीपते ॥ अभीक्ष्णवातावायंतेधूमकेतुमवस्थिताः ३० विषमंजनयंत्येतआक्रंदजननंमहत् ॥ त्रिषुसर्वे
षुनक्षत्रनक्षत्रेषुविशांपते ॥ गृध्रःसंपततेशीर्षेजनयन्भयमुत्तमम् ३१

तदाह कृत्तिकामित्यर्धेन । तीक्ष्णैःक्रूरैःकर्मभिरुपलक्षितोराहुरित्यर्थः धूमकेतुमुत्पातविशेषमनुलक्ष्यावस्थिताः ३० एतेवायवःविषमंवैरंयुद्धमितियावत् त्रिष्विति । त्रिष्वपिच्छत्रेषुनरपतिविजयप्रोक्तेषु यथाऽश्विन्यादिभिर्नवभिर्नक्षत्रैरौदीच्यस्याश्वपतेश्छत्रे चामरंकलशोवीणाच्छत्रंदंडःपतद्ग्रहआसनंकीलकंरज्जुरित्यवयवाःकल्प्यंते । एवंमघादिनवकेनप्राच्यस्यगजपतेः तथामूलादिनवकेनदक्षिणस्यनरपतेः एवंविधेषुत्रिष्वपिच्छत्रेषुतत्रापिसर्वेषुनक्षत्रेषु नास्तिक्षत्रंभिरितियोगेनक्षत्रविरोधिषुनक्षत्रेषुनक्षत्राणिचतानिनक्षत्राणिभानितेषुक्रूराक्रांतत्वादिनाक्षत्रियाभावकरेषुनक्षत्रेषु गृध्रःपापग्रहःशीर्षकलशस्थानं संपतते तेनच्छत्रत्रयस्यतदंतर्गतानामन्येषांचमांडलिकानांराज्ञांनाशःसूच्यते । तत्रैवंसतिमघासुकुजोस्तितथायदाभगनक्षत्रंपूर्वाफल्गुनीतदातत्रस्थःशनैश्चरोऽवश्यंयुद्धादिनागजपतेर्महद्भयंकरिष्यति यथोक्तंतत्रैव । ' कलशस्थेभवेद्युद्धंरणेरोगेमहद्भयम् । घातपातादिकंसर्वंजायतेनात्रसंशयः ' इति कलशस्थेशनैश्चरेइतिशेषः । तथाविशाखाज्येष्ठेअप्यत्रैवच्छत्रे क्रूरविद्धेक्रूराक्रांतेवर्तेते इत्यवश्यंगजपतेश्छत्रभंगः । एवंप्रथमच्छत्रेऽपिकृत्तिकारोहिण्योःपुष्यस्यचपीडास्ति । तथांतिमच्छत्रेश्रवणप्रोष्ठपदयोर्बृहस्पतिशुक्रौवर्तेतेइतितथाऽपितावनिष्टफलावेव । एवंपूर्वस्यनिरन्वयोनाशः । इतरयोश्छत्रयो-

राजनाशोऽपितत्पुत्राणांच्छत्रमाशिरस्तीतिविशेषः । तथाचमध्यमछत्रे मघासुभौमः स्वात्यांसूर्यचंद्रराहवः पूर्वस्यामुत्तरस्यांवाफल्गुन्यांशनैश्चरः विशाखायांवेधेनबृहस्पतिश्चास्ति तेषांफलं
तत्रैवोक्तं । 'क्रूरग्रहचतुष्कंचबुधचंद्रेणसंयुतम् । पूर्वच्छत्रविनाशायकथितंपूर्वसूरिभिः' इति । तत्रसिंधुसागरसंगमाद्गोदावरीसागरसंगमपर्यंतमेकारेखा तद्दक्षिणेनरपतिः । ततएवकर्णप्रावरणपर्यंतंद्वितीया
तदुत्तरेगजपतिः । तयोरेखयोर्मध्येऽश्वपतिः । हस्तिनापुरंतुईशानदेशस्थत्वाद्गंगाद्वारात्पूर्वभागेऽस्तीतिगजपतिच्छत्रांतर्गतमेव । हरिद्वारंतुदेहलीदीपन्यायेनाश्वपतिगजपत्योरंतर्गतमितितेनहस्तिनापुरस्या
नांप्राच्यत्वादत्वंतंक्षयस्तथैवपांचालादीनामपीति । एतच्चनरपतिविजयदर्शिनां [illegible]ष्टं । ईशानदेशाःकूर्मचक्रेप्रोक्ताः । 'रेवतीअश्विनीयाम्येपादेईशानगोचरे । गंगाद्वारंकुरुक्षेत्रंश्रीकंठंहस्तिनापुरम् । अश्वव
कैकपादाश्वकर्णप्रावरणास्तथा । विनश्यंतिचतेसर्वेदेशास्त्वीशानगोचरे' इतिदिक् ३१ चंद्रादित्यावुभौग्रस्तावित्येतेनश्लोकेनोक्तमर्थंविशदयतिद्वाभ्यां चतुर्दशीमिति । त्रयोदशीं त्रयोदशानामन्हांपूरणीअमा
वास्यां भूतपूर्वांनाभिजानेनजानामि अतिभूयसाकालेनायंदुर्योगआगतइतिभावः । एकमासींएकस्मिन्नेवमासेभवांपूर्वंत्रयोदश्यांरात्रौपक्षसमाप्त्यासूर्यग्रहणमेवोक्तं इदानींतुएकस्मिन्मासेचंद्रःपूर्णमास्यांराहुणा

चतुर्दशींपंचदशींभूतपूर्वांचषोडशीम् ॥ इमांतुनाभिजानेऽहममावास्यांत्रयोदशीम् ॥ चंद्रसूर्यावुभौग्रस्तावेकमासींत्रयोदशीम् ३२ अपर्वणिग्रहेणैतौप्रजाःसं
क्षपयिष्यतः ॥ मांसवर्षंपुनस्तीव्रमासीत्कृष्णचतुर्दशीम् ॥ शोणितैर्वक्त्रसंपूर्णाअतृप्तास्तत्रराक्षसाः ३३ प्रतिस्रोतोमहानद्यःसरितःशोणितोदकाः ॥ फेनाय
मानाःकूपाश्चकूर्दन्तिवृषभाइव ३४ पतंत्युल्काःसनिर्घाताःशक्राशनिसमप्रभाः ॥ अद्यचैवनिशांव्युष्टामनयंसमवाप्स्यथ ३५ विनिःसृत्यमहोल्काभिस्तिमिरं
सर्वतोदिशम् ॥ अन्योन्यमुपतिष्ठद्भिस्तत्रचोक्तंमहर्षिभिः ३६ भूमिपालसहस्राणांभूमिःपास्यतिशोणितम् ॥ कैलासमंदराभ्यांतुतथाहिमवताविभो ३७ सह
स्रशोमहाशब्दःशिखराणिपतंतिच ॥ महाभूताभूमिकंपेचत्वारःसागराःपृथक् ॥ वेलामुद्वर्तयंतीवक्षोभयंतोवसुंधराम् ३८ वृक्षानुन्मथ्यवांत्युग्रावाताःशर्कर
कर्षिणः ॥ आभग्नाःसुमहावातैरशनीभिःसमाहताः ३९ वृक्षाःपतंतिचैत्याश्चग्रामेषुनगरेषुच ॥ नीललोहितपीतश्चभवत्यग्निर्हुतोद्विजैः ४० वामार्चिर्दुष्टगं
धश्चमुंचन्वैदारुणंस्वनम् ॥ स्पर्शागंधारसाश्चैवविपरीतामहीपते ४१ धूमंध्वजाःप्रमुंचंतिकंपमानामुहुर्मुहुः ॥ मुंचंत्यंगारवर्षंचभेर्यश्चपटहास्तथा ४२ शिखरा
णांसमृद्धानामुपरिष्टात्समंततः ॥ वायसाश्चरुवंत्युग्रंवाममंडलमाश्रिताः ४३ पक्कापक्केतिसुभृशंवावाश्यंतेवयांसिच ॥ निलीयंतेध्वजाग्रेषुक्षयायपृथिवीक्षिताम् ४४

ग्रहेणग्रस्तः सूर्योऽमावास्यायां यदासूर्योग्रस्तस्तदाचंद्रोऽपिग्रस्तएव दर्शेतयोःसंहतत्वात् ३२ अपर्वणीति । डोकारमसिद्धपर्वणीतिपूर्ववत्ज्ञेयं ३३ प्रतिस्रोतसोमहानद्यःविपरीतप्रवाहाः विभक्तिलो
पआर्षः विशेषणंविशेष्येणबहुलमितिसमासोवा क्रियाविशेषणंवा । कूपाजलाशयाः कूर्दंतिक्रीडंति वातैःक्षुभ्यंतइत्यर्थः ३४ अनयंअनीतिफलं ३५ महोल्काभिःदीपाभावात्क्षणकाष्ठज्वालयारात्रौ
विनिःसृत्यगृहाद्बहिर्निर्गत्य ३६ । ३७ महाशब्दःक्रियतइतिशेषः महाभूताबृद्धीभूताः अभूततद्भावेमहच्छब्दाद्भवतौपरेडाच मर्यादामुल्लंघितवंतइवेत्यर्थः ३८ अशनीभिः अशनिर्द्वयोरितिकोशात्स्त्रीत्वं
३९ । ४० । ४१ । ४२ शिखराणांद्रुमाग्राणां । 'शिखरोऽस्त्रीद्रुमाग्रेच' इतिमेदिनी ४३ पकापक्केति । विनाशाभिमुखानांपरस्परंयुद्धमिति ' पक्कंपरिणतेऽपिस्याद्विनाशाभिमुखेत्रिषु ' इतिमेदिनी ।
पक्व पक्केतिपक्षिरुतानुकरणं वावाश्यंतेअतिशयेनशब्दंकुर्वंति ४४

प्रकिरंतःशकृन्मूत्रमितिशेषः। व्याला:दुष्टहस्तिनः सलिलाश्रयाः अत्यंतप्रस्वेदयुक्ताः ४६ । ४६ । ४७ । ४८ । ४९ मुनिःएवंतथेत्युक्त्वेतिसंबंधः धृतराष्ट्रेणहेतुनातदर्थमित्यर्थः। ध्यानंचिंतां ५० सं
क्षयतेक्षिणोति ५१ । ५२ धर्म्यंधर्मादनपेतंपंथानंदेशयशिक्षय ५३ अयंदुर्योधनः ५४ सःधर्मः एनंधर्मंद्वारं शक्येऽनापदिसत्यांकिमर्थमापदीवउन्मार्गगामीभवसीत्यर्थः ५५ । ५६ परेणअति

ध्यायंतःप्रकिरंतश्चव्यालावेपथुसंयुताः ॥ दीनास्तुरंगमाःसर्वेवारणाःसलिलाश्रयाः ४५ एतच्छ्रुत्वाभवानत्रप्राप्तकालंव्यवस्यताम् ॥ यथालोकःसमुच्छेदंनायं
गच्छेतभारत ४६ ॥ वैशंपायनउवाच ॥ पितुर्वचोनिशम्यैतद्धृतराष्ट्रोऽब्रवीदिदम् ॥ दिष्टमेतत्पुरामन्येभविष्यतिनरक्षयः ४७ राजानःक्षत्रधर्मेणयदिवध्यं
तिसंयुगे ॥ वीरलोकंसमासाद्यसुखंप्राप्स्यंतिकेवलम् ४८ इहकीर्तिंपरेलोकेदीर्घकालंमहत्सुखम् ॥ प्राप्स्यंतिपुरुषव्याघ्राःप्राणांस्त्यक्त्वामहाहवे ४९
॥ वैशंपायनउवाच ॥ एवंमुनिस्तथेत्युक्त्वाकवीन्द्रोराजसत्तम ॥ धृतराष्ट्रेणपुत्रेणध्यानमन्वगमत्परम् ५० समुहूर्तंतथाध्यात्वापुनरेवाब्रवीद्वचः ॥ असंशयंपा
र्थिवेन्द्रकालःसंक्षपयतेजगत् ५१ सृजतेचपुनर्लोकान्नेहविद्यतिशाश्वतम् ॥ ज्ञातीनांचकुरूणांचसंबंधिसुहृदांतथा ५२ धर्म्यंदेशयपंथानंसमर्थोह्यसिवारणे ॥ क्षुद्रं
ज्ञातिवधंप्राहुर्माकुरुष्वममाप्रियम् ५३ कालोऽयंपुत्ररूपेणतवजातोविशांपते ॥ नवधःपूज्यतेवेदेहितंनैवकथंचन ५४ हन्यात्सएनंयोहन्यात्कुलधर्मस्विकांत
नुम् ॥ कालेनोत्पथगंताऽसिशक्येसतियथाऽऽपदि ५५ कुलस्यास्यविनाशायतथैवचमहीक्षिताम् ॥ अनर्थोराज्यरूपेणतवजातोविशांपते ५६ लुप्तधर्मापरेणा
सिधर्मंदर्शयवैसुतान् ॥ किंतेराज्येनदुर्धर्षयेनप्राप्तोऽसिकिल्बिषम् ५७ यशोधर्मंचकीर्तिंचपालयन्स्वर्गमाप्स्यसि ॥ लभंतांपांडवाराज्यंशमंगच्छंतुकौरवाः
५८ एवंब्रुवतिविप्रेन्द्रेधृतराष्ट्रोऽम्बिकासुतः ॥ आक्षिप्यवाक्यंवाक्यज्ञोवाक्यंचैवाब्रवीत्पुनः ५९ ॥ धृतराष्ट्रउवाच ॥ यथाभवान्वेत्तितथैववेत्ताभावाभावौविदितौमे
यथार्थौ ॥ स्वार्थेहिसंमुह्यतितातलोकोमांचापिलोकात्मकमेवविद्धि ६० प्रसादयेत्वामतुलप्रभावंत्वंनोगतिर्दर्शयिताचधीरः ॥ नचापितेमद्वशगामहर्षेनचाधर्मं
कर्तुमर्होहिमेमतिः ६१ त्वंहिधर्मप्रवृत्तिश्चयशःकीर्तिश्चभारती ॥ कुरूणांपांडवानांचमान्यश्चापिपितामहः ६२ ॥ व्यासउवाच ॥ वैचित्रवीर्यनृपतेयत्तेमनसिव
र्तते ॥ अभिधत्स्वयथाकामंछेत्ताऽस्मितवसंशयम् ६३ ॥ धृतराष्ट्रउवाच ॥ यानिलिंगानिसंग्रामेभवंतिविजयिष्यताम् ॥ तानिसर्वाणिभगवञ्छ्रोतुमिच्छामितत्त्वतः
६४ ॥ व्यासउवाच ॥ प्रसन्नभाःपावकऊर्ध्वरश्मिःप्रदक्षिणावर्त्तशिखोविधूमः ॥ पुण्यागंधाश्चाहुतीनांप्रवांतिजयस्यैतद्भाविनोरूपमाहुः ६५ गंभीरघोषाश्चमहास्वना
श्चशंखामृदंगाश्चनदंतियत्र ॥ विशुद्धरश्मिस्तपनःशशीचजयस्यैतद्भाविनोरूपमाहुः ६६ इष्टावाचःपृष्ठतोवायसानांसंप्रस्थितानांचगमिष्यतांच ॥ येपृष्ठतस्तेत्वरयंति
राजन्येचाग्रतस्तेप्रतिषेधयंति ६७ कल्याणवाचःशकुनाराजहंसाःशुकाःक्रौंचाःशतपत्राश्चयत्र ॥ प्रदक्षिणाश्चैवभवंतिसंख्येध्रुवंजयस्तत्रवदंतिविप्राः ६८

शयेन ५७ । ५८ आक्षिप्यवाक्यंब्रुवतीतिसंबंधः ५९ वेत्ताज्ञाताऽस्मीतिशेषः भावाभावौस्थितिविनाशौपरेषांस्वेषांच ६० गतिःपरायणं दर्शयिताउपदेष्टा ६१ त्वंहिधर्मादौहेतुरित्यर्थः ६२ । ६३
६४ रूपगमकंचिह्नं ६५ । ६६ इष्टाइति। येपृष्ठतोभाषमाणावायसास्तेगंतारंत्वरयंति सिद्धिसूचकाइत्यर्थः येपुरतोभाषमाणास्तेगमनंनिषेधंतीत्यर्थः ६७ । ६८

६९ । ७० प्रविष्टस्यपरसैन्यमितिशेषः इष्टामारितोमारितइति । दक्षिणाःदाक्ष्ययुक्ताहतोसिहतोसीत्याद्याः । पश्चादर्थपाश्चात्यंप्रयोजनंजयाख्यंसंधारयंतिनिश्चिन्वंति याश्चाग्रेप्रतिषेधिका मायुद्धयस्वमरिष्य सीत्येवंजातीयकास्ताअपिमरणस्यैवसूचिकास्ताश्चदुर्योधनंप्रत्येवप्रवर्ततइतिभावः ७१ । ७२ अनुगाः अनुकूलाः ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० उपायविजयंलाभपूर्वकंजयं साम्नाप्रार्थनयादानेनवा शत्रुणावाचाप्रार्थितस्यधनेनवासंतर्पितस्यमुख्योजयः शत्रुंभेदयतोमध्यमः निघ्नतोऽधमइत्यर्थः ८१ सन्निपातोयोधानांसंघर्षः व्यवधूताःदारादिष्वनासक्ताः ८२ । ८३ शूरा

अलंकारैःकवचैःकेतुभिश्चसुखप्रणादैर्हेषितैर्वाहयानाम् ॥ भ्राजिष्मतीदुष्प्रतिवीक्षणीयायेषांचमूस्तेविजयंतिशत्रून् ६९ हृष्टावाचस्तथासत्वंयोधानांयत्रभारत ॥ नम्लायंतिस्रजश्चैवतेतरंतिरणोदधिम् ७० इष्टावाचःप्रविष्टस्यदक्षिणाःप्रविविक्षतः ॥ पश्चात्संधारयंत्यर्थमग्रेचप्रतिषेधिकाः ७१ शब्दरूपरसस्पर्शगंधाश्चावि कृताःशुभाः ॥ सदाहर्षश्चयोधानांजयतामिहलक्षणम् ७२ अनुगावायवोवांतितथाऽभ्राणिवयांसिच ॥ अनुप्लवंतिमेघाश्चतथैवेन्द्रधनूंषिच ७३ एतानिजय मानानांलक्षणानिविशांपते ॥ भवंतिविपरीतानिमुमूर्षूणांजनाधिप ७४ अल्पायांवामहत्यांवासेनायामितिनिश्चयः ॥ हर्षोयोधगणस्यैकोजयलक्षणमुच्यते ७५ एकोदीर्णोदारयतिसेनांसुमहतीमपि ॥ तांदीर्णामनुदीर्यंतेयोधाःशूरतराअपि ७६ दुर्निवर्त्यातदाचैवप्रभग्नामहतीचमूः ॥ अपामिवमहावेगात्रस्तामृग गणाइव ७७ नैवशक्यासमाधातुंसन्निपातेमहाचमूः ॥ दीर्णामित्येवदीर्यंतेसुविद्वांसोऽपिभारत ७८ भीतान्भग्नांश्चसंप्रेक्ष्यभयंभूयोऽभिवर्द्धते ॥ प्रभग्नासह साराजन्दिशोविद्रवतेचमूः ७९ नैवस्थापयितुंशक्याशूरैरपिमहाचमूः ॥ सत्कृत्यमहतींसेनांचतुरंगांमहीपतिः ॥ उपायपूर्वंमेधावीयतेतसततोत्थितः ८० उपायविजयंश्रेष्ठमाहुर्भेदेनमध्यमम् ॥ जघन्यएषविजयोयोयुद्धेनविशांपते ८१ महान्दोषःसन्निपातस्तस्याद्यःक्षयउच्यते ॥ परस्परज्ञाःसंहृष्टाव्यवधूताःसुनि श्चिताः ८२ अपिपंचाशतंशूराम्रद्नंतिमहतींचमूम् ॥ अपिवापंचषट्सप्तविजयंत्यनिवर्त्तिनः ८३ नवैनतेयोगरुडःप्रशंसतिमहाजनम् ॥ दृष्ट्वासुपर्णोऽपचि तिंमहत्याअपिभारत ८४ नबाहुल्येनसेनायाजयोभवतिनित्यशः ॥ अध्रुवोहिजयोनामदैवंचात्रपरायणम् ॥ जयवंतोहिसंग्रामेकृतकृत्याभवंतिहि ८५ ॥ इतिश्री महाभारतेभीष्मपर्वणिजंबूखंडविनिर्माणपर्वणिनिमित्ताख्यानेतृतीयोऽध्यायः ३ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्त्वाययौव्यासोधृतराष्ट्रायधीमते ॥ धृतराष्ट्रोऽपितच्छ्रुत्वाध्यानमेवान्वपद्यत १ समुहूर्त्तमिवध्यात्वाविनिःश्वस्यमुहुर्मुहुः ॥ संजयंसंशितात्मानमपृच्छद्भरतर्षभ २ संजयेमेमहीपालाःशूरायुद्धाभि नंदिनः ॥ अन्योन्यमभिनिघ्नंतिशस्त्रैरुच्चावचैरिह ३ पार्थिवाःपृथिवीहेतोःसमभित्यज्यजीवितम् ॥ नवाशाम्यंतिनिघ्नंतोवर्धयंतियमक्षयम् ४ भौममैश्वर्यमि च्छंतोनमृष्यंतेपरस्परम् ॥ मन्येबहुगुणाभूमिस्तन्ममाचक्ष्वसंजय ५ बहूनिचसहस्राणिप्रयुतान्यर्बुदानिच ॥ कोटयश्चलोकवीराणांसमेताःकुरुजांगले ६

णांसहायसंपत्तिर्नापेक्षितेत्यत्रदृष्टांतमाह नवैनतेयइति । महत्याअपिसेनायाअपचितिंप्रतिकारंनाशंवा एकेनैवात्मनाकर्त्तुंशक्यंदृष्ट्वाआलोच्य सुपर्णःशोभनपतत्रोगरुडोनामतोवैनतेयोविनतायाःपुत्रो महाजनंबहु जनसमूहंनप्रशंसतिनकामयतेइत्यर्थः । 'भवेदपचितिःपूजाव्ययनिष्कृतिहानिषु'इतिमेदिनी । शूराणांनसहायापेक्षास्तीत्यक्षौहिणीबाहुल्यान्मत्पुत्राणांजयोऽवश्यंभावीतित्वयानमंतव्यमितिभावः ८४ । ८५ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपे तृतीयोऽध्यायः ॥ ३ ॥ ॥ एवमुक्त्वेति १ । २ । ३ नवाशाम्यंतिनैवशाम्यंति यमक्षयंयमलोकम् ४ । ५ । ६

७ दिव्येति । यथादीपेनांधकारेनाशितेचक्षुषाघटोदृश्यते एवंधीवृत्त्यासर्वविषयावरकाज्ञानतमसिनाशितेसतिचिदात्मरूपेणचक्षुषासर्वंप्रकाशतइत्यर्थः ८ शास्त्रचक्षुरिति । यदाऽहंब्रह्मास्मीतिवाक्योत्थयाधिया
ऽऽत्मानंयोगीपश्यतितदाऽन्धोऽप्यनंधोभवति तथाचश्रुतिः । ' तंवाएतंसेतुंतीर्त्वाऽन्धःसन्ननंधोभवति ' इति सेतुंमर्यादाविधारकंपरमेश्वरंतीर्त्वाप्राप्येतिश्रुतिपदयोरर्थः । अनेनैवाभिप्रायेणात्रेक्षस्वेत्याह
नमस्तइति । विनयः स्वस्योपदेष्टृत्ववारणायव्यासेनैवत्वमुपदिष्टोऽसीतिभावः ९ त्रसानांजंगमानांयोनिरुत्पत्तिस्थानं अंडजाःपक्षिसरीसृपाद्याः स्वेदजाःयूकालिक्षाद्याः जरायुजाः मनुष्यपश्वाद्याः १० 
येषुचतुर्दशसुयज्ञाःप्रतिष्ठिताः तेमानवास्त्रैवर्णिकाः पशवश्चगोऽजाद्याजरायुजानांमध्येप्रवराइतियोजना ११ । १२ ग्राम्याणांवक्ष्यमाणानांपशूनांमध्ये तथाऽरण्यवासिनामप्यपि । ' पुरुषंवैदेवाःपशुमा
लभंततस्मात्रयःपशूनांहस्तादानाःपुरुषोहस्तीमर्कटः ' इति विध्यर्थवादादिषुपुरुषेऽपिपशुत्वमस्त्येवेतिग्राम्यपशुषुपुरुषस्यगणनम् १३ उद्भिज्जाः भूमिमुद्भिद्यजाताः वृक्षाअश्वत्थादयः गुल्माःकुशका
शादिस्तंबाः लतावृक्षाद्यारूढागुडूच्यादयः वल्ल्योभूमिप्रसारात्वर्षमात्रस्थायिन्यःकूष्मांडयाद्याः त्वक्सारावेण्वादयः तएवतृणजातयोनतुवृक्षाः १४ तेषामिति । सप्तग्राम्याःपशवःसप्तारण्याःपंचोद्भि

देशानांचपरीमाणंनगराणांचसंजय ॥ श्रोतुमिच्छामितत्त्वेनयतएतेसमागताः ७ दिव्यबुद्धिप्रदीपेनयुक्तस्त्वंज्ञानचक्षुषा ॥ प्रभावात्तस्यविप्रर्षेर्व्यासस्यामिततेजसः
८ ॥ संजयउवाच ॥ यथाप्रज्ञंमहाप्राज्ञभौमान्वक्ष्यामितेगुणान् ॥ शास्त्रचक्षुरवेक्षस्वनमस्तेभरतर्षभ ९ द्विविधानीहभूतानिचराणिस्थावराणिच ॥ त्रसानांत्रिवि
धायोनिरंडस्वेदजरायुजाः १० त्रसानांखलुसर्वेषांश्रेष्ठाराजन्जरायुजाः ॥ जरायुजानांप्रवरामानवाःपशवश्चये ११ नानारूपधराराजंस्तेषांभेदाश्चतुर्दश ॥ वेदोक्ताः
पृथिवीपालयेषुयज्ञाःप्रतिष्ठिताः १२ ग्राम्याणांपुरुषाःश्रेष्ठाःसिंहाश्चारण्यवासिनाम् ॥ सर्वेषामेवभूतानामन्योन्येनोपजीवनम् १३ उद्भिज्जाःस्थावराःप्रोक्तास्तेषां
पंचैवजातयः ॥ वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः १४ तेषांविंशतिरेकोनामहाभूतेषुपंचसु ॥ चतुर्विंशतिरुद्दिष्टागायत्रीलोकसंमता १५ यएतांवेदगाय
त्रींपुण्यांसर्वगुणान्विताम् ॥ तत्त्वेनभरतश्रेष्ठसलोकेनप्रणश्यति १६ अरण्यवासिनःसप्ततेषांग्रामवासिनः ॥ सिंहाव्याघ्रावराहाश्चमहिषावारणास्तथा १७ ऋ
क्षाश्चवानराश्चैवसप्तारण्याःस्मृतानृप ॥ गौरजाविमनुष्याश्चअश्वाश्वतरगर्दभाः १८ एतेग्राम्याःसमाख्याताःपशवःसप्तसाधुभिः ॥ एतेवैपशवोराजन्ग्राम्यारण्याश्चतु
र्दश १९ भूमौचजायतेसर्वंभूमौसर्वंविनश्यति ॥ भूमिःप्रतिष्ठाभूतानांभूमिरेवसनातनम् २० यस्यभूमिस्तस्यसर्वंजगत्स्थावरजंगमम् ॥ तत्रातिगृद्धाराजानोविनि
घ्नन्तीतरेतरम् २१ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिजंबूखंडविनिर्माणपर्वणिभौमगुणकथनेचतुर्थोऽध्यायः ॥ ४ ॥

ज्जाइत्येकोनविंशतिसंख्यानांविकाराणांप्रकृतिभूतेषुपंचसुमहाभूतेषुप्रक्षेपेसति चतुर्विंशत्यक्षरसंख्यासाम्यात्प्रकृतिविकृत्यात्मिकागायत्रीयंभवति अत्रस्वेदजानामुद्भिज्जेष्वंतर्भावः तेहिभूमिमुद्भिद्यजायंते
स्वेदजास्तुजलमुद्भिद्यजायंतइतिसाम्यात् । तृतीयेनावरोधःसंशोकजस्येतिन्यायाच्च अंडजानामपिमैथुनजत्वसाम्याज्जरायुजेष्वेवांतर्भावः जरायुर्गर्भवेष्टनंतद्रूपस्यअंडस्यैवतत्रसत्त्वादित्याशयेनचतुर्विंशतिः
तदिदंकार्यकारणसमुदायात्मकंगायत्र्याख्यंब्रह्म । ' गायत्रीवाइदंसर्वंभूतम् ' इत्युपक्रम्य ' सैषाचतुष्पदाषड्विधागायत्रीतदेतदृचाभ्यनूक्तं तावानस्यमहिमाततोज्यायांश्चपूरुषः । पादोस्यसर्वाभू
तानित्रिपादस्यामृतंदिवि ' इतिच्छांदोग्येउपसंहारदर्शनात् १५ । १६ । १७ । १८ । १९ । २० यस्यभूमिरिति । राजाहिसार्वभौमोराजसूयेनेष्ट्वास्वाराज्यंप्राप्नोति अश्वमेधेनेष्ट्वाक्रममुक्तिस्थानंप्रा
प्नोतीति यस्यकृत्स्नाभूमिस्तस्यइदंसर्वंयज्ञद्वारावशेभवति तथाचवाजसनेयकेश्रूयते । ' पुरुषोहवैनारायणोऽकामयतात्मतिष्ठेयंसर्वाणिभूतान्यहमेवेदंसर्वस्यामिति सएतंपुरुषमेधं पंचरात्रयज्ञक्रतुमप
श्यत् ' इत्यादिना २१ ॥ इतिभीष्मपर्वणि नीलकंठीये भारतभावदीपे चतुर्थोऽध्यायः ॥ ४ ॥

एवंवक्ष्यमाणभगवद्गीतोपनिषदर्थज्ञानाधिकारार्थंकर्मणामनुष्ठेयत्वंप्रकारांतरेणोपपाद्याधिकृतानामुत्पन्नात्मविविदिषाणामपिमूक्ष्मतमात्मतत्त्वग्रहणयोग्यतासिद्ध्यर्थंस्थूलेभगवतोरूपेकृत्स्नब्रह्मांडात्मकेचित्तसंयमः कर्तव्यइत्याशयेनभुवनकोशंवर्णयति नदीनांपर्वतानांचेत्यादिना तत्सर्वंश्रुतवानसीत्यंतेनाध्यायाष्टकेन १ । २ तत्रतावत्पंचेमानिमहाराजेत्यादिना तदेषांरूपमैश्वरमित्यंतेन सर्वंवियदादिकंभगवदुपादानकत्वात्कुंडलकनकन्यायेनभगवतएवरूपमितिप्रतिपादयति । महाभूतानिपृथिव्यादीनितान्येवजगतीकृत्स्नब्रह्मांडरूपाणिपिंडरूपाणिचतत्स्थानिचसर्वाणिचैतन्यपदवाच्यानिसमानितुल्यान्येव बहुत्वमुपाधिभेदाभिप्रायेण नहिकुंभद्रोण्याद्युपाधिष्वाकाशस्येवमशकमतंगजादिशरीरेषुचैतन्यस्यस्वतोविषमत्वंदृश्यते तस्मात्सर्वाणिजगतीस्थानिसमान्येववक्ष्यतिचभगवान् ‘ पंडिताःसमदर्शिनः ’ इति ३ भूमिरिति । वायोरग्निरितिश्रुतेरग्निहेतुर्वायुरग्नेःपरोद्रष्टव्यः गुणोत्तराणिपूर्वपूर्वापेक्षयाउत्तरमुत्तरमेकैकगुणाधिकं इदंच । ‘ आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यःपृथिवी ’ इतिश्रूयमाणजन्मक्रमाभिप्रायेणोक्तम् ४ शब्दादयोगुणाःप्रसिद्धाः ५ । ६ एतेपंचेति । महाभूतेषुपंचमहाभूतात्मकेषुसर्वेषुलोकेषुभोग्यवस्तुषुशरीरादिपर्यंतेषुएतेपंचगुणाः संति । एतेके येषुगुणेषुभोक्तारोभूताःनित्यनिर्वृत्ताश्चेतनाःपुरुषाःप्रतिष्ठिताः देहेंद्रियादीन्भोग्यानधिष्ठाय चेतनाःशब्दादीनिभोग्यांतराणिभुंजते देहादीनामपिभोगोपकरणत्वाद्भोग्यत्वमेव नभोक्तृत्वमित्यर्थः ७ अन्योन्यमिति । समस्यभावःसाम्यंब्रह्म

धृतराष्ट्रउवाच ॥ नदीनांपर्वतानांचनामधेयानिसंजय ॥ तथाजनपदानांचयेचान्येभूमिमाश्रिताः १ प्रमाणंचप्रमाणज्ञपृथिव्याममसर्वतः ॥ निखिलेनस
माचक्ष्वकाननानिचसंजय २ ॥ संजयउवाच ॥ पंचेमानिमहाराजमहाभूतानिसंग्रहात् ॥ जगतीस्थानिसर्वाणिसमान्याहुर्मनीषिणः ३ भूमिरापस्तथावायु
रग्निराकाशमेवच ॥ गुणोत्तराणिसर्वाणितेषांभूमिःप्रधानतः ४ शब्दःस्पर्शश्चरूपंचरसोगंधश्चपंचमः ॥ भूमेरेतेगुणाःप्रोक्ताऋषिभिस्तत्त्ववेदिभिः ५ चत्वा
रोऽप्सुगुणाराजन्गंधस्तत्रनविद्यते ॥ शब्दःस्पर्शश्चरूपंचतेजसोऽथगुणास्त्रयः ॥ शब्दःस्पर्शश्चवायोस्तुआकाशेशब्दएवतु ६ एतेपंचगुणाराजन्महाभूतेषुपंचसु ॥
वर्ततेसर्वलोकेषुयेषुभूताःप्रतिष्ठिताः ७ अन्योन्यंनाभिवर्ततेसाम्यंभवतिवैयदा ८ यदातुविषमीभावमाविशंतिपरस्परम् ॥ तदादेहैर्देहवंतोव्यतिरोहंतिनान्यथा ९
आनुपूर्व्याविनश्यंतिजायंतेचानुपूर्वशः ॥ सर्वाण्यपरिमेयाणितदेषांरूपमैश्वरम् १०

भावः । ‘ समआत्मेतिविद्यात् निर्दोषंहिसमंब्रह्म ’ इतिश्रुतिस्मृत्योर्ब्रह्मणिसमशब्ददर्शनात् । भोक्तृभोग्ययोर्यदासुषुप्तिप्रलयसमाधिमोक्षेषुब्रह्मभावोभवतितदातेउभेअन्योन्यंनाभिवर्तेते व्यवहारतोविद्यमानमपिभोग्यंभोक्तारंनोपसर्पति नापिभोक्ताऽलुप्तदृगपिभोगायतनस्यदेहेंद्रियादेरभावाद्भोग्यजातमुपसर्पतीत्यर्थः ८ यदात्विति । भोगप्रदकर्मोद्भवकालेविषमीभावंसाम्यात्प्रच्युतिंआविशंतिप्राप्नुवंति तदातएवभोक्तारोभोग्यपदार्थाश्चदेहैःस्वस्वरूपैःदेहवंतःलब्धस्वरूपाभूत्वातैरेवस्वैरूपैःपरस्परंव्यतिरोहंति भोक्तारोभोग्येषुनिपतंति भोग्यार्थाश्चभोक्तरिसूक्ष्मरूपेणस्ववासनांजनयंतीत्यर्थः ९ आनुपूर्व्याभूम्यादिक्रमेणविनश्यंति जायंतेचआनुपूर्वशआकाशादिक्रमेण । विपर्ययेणक्रमोऽतउपपद्यतेचेतिन्यायेनसृष्टिक्रमविपरीतत्वात्संहारक्रमस्य अतएवउत्पत्तिविनाशशीलत्वादेवसर्वाण्येतानिभोक्तृभोग्यान्यपरिमेयाणिअनंतानिमरीचकोदकहृदतुल्यत्वात् । नहिमरीचिकोदकमियत्प्रमाणमितिपरिमातुंशक्यं यतएतान्यपरिमेयाणि तत्तस्माद्धेतोःएषांरूपंऐश्वरमेव नतुभौतिकं नह्यध्यस्तस्याधिष्ठातादन्यद्रूपमस्ति अतएव ‘ सर्वंखल्विदंब्रह्म आत्मैवेदंसर्वं ब्रह्मैवेदंसर्वम् ’ इतिसर्वस्यब्रह्मभावश्रवणमुपपद्यतेइत्यर्थः १०

अपरिमेयत्वमेवाह तत्रतत्रेति । सिद्धाअपियत्रब्रह्मांडंभित्वागच्छंतितत्रापिविशालनामयाधातवोऽव्यक्तयःपांचभौतिकादृश्यंतेऽतोऽपरिमेयाएवते । एवंसत्यपिमनुष्यागणकाद्यस्तर्केणक्षुर्यगत्यादेशभेदेनदिनमान भेदपादच्छायाभेदादिनाचतेषांप्रमाणानि। एतच्चोपलक्षणंआकारभेदस्यापि तथाहि । केचित्कंदुकाकारं केचिच्चतुरस्रं केचित्त्रिकोणं केचिच्चक्राकारंचभूमिसंस्थानंकल्पयंति तथाप्रमाणभेदोऽपि जंबूद्वीपपरिणाह गणकाः'तद्व्यासःकुभुजंगसायकभुवःसिद्धांशकेनाधिका'इतिवदंति । पंचदशशतान्येकाशीतियोजनानि योजनचतुर्विंशांशसहितानि । तथालक्षयोजनंतत्परिणाहइतिपुराणांतरे अत्रापिअष्टादशसहस्राणिपदृश तानिचेतिवक्ष्यति ११ कस्तर्ह्यत्रसिद्धांतइत्याशंक्यानिर्वचनीयएवायमर्थोनतर्केणसाधयितुंयोग्यइत्याह अचिंत्याइति। येभावाःजगज्जन्मोपादाननिमित्तपरिमाणधर्माधर्मादयःपदार्थाश्चिंतयितुमयोग्यास्तान्नतर्केण साधयेत् नहितेतर्केणसाधयितुंशक्यंते तर्कांतरेणतस्यबाधसंभवात्तर्काप्रतिष्ठानादितिन्यायाच्च अतएवास्यश्लोकस्योत्तरार्द्धमन्यत्रपठंति । 'नाप्रतिष्ठिततर्केणगंभीरार्थस्यनिश्चयः' इति । तथाहि कंदुकाकारे भुवनकोशेकल्प्यमानेयेकंदुकपृष्ठेकमठपृष्ठोपमेतिष्ठंति तेषांकियानपिदेशोजलपशुमनुष्याश्रययोग्योऽस्तीतिवक्तुंयुक्तं येतुतस्मिंस्तदधश्चसंतितेषांगुरुत्ववतामर्थानामधस्तादाश्रयाभावेनावश्यंपतनंभवतीतितावान्दे शोरिक्तएवास्तीतिवक्तव्यं । तथाचतदाश्रयात्तत्कृताद्वीपांतरकल्पनालोकदृष्टिविरुद्धेतिपामराअपिप्रतियंति । ननुयथापृथिव्याअंतरिक्षेऽवस्थानशक्तिर्दिगंबरादन्यैःसर्वैर्वादिभिःकल्प्यते तथावयमपितस्याआ कर्षणशक्तिमन्यांकल्पयामहे । ययासर्वदिक्स्थाःप्राणिनःपृथिवीपादाधस्थामेवमन्यंतेस्वंचोपरिस्थमिति । तर्हिलोकदृष्टिविरुद्धकल्पनापेक्षयासर्वप्राणिप्रत्यक्षस्वप्नमायेन्द्रजालादितुल्यतैवास्याःकुतोनकल्प्यते ।

तत्रतत्रहिदृश्यंतेधातवःपांचभौतिकाः ॥ तेषांमनुष्यास्तर्केणप्रमाणानिप्रचक्षते ११ अचिन्त्याःखलुयेभावानतांस्तर्केणसाधयेत् ॥ प्रकृतिभ्यःपरंयत्तुतदचिंत्यस्य लक्षणम् १२ सुदर्शनंप्रवक्ष्यामिद्वीपंतुकुरुनंदन ॥ परिमंडलोमहाराजद्वीपोऽसौचक्रसंस्थितः १३ नदीजलप्रतिच्छन्नःपर्वतैश्चाभ्रसन्निभैः ॥ पुरैश्चविविधाकारैरम्यै र्जनपदैस्तथा १४ वृक्षैःपुष्पफलोपेतैःसंपन्नधनधान्यवान् ॥ लवणेनसमुद्रेणसमंतात्परिवारितः १५

ननुस्वप्नादिवदस्याबाधोनदृश्यतइतिचेत् प्राक्ब्रह्मात्मज्ञानात्प्रमादाशीर्कीनच्छिद्रंश्रुत्यातुज्ञातेद्वैतंनविद्यते । नेहनानाऽस्तिकिंचनेत्यादिकयाब्रह्मदर्शनेनरज्जुदर्शनेनसर्पस्येवप्रपंचबाधआम्नायते । तथाचनिष्क लंकात्श्रुतिप्रमाणात्ब्रह्माद्वैतमेवादर्त्तव्यंनतुसकलंकात्तर्काज्जगतोऽनिर्वचनीयत्वमितिभावः १२ तर्हिकिमस्यप्रमाणंकावाआकृतिस्तत्राभिमतेत्याशंक्याह सुदर्शनमिति । सुदर्शनोनामजंबूवृक्षविशेषस्तन्नामां कितोऽयंद्वीपःसुदर्शनद्वीपः कृत्स्नंब्रह्मांडमित्यर्थः तंप्रमाणतआकृतितश्चप्रकर्षेणवक्ष्यामि तुशब्दःपक्षांतरव्यावृत्त्यर्थः परिमंडलःपरमाणुमात्रंपरिमाणतोदुर्लक्ष्यइत्यर्थः । 'एषोऽणुरात्माचेतसावेदितव्यः' इत्या त्मवदितिभावः परिमंडलइत्यस्यसर्वतोवृत्तरूपःकंदुकाकारइतिव्याख्यानेप्रागेवदोषउक्तः अथचक्राकारइत्युच्यतेचेन्न चिपिटाकारेतस्मिन्परिमंडलशब्दस्यायोगात् चक्रसंस्थितइत्यनेनचक्रवत्संस्थितंसंस्थान माकारोऽस्येत्यनेनैवसिद्धत्वाच्च । अयंहिशब्दस्तार्किकाणांपरमाणुपरिमाणेप्रसिद्धः । नचानेनपरिमाणेनोपेतंनिरंशंवस्तुसिद्ध्यति यस्यकस्याप्यल्पपरिमाणस्य दशदिगवच्छेद्यप्रदेशभेदवत्त्वेनतस्यापि निरंशत्वायोगात् नहिपरिमाणोःपूर्वदिगवच्छिन्नोदेशःप्रतीच्याप्यवच्छिद्यतइतिवक्तुंशक्यं दृष्टविरोधात् तस्मात्परिमंडलशब्दोदुर्लक्ष्यसद्वस्तुमात्रवचनः तार्किकाणांपरमाणुरपितादृशएव तत्रपारिभाषिक परिमाणकल्पनंप्रस्थानभेदापादनार्थंशून्यकारणतानिरासार्थंचेतिदिक् । एवंसुदर्शनद्वीपस्यपरिमाणमुक्त्वाआकारमाह चक्रसंस्थितइति । परिदृश्यमानराष्ट्राकारइत्यर्थः । 'चक्रंराष्ट्राऽस्त्रयोरपि' इतिविश्वः १३ तदेवसंस्थानमाहद्वाभ्यां नदीति १४ । १५

२

नन्वेवंविधस्यकथमतिसूक्ष्मत्वमुच्यतेऽतआह यथाहीति । चंद्रमंडलेचंद्राधिष्ठितेमनसीत्यर्थः यद्येतद्ब्रह्मांडंमहाप्रमाणंस्यात्कथंतर्हिगिरिगुहैकदेशस्थोयोगीस्वीयेसूक्ष्मेहृदयावकाशेतत्कृत्स्नमादर्शेमुखवत्पश्येत् ।
नह्यल्पप्रमाणेसर्षपादौमहाप्रमाणानांमेर्वादीनांसंनिवेशोयुज्यते प्रपंचस्यस्वप्नादिवदनिर्वचनीयत्वांगीकारंविनेतिभावः १६ द्विरंशइति । तत्रचंद्रमंडलाख्येमनसि अंशेएकदेशे वृत्त्यानंत्यादनन्तस्यमनसएकदेशए
कारादृश्यावृत्तिरंशस्तत्रद्विःकार्यकारणरूपेणस्थूलसूक्ष्मरूपेणवाद्विरावृत्तः पिप्पलोगीतासुवक्ष्यमाणःसंसाराश्वत्थोऽस्ति सर्वमेतन्मनोमात्रमित्यर्थः द्विरंशेचशशोमहान् चकाराच्चत्रेत्यनुवर्तते तस्मिन्नेवमनसिमहान्
परमात्माशशइवशशः प्लुतगतिःशीघ्रगामी मनसोजवीयइति । ' तद्धावतोऽन्यानत्येति ' इतिचश्रुतेः । अंशेएकदेशेद्विर्वर्त्तनेनियम्यनियामकभावेनेत्यर्थः । तथाचकार्यकारणप्रपंचोजीवईश्वरश्चपरब्रह्मण्यधिष्ठाने
मनसैवकल्पितइत्यर्थः १७ अस्यशशस्यप्रत्यगभेदंवक्ष्यन्प्रपंचादिभ्यःपृथक्त्वमाह आपइति । आपइत्यंबूपलक्षितंभूतपंचकमुच्यते । आपःपुरुषवचसोभवंतीत्यादिश्रुतौतथादर्शनात् । एतेनकृत्स्नंभूतभौतिकं
कार्यंततःशशादन्यत् । तर्हिकारणंवस्तुतदभिन्नंस्यादित्याशंक्याह शेषःसंक्षेपउच्यतेइति । समस्तकार्यप्रलयेसतिशिष्यतइतिशेषः कारणंतदपिसंक्षेपः कार्यस्यैवसूक्ष्मंरूपमाकुंचितावयवकूर्मसमानमुच्यतेऽतो
व्याकृतंकारणमप्यापइवानात्मैवेत्यर्थः । ततोव्याकृताव्याकृताद्वयादन्यःशशःशुद्धंब्रह्म तदेवअयंप्रत्यगात्माजीवइत्युच्यते वेदे ' तत्त्वमस्यहंब्रह्मास्मिअयमात्माब्रह्म ' इत्यादौपरमात्मनएवप्रत्यगात्मत्वमुच्यते
नततोऽन्योजीवोनामकश्चिद्धातुरस्तीत्यर्थः । एनंप्रत्यगभिन्नंपरमेश्वरंशशाख्यं संक्षेपतोमयाप्रोच्यमानंशृणु १८ इतिकरणे जंबूइतिजंबूद्वीपः खंडएकदेशोयस्यतस्यब्रह्मांडस्यनिर्माणेविस्तारेइत्यर्थः

यथाहिपुरुषःपश्येदादर्शेमुखमात्मनः ॥ एवंसुदर्शनद्वीपोदृश्यतेचंद्रमंडले १६ द्विरंशेपिप्पलस्तत्रद्विरंशेचशशोमहान् ॥ सर्वौषधिसमावायःसर्वतःपरिवारितः १७
आपस्ततोऽन्याविज्ञेयाःशेषःसंक्षेपउच्यते ॥ ततोऽन्यउच्यतेचायमेनंसंक्षेपतःशृणु १८ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिजंबूखंडनिर्माणपर्वणिसुदर्शनद्वीपवर्णने
पंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ उक्तोद्वीपस्यसंक्षेपोविधिवद्बुद्धिमंस्त्वया ॥ तत्त्वज्ञश्चासिसर्वस्यविस्तरंब्रूहिसंजय १ यावान्भूम्यव
काशोऽयंदृश्यतेशशलक्षणे ॥ तस्यप्रमाणंप्रब्रूहिततोवक्ष्यसिपिप्पलम् २ ॥ वैशंपायनउवाच ॥ एवंराज्ञासपृष्टस्तुसंजयोवाक्यमब्रवीत् ॥ ॥ संजयउवाच ॥
प्रागायतामहाराजषडेतेवर्षपर्वताः ॥ अवगाढाह्युभयतःसमुद्रौपूर्वपश्चिमौ ३

॥ इतिभीष्मपर्वणिनैलकंठीये भारतभावदीपेपंचमोऽध्यायः ॥ ५ ॥ ॥ पिप्पलशशयोःस्वरूपश्रवणेस्वस्यानधिकारंपश्यन् स्थूलमेवतावद्भगवतोरूपंश्रोतुमिच्छन् धृतराष्ट्रउवाच उक्तोद्वीपस्येति ।
द्वीपस्यविस्तरमितिसंबंधः १ यावानिति । शशलक्षणेपरमात्मनोज्ञापकेमायाशबलेहार्देब्रह्मणि मायाकल्पितोभूम्यवकाशो यावान्व्यवहारदृष्ट्यासत्यत्वप्रतीयमानोयोगिवरैर्दृश्यतेतस्यप्रमाणंप्रब्रूहि ।
ननुकारणमेवादौज्ञातव्यंयज्ज्ञानात्सर्वज्ञत्वंभवतीतिवेदेप्रसिद्धं किंद्वीपज्ञानेनेत्याशंक्याह ततोवक्ष्यसिपिप्पलमिति शशंचवक्ष्यसीतिशेषः । प्रागेवकारणज्ञानात्तद्विभूतिकार्यमेववदेत्तेनतत्रात्यंतमादरोभवती
तिभावः २ प्रागायताः पूर्वपश्चिमसमुद्रस्पर्शिनः अत्रेयंशास्त्रानुभवयोरविरोधेनभूकल्पनाप्रतिभाति । यथाहस्तमात्रस्यचतुरस्रस्य चतुर्विंशत्यंगुलानिपरिणाहः षण्णवत्यंगुलानिपरिधिः
किंचिन्न्यूनानिचतुस्त्रिंशदंगुलानिकर्णोभवति । एवंअष्टादशसहस्राणिषट्शतानिचजंबूपर्वसंज्ञितायाभुवःप्रमाणमुक्तं । तदेवात्रपरिधित्वेनकल्पितंतच्चतुर्थांशत्वेनचत्वारिसहस्राणिषट्शतानिपंचाशच्चयोजनान्ये
कैकोभुजइतितदेवसमचतुरस्रस्यविष्कंभप्रमाणं अस्यकर्णःशुल्वशास्त्रोक्तरीत्याषट्सहस्राणिपंचशतानिषट्सप्ततिश्चयोजनानितस्यास्यभूचतुरस्रस्य यच्चतुर्भिःसमुद्रैर्वेष्टितस्यकोणादिक्षुवर्त्तते तेनदक्षिणस्यांदि
शिरामसेतौद्वयोःसमुद्रयोःसंधिः एवमितरास्वपिदिक्षुसमुद्रसंधयोज्ञेयाः । यस्त्वत्रज्योतिर्विदांभूपरिधिःसप्तांगनंदाब्धियोजन ४९६७ संमितोऽभिमतः सएवास्माकंचतुरस्रविष्कंभः खबाणरसवेदमितः
४६५० यत्तुएतयोरंतरंसप्तेंदुरामाः ३१७ तदपियजमानेनोर्ध्वबाहुनाप्रपदोच्छ्रितेन समपादस्थितेनवाउन्मितस्यसूत्रस्ययःपंचमोंशःसहस्तइति विकल्पस्यकात्यायनादिभिरुक्तत्वाद्धस्तप्रमाण-

भेदकल्पनयायोजनबहुत्वाल्पत्ववचनेनसमाधेयं । तथाभूमेश्चतुरस्रत्वेऽपितन्मध्यस्थमत्युच्छ्रितंमेरुंप्रदक्षिणीकुर्वतःसूर्यस्यमार्गोमंडलाकारोस्तीतिनबौद्धाभिमतंसूर्यद्वयंकल्प्यंभवति अन्यत्सर्वंयुक्त्यविरुद्धंज्योतिर्विन्मतमेवात्रानुसर्त्तव्यं । यत्तुपुराणेपंचाशत्कोटियोजनंभूगोलप्रमाणमित्युक्तंतदप्यचिंत्याःखलुयेभावान्नतांस्तर्केणसाधयेदित्यनेनैवप्रत्युक्तं । अव्यवस्थितत्वान्मतानामनिर्वचनीयवादएवशरणीकरणीयइत्येववरं । यद्वा सर्वत्रयत्प्रमाणंदृष्टंतद्विंशांशेनतद्बोध्यं तेनपंचाशत्कोटिस्थानेसार्द्धकोटिद्वयविस्ताराभूमिः । लक्षस्थानेपंचसहस्रविस्तारोजम्बूद्वीपः । नवसहस्रस्थानेसार्द्धचतुःशतयोजनायामंभरतखंडमिति । अस्मिन्पक्षेउदाहरिष्यमाणवैष्णवादिवाक्येभ्योजंबूद्वीपश्चतुर्दलकमलाकारः तस्याश्चांतःपरिधिः षट्शताधिकान्यष्टादशयोजनसहस्राणि । त्रयस्त्रिंशच्छतानिमध्यव्यासः । तेनफलतःपंचसहस्रव्यासताज्ञेया । एवंसतियदायामगायतोहिमाचलःपूर्वपश्चिमसमुद्रौस्पृष्ट्वाऽस्ति तदायंभरतवर्षस्त्रिकोणोभवति तेनपृथिवीत्रिकोणेतिलोकप्रवादोऽनुभवश्चानुसृतोभवति । अन्यथाभरतवर्षस्यधनुराकारत्वेभूमध्यरेखाया लंकातःसेतुमार्गेणप्रस्थितायाः । ' पुरीरक्षसांदेवकन्याऽथकांचीसितःपर्वतःपर्यलीवत्ससगुल्मं । पुरीचोज्जयिन्याह्वयागर्गराटंकुरुक्षेत्रमेषाभुवामध्यरेखा , इतिस्मर्यमाणयामध्यरेखयाकुरुक्षेत्रस्यरामसेतुःसन्निहितोद्वारकाचदूरेस्यात । द्वारकासमीपेसेतुश्चदूरेइतिप्रत्यक्षमुपलभ्यते । भरतवर्षस्यत्रिकोणत्वमित्येषैवकल्पनासाधीयसीतिदिक् ३ । ४ । ५ एवंदक्षिणांदिशमारभ्य यावदुत्तरसमाप्ति

हिमवान्हेमकूटश्चनिषधश्चनगोत्तमः ॥ नीलश्चवैदूर्यमयःश्वेतश्चशशिसन्निभः ४ सर्वधातुविचित्रश्चशृंगवान्नामपर्वतः ॥ एतेवैपर्वताराजन्सिद्धचारणसेविताः ५
एषामंतरविष्कंभोयोजनानिसहस्रशः ॥ तत्रपुण्याजनपदास्तानिवर्षाणिभारत ६ वसंतितेषुसत्वानिनानाजातीनिसर्वशः ॥ इदंतुभारतंवर्षंततोहैमवतंपरम् ७
हेमकूटात्परंचैवहरिवर्षंप्रचक्षते ॥ दक्षिणेनतुनीलस्यनिषधस्योत्तरेणतु ८ प्रागायतोमहाभागमाल्यवान्नामपर्वतः ॥ ततःपरंमाल्यवतःपर्वतोगंधमादनः ९ परिमंडलस्तयोर्मध्येमेरुःकनकपर्वतः ॥ आदित्यतरुणाभासोविधूमइवपावकः १० योजनानांसहस्राणिचतुरशीतिरुच्छ्रितः ॥ अधस्ताच्चतुरशीतिर्योजनानांमहीपते ११ ऊर्ध्वमधश्चतिर्यक्चलोकानावृत्यतिष्ठति ॥ तस्यपार्श्वेष्वमीद्वीपाश्चत्वारःसंस्थिताविभो १२ भद्राश्वःकेतुमालश्चजंबूद्वीपश्चभारत ॥ उत्तराश्चैवकुरवःकृतपुण्यप्रतिश्रयाः १३ विहगःसुमुखोयस्तुसुपर्णस्यात्मजःकिल ॥ सवैविचिंतयामाससौवर्णान्वीक्ष्यवायसान् १४

षड्वाकूपश्चिमायताःपर्वतास्तैश्चसप्तवर्षाणिभवंति मध्येमध्येवासयोग्यानिस्थानानिभवंति तेषांस्थानानांवर्षाख्यानामंतरमाह एषामिति । विष्कंभोविस्तारः सहस्रशःशब्दएषशतशःशब्दपरःकर्त्तव्यः लंकाहिमाचलयोरनेकसहस्रयोजनांतराभावात षष्ट्यधिकशतचतुष्कयोजनसंमितस्यैवांतरस्यप्रसिद्धेः । तत्रापिशतंसेतोःपरतःषष्ट्यधिकत्रिशतंयोजनानिसेतुतोहिमालयइतिप्रत्यक्षसिद्धं । वर्षाणिवर्षंतिकामैःसिंचंतिपूरयंतीतिवर्षाणिरम्यस्थानानि ६ वसंत्येषुतानिवर्षाणीतियोगांतरमाह वसंतीति । हिमावतोदक्षिणेभारतंवर्षं उत्तरतोहैमवतंवर्षंद्वितीयम् ७ हेमकूटनिषधयोर्मध्येहरिवर्षं । निषधनीलयोर्मध्येवर्षविभागमाह दक्षिणेनेति । दक्षिणेनदक्षिणतःसमीपइत्यर्थः एवमुत्तरेणेत्यादौज्ञेयम् ८ नीलनिषधयोर्मध्येमेरुस्तस्यप्राक्माल्यवान्पूर्वसमुद्रावधिः पश्चिमसमुद्रावधिर्गंधमादनइत्यर्थः ९ परिमंडलशब्दस्यपूर्वोक्तएवार्थः अत्याश्चर्यमयोमेरुःप्रतिक्षणंनवोनवइत्यर्थः आदित्यतरुणोबालादित्यः १० चतुरशीतिसहस्रस्थानेद्विचत्वारिंशच्छतीउच्छ्रायोबोध्यः अधस्तात्भूमेर्गर्भे ११ तस्यपार्श्वेष्विति । पार्श्वेषुचतुर्दिक्षु द्वीपाइवद्वीपाः नद्यंतरत्वाद्वर्षाणि १२ भद्राश्वादिसाहचर्याज्जंबूद्वीपशब्दोऽत्रभरतवर्षपरस्तस्यतत्सारत्वज्ञापनार्थः तानेवस्तौति कृतपुण्यप्रतिश्रयाइत्यादिना । कृताविहिताः । पुण्यैःपुण्यवद्भिः प्रतिश्रयाआश्रमायेषुते १३ तत्रसुमुखाख्येनपक्षिणाभेरुंत्यक्त्वाप्रश्रयःकृतइत्याह विहगइतिद्वाभ्याम् १४

एनंत्यजामित्यक्त्वाउत्तरान्कुरूनेवगच्छामीतिशेषः १५ तंमेरुमादित्योऽनुपर्येतिप्रदक्षिणीकरोति १६ । १७ । १८ । १९ । २० । २१ काव्यःकविश्रेष्ठःशुक्रोरमतइतिशेषः तस्यकाव्यस्य २२ तस्मात्काव्यात् ततःकुबेरात् कलांशंषोडशभागस्यापिलेशं २३ कर्णिकाराराजवृक्षास्तेषांवनं २४ । २५ । २६ । २७ क्षीरवत्श्वेताधारायस्याःसागंगा विश्वरूपात्रिश्रोतविष्णुस्तद्रूपा तथाचस्य रंति । ' योऽसौसर्वगतोविष्णुश्चित्स्वरूपीनिरंजनः । सएवद्रवरूपेणगंगांभोनात्रसंशयः ' इति २८ । २९ तयैवप्रवेगेनमेरुप्राकारावपतनजनितबलेनखननन्त्यासह्रदउत्पादितइतिसंबंधः ३० । ३१







मेरुरुत्तममध्यानामधमानांचपक्षिणाम् ॥ अविशेषकरोयस्मात्तस्मादेनंत्यजाम्यहम् १५ तमादित्योऽनुपर्येतिसततंज्योतिषांवरः ॥ चंद्रमाश्चसनक्षत्रोवायुश्चैवप्रदक्षिणः १६ सपर्वतोमहाराजदिव्यपुष्पफलान्वितः ॥ भवनैरावृतःसर्वैर्जांबूनदपरिष्कृतैः १७ तत्रदेवगणाराजन्गंधर्वासुरराक्षसाः ॥ अप्सरोगणसंयुक्ताःशैलेक्रीडंतिसर्वदा ॥ १८ तत्रब्रह्माचरुद्रश्चशक्रश्चापिसुरेश्वरः ॥ समेत्यविविधैर्यज्ञैर्यजंतेऽनेकदक्षिणैः १९ तुंबुरुर्नारदश्चैवविश्वावसुर्हहाहुहूः ॥ अभिगम्यामरश्रेष्ठांस्तुष्टुवुर्विविधैःस्तवैः २० सप्तर्षयोमहात्मानःकश्यपश्चप्रजापतिः ॥ तत्रगच्छंतिभद्रंतेसदापर्वणिपर्वणि २१ तस्यैवमूर्धन्युशनाःकाव्योदैत्यैर्महीपते ॥ इमानितस्यरत्नानितस्येमेरत्नपर्वताः २२ तस्मात्कुबेरोभगवांश्चतुर्थंभागमश्नुते ॥ ततःकलांशंवित्तस्यमनुष्येभ्यःप्रयच्छति २३ पार्श्वेतस्योत्तरेदिव्यंसर्वर्तुकुसुमैश्चितम् ॥ कर्णिकारवनंरम्यंशिलाजालसमुद्गतम् २४ तत्रसाक्षात्पशुपतिर्दिव्यैर्भूतैःसमावृतः ॥ उमासहायोभगवान्रमतेभूतभावनः २५ कर्णिकारमयींमालांबिभ्रत्पादावलंबिनीम् ॥ त्रिभिर्नेत्रैःकृतोद्योतस्त्रिभिःसूर्यैरिवोदितैः २६ तमुग्रतपसःसिद्धाःसुव्रताःसत्यवादिनः ॥ पश्यंतिनहिदुर्वृत्तैःशक्योद्रष्टुंमहेश्वरः २७ तस्यशैलस्यशिखरात्क्षीरधारानरेश्वर ॥ विश्वरूपापरिमिताभीमनिर्घातनिःस्वना १८ पुण्यापुण्यतमैर्जुष्टागंगाभागीरथीशुभा ॥ प्लवंतीवप्रवेगेनह्रदेचंद्रमसःशुभे २९ तयाह्युत्पादितःपुण्यःसह्रदःसागरोपमः ॥ तांधारयामासतदादुर्धरांपर्वतैरपि ३० शतंवर्षसहस्राणांशिरसैवपिनाकधृक् ॥ मेरोस्तुपश्चिमेपार्श्वेकेतुमालोमहीपते ३१ जंबूखंडेतुतत्रैवमहाजनपदोनृप ॥ आयुर्दशसहस्राणिवर्षाणांतत्रभारत ३२ सुवर्णवर्णाश्चनराःस्त्रियश्चाप्सरसोपमाः ॥ अनामयावीतशोकानित्यंमुदितमानसाः ३३ जायंतेमानवास्तत्रनिष्टप्तकनकप्रभाः ॥ गंधमादनशृंगेषुकुबेरःसहराक्षसैः ३४ संवृतोऽप्सरसांसंघैर्मोदतेगुह्यकाधिपः ॥ गंधमादनपार्श्वेतुपरेत्वपरगंडिकाः ३५ एकादशसहस्राणिवर्षाणांपरमायुषः ॥ तत्रहृष्टानराराजंस्तेजोयुक्तामहाबलाः ॥ स्त्रियश्चोत्पलवर्णाभाःसर्वाःसुप्रियदर्शनाः ३६ नीलात्परतरंश्वेतंश्वेताद्धैरण्यकंपरम् ॥ वर्षमैरावतंराजन्नानाजनपदावृतम् ३७

३२ सुवर्णवर्णाःगौराः ३३ निष्टप्तेति । पीतभास्वराइत्यर्थः ३४ अपरगंडिकाः अन्येगंधमादनस्यैवावयवभूताबुद्बुदोपमाःक्षुद्रशैलाः । ' गंडोभूषणबुद्बुदे ' इतिमेदिनी स्वार्थिकःकः ३५ उत्पलवर्णैनआभांतिताः उत्पलवर्णाभाः ३६ नीलात्परतरमिति । नीलोत्पलधरमित्यपपाठः । एवंहिमवतोदक्षिणेभरतवर्षं तदुत्तरेहैमवतंवर्षं हेमकूटादुत्तरेहरिवर्षं । निषधादुत्तरेनीलाद्दक्षिणेमेरोःपरितइलावृतमेकमेवचतुर्थवर्षं । अत्रैवकेचिद्भद्राश्वकेतुमालयोर्वर्षांतरत्वंप्रकल्प्यनववर्षाणीत्याचक्षते । ततोनीलात्पर्वतादुत्तरतःश्वेतंपंचमंवर्षं श्वेतात्पर्वतादुत्तरतोहैरण्यकंवर्षंषष्ठं । ततः शृंगवत्पर्वतादैरावतंसप्तमंवर्षम् ३७

धनुःसंस्थेधनुष्कोटी संस्थाशब्दःसमाप्तिवचनः । संतिष्ठतेऽग्निहोत्रमित्यादिप्रयोगदर्शनात् । तेनमिश्रिनधनुष्कोटिद्वयाकारेइत्यर्थः । शार्ङ्गस्यहिधनुषोद्वेकोटीएकीकृतेभयतस्तदामध्येकिंचिन्नतंत्रिकोणंभव
तिअतएवरामसेतौधनुष्कोटिशब्देनैवरत्नाकरमहोदध्याख्यसमुद्रद्वयसंगमप्रदेशोव्यवह्रियते एवमाकारंदक्षिणेभरतवर्षमुत्तरेऐरावतंचमध्येपंचेतिसप्तवर्षाणि ३८ । ३९ समन्वितानिभिन्नभावेनसंगतानि
४० हेमेति । हेमकूटएवकैलासस्तस्योत्तरेमैनाकस्तस्योत्तरतोहिरण्यशृंगः एतयोरंतरालेबिंदुसरोस्तीतिश्लोकत्रयार्थः ४१ । ४२ । ४३ । ४४ । ४५ भूतपतीरुद्रः ४६ । ४७ पावनीसरस्वती
त्येका ४८ प्रभोरीश्वरस्यैषसप्तनद्यात्मकःसंविधिःसमीचीनंलोकोपकारार्थविधानं एषैवेतिसंधिरार्षः कारुण्यात्परमेश्वरेणपावनाःपदार्थानिर्मिताइत्यर्थः ४९ । ५० । ५१ श्वेतपर्वतःस्थानमितिशेषः
गंधर्वावसंतीतिशेषः प्रतिसंचरःव्यवहारस्थानं ५२ इतीति । वर्षाणितत्रउपनिविष्टानि गतिमंतिजंगमानि ध्रुवाणिस्थावराणिचसर्वाणिभूतान्येवसर्वदृश्यमाश्रयाश्रितरूपंपांचभौतिकमेवेत्यर्थः ५३ बुभू

धनुःसंस्थेमहाराजद्वेवर्षेदक्षिणोत्तरे ॥ इलावृत्तंमध्यमंतुपंचवर्षाणिचैवहि ३८ उत्तरोत्तरमेतेभ्योवर्षमुद्रिच्यतेगुणैः ॥ आयुःप्रमाणमारोग्यंधर्मतःकामतोऽर्थतः
३९ समन्वितानिभूतानितेषुवर्षेषुभारत ॥ एवमेषामहाराजपर्वतैःपृथिवीचिता ४० हेमकूटस्तुसुमहान्कैलासोनामपर्वतः ॥ यत्रवैश्रवणोराजन्गुह्यकैःसहमोदते
४१ अस्त्युत्तरेणकैलासंमैनाकंपर्वतंप्रति ॥ हिरण्यशृंगःसुमहान्दिव्योमणिमयोगिरिः ४२ तस्यपार्श्वेमहद्दिव्यंशुभ्रंकांचनवालुकम् ॥ रम्यंबिंदुसरोनामयत्र
राजाभगीरथः ४३ दृष्ट्वाभागीरथींगंगामुवासबहुलाःसमाः ॥ यूपामणिमयास्तत्रचैत्याश्चापिहिरण्मयाः ४४ तत्रेष्ट्वातुगतःसिद्धिंसहस्राक्षोमहायशाः ॥ स्रष्टा
भूतपतिर्यत्रसर्वलोकैःसनातनः ४५ उपास्यतेतिग्मतेजायत्रभूतैःसमंततः ॥ नरनारायणौब्रह्मामनुःस्थाणुश्चपंचमः ४६ तत्रदिव्यात्रिपथगाप्रथमंतुप्रतिष्ठिता
॥ ब्रह्मलोकादपक्रांतासप्तधाप्रतिपद्यते ४७ वस्वौकसारानलिनीपावनीचसरस्वती ॥ जंबूनदीचसीताचगंगासिंधुश्चसप्तमी ४८ अचिंत्यादिव्यसंकाशाप्रभो
रेषैवसंविधिः ॥ उपासतेयत्रसत्रंसहस्रयुगपर्यये ४९ दृश्याऽदृश्याचभवतितत्रतत्रसरस्वती ॥ एतादिव्याःसप्तगंगास्त्रिषुलोकेषुविश्रुताः ५० रक्षांसिवैहिमव
तिहेमकूटेतुगुह्यकाः ॥ सर्पानागाश्चनिषधेगोकर्णेचतपोवनम् ५१ देवासुराणांसर्वेषांश्वेतपर्वतउच्यते ॥ गंधर्वानिषधेनित्यंनीलेब्रह्मर्षयस्तथा ॥ शृंगवांस्तुमहा
राजदेवानांप्रतिसंचरः ५२ इत्येतानिमहाराजसप्तवर्षाणिभागशः ॥ भूतान्युपनिविष्टानिगतिमंतिध्रुवाणिच ५३ तेषामृद्धिर्बहुविधादृश्यतेदैवमानुषी ॥ अशक्या
परिसंख्यातुंश्रद्धेयातुबुभूषता ५४ यांतुपृच्छसिमांराजन्दिव्यामेतांशशाकृतिम् ॥ पार्श्वेशशस्यद्वेवर्षेउक्तेयेदक्षिणोत्तरे ॥ कर्णौतुनागद्वीपश्चकाश्यपद्वीपएवच ५५

पताश्रेयःप्राप्तुमिच्छताश्रद्धेया अदृष्टेष्वर्थेषुश्रद्धावान्हितत्प्राप्त्यर्थंचोदितानिकर्माणिकरोतिनत्वश्रद्दधानइत्यर्थः ५४ एवंभूसंस्थानमुक्त्वाएतदेवपरमात्मनःशरीरमितिचिंतनीयमित्याशयेनाह यांत्विति
दिविमायाशबलेभवांदिव्यांमायिकींशशस्यचिदात्मनःआकृतिंपिप्पलाख्यां । ततोवक्ष्यसिपिप्पलमितिपूर्वंत्वयैवोक्तत्वातइदानींपृच्छसिअवसरंप्राप्यवक्ष्यसिवर्त्तमानसामीप्येवर्त्तमानवन्निर्देशः तामहंत्वयाऽपृ
ष्टामपिवक्ष्यामीतिशेषः । तामेवाह पार्श्वेइति । भुक्तस्यान्नादेःसंग्रहस्थानंपार्श्वद्वयंयथाएवंकर्मसंचयस्थानंभरतवर्षमेकंपरमेश्वरस्यदक्षिणपार्श्वत्वेनज्ञेयं । तथाऐरावतवर्षमपियोगसंचयस्थानमुत्तरपार्श्वत्वेनज्ञेयं
तत्रहिब्रह्मलोकच्युतायोगभ्रष्टाविदेहप्रकृतिलयाख्याएवजायंते तेचपूर्वसंस्कारात्पुनर्योगमभ्यस्यंति । भरतवर्षंतुकर्मयोगयोर्द्वयोरप्यनुष्ठानाययोग्यमितिदक्षिणकुक्षित्वेनाभ्यर्हितत्वमस्यसूचितं । यथालो
किकेशशशरीरेकर्णावत्युच्छ्रितंस्थानंतत्तुल्यौपरमेश्वरशरीरेनागद्वीपकाश्यपद्वीपौ क्रमेणदक्षिणोत्तरौ । अर्चिरादिमार्गप्राप्यःसत्यलोकोयोगिप्राप्यः । धूमादिमार्गप्राप्योदेवलोकःकर्मप्राप्यश्च विश्वकोशे ।–

'नागंतुसीसकेरंगेइत्युपक्रम्य श्रेष्ठेस्थाद्उत्तरस्थिते'इति सर्वोपरिस्थेश्रेष्ठेहिरण्यगर्भेनागशब्दप्रयोगदर्शनात्तस्यद्वीपइवद्वीपोलोकइतरैरगम्यइतिनागद्वीपःसत्यलोकः । तथाकश्यंमद्यंसुरासोमादिरूपंमादकंक्रतौयेपि बंतितेकश्यपाःकर्मिणस्तेषामयंकाश्यपद्वीपःस्वर्गः । एवंशशस्यकुक्षिकर्णानुसारेणयेब्रह्मांडेउच्चप्रदेशास्तेकुक्ष्युपरिभागत्वेन । येत्वाधःप्रदेशास्तेकुक्षेरधोभागत्वेनचकल्पनीयाः तथाचश्रुतिः । 'अग्निर्मूर्द्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः ॥ वायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मा'इति । अत्रापिचंद्रसूर्यपदेनकृष्णशुक्लमार्गावेवगृह्येते । दिक्शब्देनचतत्प्राप्यौशशकर्णस्थानीयौदेशभेदावितिज्ञेयं ५५ एवंशशस्यमायिकंबाह्यंप्रथमंरूपमुक्तं तद्वासनोत्थंद्वितीयमांतररूपमाह ताम्रेति ' रंजनात्मकत्वाद्रक्तंरजस्ताम्रशब्दितंतत्प्रधानंमनोऽपिताम्रमेव तन्मयानिपर्णोपलक्षितानिवस्त्रान्नपान

ताम्रपर्णशिलोराजञ्श्रीमान्मलयपर्वतः ॥ एतद्द्वितीयंद्वीपस्यदृश्यतेशशसंस्थितम् ५६ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिजंबूखंडविनिर्माणपर्वणिभूम्यादिपरिमाणविवरणेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ मेरोरथोत्तरंपार्श्वंपूर्वंचाचक्ष्वसंजय ॥ निखिलेनमहाबुद्धेमाल्यवंतंचपर्वतम् १ ॥ संजयउवाच ॥ दक्षिणेनतुनीलस्यमेरोःपार्श्वेतथोत्तरे ॥ उत्तराःकुरवोराजन्पुण्याःसिद्धनिषेविताः २ तत्रवृक्षामधुफलानित्यपुस्पफलोपगाः ॥ पुष्पाणिचसुगंधीनिरसवंतिफलानिच ३ सर्वकामफलास्तत्रकेचिद्वृक्षाजनाधिप ॥ अपरेक्षीरिणोनामवृक्षास्तत्रनराधिप ४ येक्षरंतिसदाक्षीरंषड्रसंचामृतोपमम् ॥ वस्त्राणिचप्रसूयंतेफलेष्वाभरणानिच ५ सर्वामणिमयीभूमिःसूक्ष्मकांचनवालुका ॥ सर्वर्तुसुखसंस्पर्शानिष्पंकाचजनाधिप ॥ पुष्करिण्यःशुभास्तत्रसुखस्पर्शामनोरमाः ६ देवलोकच्युताःसर्वेजायंतेतत्रमानवाः ॥ शुक्लाभिजनसंपन्नाःसर्वेसुप्रियदर्शनाः ७ मिथुनानिचजायंतेस्त्रियश्चाप्सरसोपमाः ॥ तेषांतेक्षीरिणांक्षीरंपिबंत्यमृतसन्निभम् ८ मिथुनंजायतेकालेसमंतच्चप्रवर्धते ॥ तुल्यरूपगुणोपेतंसमवेषंतथैवच ९ एवमेवानुरूपंचचक्रवाकसमंविभो ॥ निरामयाश्चतेलोकानित्यंमुदितमानसाः १० दशवर्षसहस्राणिदशवर्षशतानिच ॥ जीवंतितेमहाराजनचान्योऽन्यंजहत्युत ११ भारुंडानामशकुनास्तीक्ष्णतुंडामहाबलाः ॥ तान्निर्हरंतीहमृतान्दरीषुप्रक्षिपंतिच १२ उत्तराःकुरवोराजन्व्याख्यातास्तेसमासतः ॥ मेरोःपार्श्वमहंपूर्वंवक्ष्याम्यथयथातथम् १३ तस्यमूर्धाभिषेकस्तुभद्राश्वस्यविशांपते ॥ भद्रसालवनंयत्रकालाम्रश्चमहाद्रुमः १४

फलपुष्पादीनि शिलोपलक्षितानिहर्म्यादीनिचयत्रासौताम्रपर्णशिलः अतएवश्रीमान्मलयपर्वतः मलयेषुआरामेषुपर्वतइवउच्छ्रितःश्रेष्ठतमआरामइत्यर्थः 'मलयोदेशआरामः'इतिविश्वः । आराममस्यपश्यंतिनतंपश्यतिकश्चन' इतिबृहदारण्यकषष्ठेस्वाप्नप्रपंचेआरामपदप्रयोगदर्शनात् । एवंमलयरूपंद्वीपस्यजंबूखंडस्यद्वितीयंवासनामयंशशसंस्थितंशशस्वरूपं । एतेन 'द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंच' इतिश्रुतिप्रसिद्धेस्थूलसूक्ष्मेपरमेश्वरस्यद्वेरूपेचिंत्यत्वेनदर्शिते । तेउभेधृतराष्ट्रेणापिचिंतनीयेइतिवक्तुराशयः ५६ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ एवमुक्तेऽपिध्यानमार्गेचित्तदोषेणानधिकारात्कर्मप्राप्याण्येवस्वर्गच्युतानांस्थानानिपृच्छति मेरोरिति १ । २ मधुफलाःस्वादुफलाः ३ । ४ । ५ । ६ शुक्लाभिजनोविष्णुभक्तजनस्तेनसंपन्नास्तत्संगिनः ७ ८ । ९ चक्रवाकौसहचरौपक्षिदंपती १० नजहतिसममेवद्वावपिशरीरंत्यजतइत्यर्थः ११ । १२ । १३ मूर्धाभिषेकोमूर्धाभिषिक्तंमुख्यमितियावत् १४

१५ । १६ ।। १७ । १८ । १९ । २० योजनानामिति । अत्राप्येकादशशत्यार्विशोंऽशःपंचपंचाशत २१ एवंसतिसार्धसहस्रद्वयमरत्नीनांतस्यपरिणाहोयत्रतत्रसपादशतंअरत्नयःफलपरिणा
होयुज्यते रसभेदिनांकर्कटीफलवत्पक्कतादशायांभेदशीलानां २२ । २३ । २४ । २५ । २६ । २७ गंडिकाक्षुद्रपर्वतः २८ पंचषट्पंचाधिकाःपट्एकादशेत्यर्थः महारजतंकांचनंतत्संकाशाः २९
ब्रह्मलोकेति । येइतःकर्मणाब्रह्मलोकंगतास्तेततश्च्युताःसंतोमाल्यवतिपर्वतेजन्मलब्ध्वाभूतानांरक्षणार्थंतपस्तप्त्वा दिवाकरंप्रविशंतेतत्समीपंप्राप्नुवंति ३० । ३१ तत्रापिआदित्यालोकेनकृत्स्नंचिरादपुरुषंच

कालाम्रस्तुमहाराजनित्यपुष्पफलःशुभः ॥ द्रुमश्चयोजनोत्सेधःसिद्धचारणसेवितः १५ तत्रतेपुरुषाःश्वेतास्तेजोयुक्तामहाबलाः ॥ स्त्रियःकुमुदवर्णाश्चसुंदर्यः
प्रियदर्शनाः १६ चंद्रप्रभाश्चंद्रवर्णाःपूर्णचंद्रनिभाननाः ॥ चंद्रशीतलगात्र्यश्चनृत्यगीतविशारदाः १७ दशवर्षसहस्राणितत्रायुर्भरतर्षभ ॥ कालाम्ररसपीता
स्तेनित्यंसंस्थितयौवनाः १८ दक्षिणेनतुनीलस्यनिषधस्योत्तरेणतु ॥ सुदर्शनोनाममहान्जंबूवृक्षःसनातनः १९ सर्वकामफलःपुण्यःसिद्धचारणसेवितः ॥ तस्य
नाम्नासमाख्यातोजंबूद्वीपःसनातनः २० योजनानांसहस्रंचशतंचभरतर्षभ ॥ उत्सेधोवृक्षराजस्यदिवस्पृङ्मनुजेश्वर २१ अरत्नीनांसहस्रंचशतानिदशपंचच ॥ परिणा
हस्तुवृक्षस्यफलानांरसभेदिनाम् २२ पतमानानितान्युर्वीकुर्वन्तिविपुलंस्वनम् ॥ मुंचंतिचरसंराजंस्तस्मिन्रजतसन्निभम् २३ तस्याजंब्वाःफलरसोनदीभूत्वाज
नाधिप ॥ मेरुंप्रदक्षिणंकृत्वासंप्रयात्युत्तरान्कुरून् २४ तत्रतेषांमनःशांतिर्नपिपासाजनाधिप ॥ तस्मिन्फलरसेपीतेनजराबाधतेचतान् २५ तत्रजांबूनदंनाम
कनकंदेवभूषणम् ॥ इंद्रगोपकसंकाशंजायतेभास्वरंतुतत् २६ तरुणादित्यवर्णाश्चजायंतेतत्रमानवाः ॥ तथामाल्यवतःशृंगेदृश्यतेहव्यवाट्सदा २७ नाम्ना
संवर्तकोनामकालाग्निर्भरतर्षभ ॥ तथामाल्यवतःशृंगेपूर्वपूर्वानुगंडिका २८ योजनानांसहस्राणिपंचषण्माल्यवानथ ॥ महारजतसंकाशाजायंतेतत्रमानवाः २९
ब्रह्मलोकच्युताःसर्वेसर्वेसर्वेषुसाधवः ॥ तपस्तप्यंतितेतीव्रंभवंतिह्यूर्ध्वरेतसः ॥ रक्षणार्थंतुभूतानांप्रविशंतेदिवाकरम् ३० षष्टिस्तानिसहस्राणिषष्टिरेवशतानि
च ॥ अरुणस्याग्रतोयांतिपरिवार्यदिवाकरम् ३१ षष्टिंवर्षसहस्राणिषष्टिमेवशतानिच ॥ आदित्यतापतप्तास्तेविशंतिशशिमंडलम् ॥ ३२ ॥ इतिश्रीमहा
भारतेभीष्मपर्वणिजंबूखंडविनिर्माणपर्वणिमाल्यवद्वर्णनेसप्तमोऽध्यायः ॥ ७ ॥ ॥ धृतराष्ट्रउवाच ॥ वर्षाणांचैवनामानिपर्वतानांचसंजय ॥ आचक्ष्वमे
यथातत्त्वंयेचपर्वतवासिनः १ ॥ संजयउवाच ॥ दक्षिणेनतुश्वेतस्यनिषधस्योत्तरेणतु ॥ वर्षंरमणकंनामजायंतेतत्रमानवाः २ शुक्लाभिजनसंपन्नाःसर्वेसुप्रिय
दर्शनाः ॥ निःसपत्नाश्चतेसर्वेजायंतेतत्रमानवाः ३ दशवर्षसहस्राणिशतानिदशपंचच ॥ जीवंतितेमहाराजनित्यंमुदितमानसाः ४

हुकालमुपास्य चंद्रंमनसोधिष्ठातारंप्रविशंति सूत्रात्मभावंप्राप्नुवंतीत्यर्थः ३२ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे सप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥ वर्षाणामिति १ द
क्षिणेनत्विति । यद्यपिश्वेतस्यदक्षिणेनीलस्तस्यदक्षिणेनिषधस्तथाऽपिनिषधोत्तरत्वमस्त्येवेत्यविरोधः । रमणकंयत्पूर्वंनीलादुत्तरतःश्वेताद्दक्षिणतश्चश्वेतवर्षमित्युक्तंतस्यैवरमणकमितिसंज्ञांतरं । दक्षिणेनतुनील
स्यनीलमाल्यवतोर्नीलगंधमादनयोश्चसंधावित्यर्थः निषधस्योत्तरेणतथैवतयोरेवसंधिद्वयेइत्यर्थः २ । ३ । ४

५ । ६ । ७ शृंगाणिशृंगवतःषष्ठस्यवर्षपर्वतस्यसानूनि ८ । ९ शृंगस्यशृंगवतः १० शृंगशृंगवत यस्मात्सर्वधातुविचित्रश्चशृंगवान्नामपर्वतइत्युक्तमहिम्नापर्वतेनपरिच्छिन्नंइदंऐरावताख्यंवर्षं तस्मात् अतःपूर्वोक्ताद्वर्षगणात्परंश्रेष्ठमिदंवर्षमित्यर्थः एतदेवाह नतत्रेत्यादिना ११ । १२ अनिष्यंदाअस्वेदाः देवतुल्याइत्यर्थः १३ । १४ आदित्यतापतप्तास्तेविशंतिशशिमंडलमितिविराड्भावं त्यक्त्वासूत्रात्मभावंगच्छंतीत्युक्तं स्थूलसूक्ष्मरूपंकार्यद्वयं । इदानींपिप्पलंतुवदिष्यसीत्युक्तःसंजयोऽवसरंप्राप्यपिप्पलाख्यंकारणमप्याह क्षीरोदस्येति । तत्राधिदैवंलवणेक्षुसुरासर्पिर्दधिक्षीरशुद्धोदकानां सप्तसमुद्राणामुपांत्यःक्षीरोदःअध्यात्मं । अन्नमयःकोशआत्मा प्राणमयस्तुइंद्रियमयप्राणमयभेदेनद्विविधइतिद्वौ चतुर्थोमनोमयः । पंचमोविज्ञानमयः । षष्ठआनंदमयः । सर्वकारणभूतःसप्तमः शुद्धंब्रह्मेति । तत्रक्षीरोदात्परतोमहाविष्णोर्जगज्जन्मादिहेतोःस्थानमस्ति यदिदंदहराद्युपासकैःप्राप्यते । यत्रारण्यश्चार्णवौयत्रप्रभुविमितंहिरण्मयंवेश्मयत्राश्वत्थःसोमसवनइत्यादिचिन्हमुक्तंश्रुतिप्रसिद्धं सप्रभुरंतर्यामी हरिःसर्वसंहर्त्ता वैकुंठोऽकुंठितसामर्थ्यः शकटेशकटवदचेतनेकनकामयेकनकवद्भास्वरज्योतिर्मये अन्येभ्योऽपिदृश्यतेइतिदीर्घः चिन्मयेशरीरेवसति १९ अस्यवस्तुतस्त्वा[illegible]

दक्षिणेनतुनीलस्यनिषधस्योत्तरेणतु ॥ वर्षंहिरण्मयंनामयत्रहैरण्वतीनदी ५ यत्रचायंमहाराजपक्षिराट्पतगोत्तमः ॥ यक्षानुगामहाराजधनिनःप्रियदर्शनाः ६ महाबलास्तत्रजनाराजन्मुदितमानसाः ॥ एकादशसहस्राणिवर्षाणांतेजनाधिप ७ आयुःप्रमाणंजीवंतिशतानिदशपंचच ॥ शृंगाणिचविचित्राणित्रीण्येवमनुजाधिप ८ एकंमणिमयंतत्रतथैकंरौक्ममद्भुतम् ॥ सर्वरत्नमयंचैकंभवनैरुपशोभितम् ९ तत्रस्वयंप्रभादेवीनित्यंवसतिशांडिली ॥ उत्तरेणतुशृंगस्यसमुद्रांतेजनाधिप १० वर्षमैरावतंनामतस्माच्छृंगमतःपरम् ॥ नतत्रसूर्यस्तपतिनजीर्यंतेचमानवाः ११ चंद्रमाश्चसनक्षत्रोज्योतिर्भूतइवावृतः ॥ पद्मप्रभाःपद्मवर्णाःपद्मपत्रनिभेक्षणाः १२ पद्मपत्रसुगंधाश्चजायंतेतत्रमानवाः ॥ अनिष्यंदाइष्टगंधानिराहाराजितेन्द्रियाः १३ देवलोकच्युताःसर्वेतथाविरजसोनृप ॥ त्रयोदशसहस्राणिवर्षाणांतेजनाधिप १४ आयुःप्रमाणंजीवंतिनराभरतसत्तम ॥ क्षीरोदस्यसमुद्रस्यतथैवोत्तरतःप्रभुः ॥ हरिर्वसतिवैकुंठःशकटेकनकामये १५ अष्टचक्रंहितद्यानंभूतयुक्तंमनोजवम् ॥ अग्निवर्णंमहातेजोजांबूनदविभूषितम् १६ सप्रभुःसर्वभूतानांविभुश्चभरतर्षभ ॥ संक्षेपोविस्तरश्चैवकर्त्ताकारयितातथा १७ पृथिव्यापस्तथाकाशंवायुस्तेजश्चपार्थिव ॥ सयज्ञःसर्वभूतानामास्यंतस्यहुताशनः १८

पिचिन्मयत्वं तथापिहिलोकप्रसिद्धं अष्टचक्रंअष्टाभिर्भगवत्तनुभिरुह्यतइतिअष्टचक्रं यानंइहलोकपरलोकगतिसाधनं अष्टौचक्राणितु कर्मेन्द्रियपंचकं ज्ञानेन्द्रियपंचकं मनआदिचतुष्कं प्राणपञ्चकं सूक्ष्मभूतपंचकं अविद्या कामःकर्मचेति पुर्यष्टकात्मकं लिंगंशाकटवदचेतनमचलमपि भूतयुक्तंभूतेननित्यसिद्धेनब्रह्मणाअनुप्रविष्टंसत् मनोजवंशीघ्रगंभवति प्राणनादिक्रियाःकरोतीत्यर्थः अतएवश्रूयते ‘ कोह्येवान्यात्कःप्राण्यात्यदेषआकाशआनंदोनस्यात् ’ इति । अग्निवर्णं अग्निवत्वर्णोवर्णनायस्य अत्यंतंसंसारदुःखप्रदमित्यर्थः । महातेजःअनेकविधज्ञानेंद्रियप्रधानं जांबूनदंदिव्यसुवर्णंचेतोहरणं वासनाजालं तेनविभूषितंतन्मयमित्यर्थः अधिदैवंतुस्पष्टएवार्थः १६ सप्रभुरिति । योऽस्मिन्शकटेवसति सएवसर्वेषांजीवानांप्रभुर्नियंता विभुर्व्यापकः संक्षेपःसंहर्त्ता विस्तरःसम्यक्विरचयिता । कर्त्ताजीवरूपेण कारयिताईश्वररूपेण १७ एवमध्यात्मादिदैवरूपत्वमुक्त्वा अधिभूताधियज्ञरूपत्वमपितस्यैवाह पृथिवीति । सर्वेषांभूतानांसंबंधीयथाधिकारंनिर्वर्त्योयज्ञःसएव आस्यंतस्यहुताशनः विशेषतस्तुसयज्ञेनैवतृप्यतीतिभावः १८

एवंसंजयेनउक्तःउपदिष्टोधृतराष्ट्रोमहामनाः महत्पिप्पलापरंपर्यायविश्वरूपदर्शनयोग्यंमनोयस्यसएवंभूतो ध्यानंसविकल्पसमाधिंअन्वगमत् संजयवाक्यश्रवणमनुप्राप्तवान् १९ तत्रचयथाऽर्जुनेनविश्वरूप
दर्शनकाले भावीक्षत्रक्षयोदृष्टस्तद्वत्सोऽपि नरनारायणाभ्यांक्रियमाणंसर्वक्षत्रक्षयंदृष्ट्वास्वपुत्रान्प्रतिविचिन्त्यपुनरेवाब्रवीत् । तदेववचनमाह असंशयमिति २० इहलोकंत्वदुक्तेजंबूखंडे शाश्वतंशश्वद्भवंमेवर्वा
दिकमपिनास्ति किंतुसर्वंदृष्टनष्टस्वभावंसंकल्पमात्रोत्थं । किंतर्हिशाश्वतमस्ति नरोनारायणश्चेतिजीवेश्वरावेवशाश्वतौ नेत्याह उभयंमिलित्वाएकएवसर्वज्ञःसर्वभूतहृच्च तमेवेश्वरंदेवावैकुंठमाहुः अधिदैवंस

वैशंपायनउवाच ॥ एवमुक्तःसंजयेनधृतराष्ट्रोमहामनाः ॥ ध्यानमन्वगमद्राजन्पुत्रान्प्रतिजनाधिप १९ सविचिंत्यमहातेजाःपुनरेवाब्रवीद्वचः ॥ असंशयंसूतपुत्र
कालःसंक्षिपतेजगत् २० सृजतेचपुनःसर्वंनेहविद्यतिशाश्वतम् ॥ नरोनारायणश्चैवसर्वज्ञःसर्वभूतहृत् २१ देवावैकुंठमित्याहुर्नराविष्णुमितिप्रभुम् २२ ॥ इतिश्री
महाभारतेभीष्मपर्वणि जंबूखंडविनिर्माणपर्वणि धृतराष्ट्रवाक्येऽष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ यदिदंभारतंवर्षंयत्रेदंमूर्च्छितंबलम् ॥
यत्रातिमात्रलुब्धोऽयंपुत्रोदुर्योधनोमम १ यत्रगृद्धाःपांडुपुत्रायत्रमेसज्जतेमनः ॥ एतन्मेतत्त्वमाचक्ष्वत्वंहिमेबुद्धिमान्मतः २ ॥ संजयउवाच ॥ नतत्रपांडवागृद्धाः
शृणुराजन्वचोमम ॥ गृद्धोदुर्योधनस्तत्रशकुनिश्चापिसौबलः ३ अपरेक्षत्रियाश्चैवनानाजनपदेश्वराः ॥ येगृद्धाभारतेवर्षेनमृष्यंतिपरस्परम् ४ अत्रतेकीर्तयिष्यामिवर्षं
भारतभारतम् ॥ प्रियमिंद्रस्यदेवस्यमनोर्वैवस्वतस्यच ५ पृथोस्तुराजन्वैन्यस्यतथेक्ष्वाकोर्महात्मनः ॥ ययातेरंबरीषस्यमांधातुर्नहुषस्यच ६ तथैवमुचुकुंदस्यशिबेरौ
शीनरस्यच ॥ ऋषभस्यतथैलस्यनृगस्यनृपतेस्तथा ७ कुशिकस्यचदुर्द्धर्षगाधेश्चैवमहात्मनः ॥ सोमकस्यचदुर्द्धर्षदिलीपस्यतथैवच ८ अन्येषांचमहाराजक्षत्रियाणां
बलीयसाम् ॥ सर्वेषामेवराजेन्द्रप्रियंभारतभारतम् ९ तत्तेवर्षंप्रवक्ष्यामियथायथमरिन्दम ॥ शृणुमेगदतोराजन्यन्मांत्वंपरिपृच्छसि १० महेन्द्रोमलयःसह्यःशुक्ति
मानृक्षवानपि ॥ विंध्यश्चपारियात्रश्चसप्तैतेकुलपर्वताः ११ तेषांसहस्रशोराजन्पर्वतास्तेसमीपतः ॥ अविज्ञाताःसारवंतोविपुलाश्चित्रसानवः १२ अन्येततोऽपरि
ज्ञाताह्रस्वाह्रस्वोपजीविनः ॥ आर्याम्लेच्छाश्चकौरव्यतैर्मिश्राःपुरुषाविभो १३ नदींपिबंतिविपुलांगंगांसिंधुंसरस्वतीम् ॥ गोदावरींनर्मदांचबाहुदांचमहानदीम्
१४ शतद्रूंचंद्रभागांचयमुनांचमहानदीम् ॥ दृषद्वतींविपाशांचविपापांस्थूलवालुकाम् १५ नदींवेत्रवतींचैवकृष्णवेणांचनिम्नगाम् ॥ इरावतींवितस्तांचपयो
ष्णींदेविकामपि १६ वेदस्मृतांवेदवतींत्रिदिवामिक्षुलांकृमिम् ॥ करीषिणींचित्रवाहांचित्रसेनांचनिम्नगाम् १७ गोमतींधूतपापांचवंदनांचमहानदीम् ॥
कौशिकींत्रिदिवांकृत्यांनिचितांलोहितारणीम् १८

एववैकुंठाधिपतिरित्युच्यतइत्यर्थः नराजीवास्तुतमेवांविष्णुंअध्यात्मंअंतःप्रविष्टं जनानांशास्तारं अष्टचक्रस्यशकटस्यचालकमाहुः तथापिप्रभुंकृत्वाऽपिलेपशून्यं अतईश्वरस्यचिकीर्षितःक्षत्रक्षयोनास्मद्दोष
जइतिभावः २१ । २२ ॥ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेअष्टमोऽध्यायः ॥ ८ ॥ ॥ यदिदमिति १ गृद्धाःलोभयुक्ताः एतत् एतस्य मेमह्यं तत्त्वंयाथार्थ्यम् २ । ३ । ४ प्रियमिति ।
कर्मभूमित्वादिंद्रादीनामिदंप्रियम् ५ अग्रेस्पष्टार्थोग्रंथः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

रहस्यांशतकुंभांचसरयूंचतथैवच ॥ चर्मण्वतींवेत्रवतींहस्तिसोमांदिशंतथा १९ शरावतींपयोष्णींचवेणांभीमरथीमपि ॥ कावेरींचुलुकांचापिवाणींशतबलामपि
२० नीवारामहितांचापिसुप्रयोगांजनाधिप ॥ पवित्रांकुंडलींसिंधुंराजनींपुरमालिनीम् २१ पूर्वाभिरामांवीरांचभीमामोघवतींतथा ॥ पाशाशिनींपापहरांमहेन्द्रांपाट
लावतीम् २२ करीषिणीमसिक्नींचकुशचीरांमहानदीम् ॥ मकरींप्रवरांमेनांहेमांघृतवतींतथा २३ पुरावतीमनुष्णांचशैब्यांकापींचभारत ॥ सदानीरामधृष्यांचकुशधारां
महानदीम् २४ सदाकांतांशिवांचैवतथावीरवतीमपि ॥ वस्त्रांसुवस्त्रांगौरींचकंपनांसहिरण्वतीम् २५ वरांवीरकरांचापिपंचमींचमहानदीम् ॥ रथचित्रांज्योतिरथांविश्वा
मित्रांकपिंजलाम् २६ उपेंद्रांबहुलांचैवकुवीरामंबुवाहिनीम् ॥ विनदींपिंजलांवेणांतुंगवेणांमहानदीम् २७ विदिशांकृष्णवेणांचताम्रांचकपिलामपि ॥ खलुंसुवामांवेदा
श्वांहरिश्रावांमहापगाम् २८ शीघ्रांचपिच्छिलांचैवभारद्वाजींचनिम्नगाम् ॥ कौशिकींनिम्नगांशोणांबाहुदामथचंद्रमाम् २९ दुर्गांचित्रशिलांचैवब्रह्मवेध्यांबृहद्वतीम् ॥
यवक्षामथरोहींचतथाजांबूनदीमपि ३० सुनसांतमसांदासींवसामन्यांवराणसीम् ॥ नीलांधृतवतींचैवपर्णाशांचमहानदीम् ३१ मानवींवृषभांचैवब्रह्ममेध्यांबृहद्ध्वनीम् ॥
एताश्चान्याश्चबहुधामहानद्योजनाधिप ३२ सदानिरामयांकृष्णांमंदगांमंदवाहिनीम् ॥ ब्राह्मणींचमहागौरींदुर्गामपिचभारत ३३ चित्रोपलांचित्ररथांमंजुलांवाहिनीं
तथा ॥ मंदाकिनींवैतरणींकोषांचापिमहानदीम् ३४ शुक्तिमतीमनंगांचतथैववृषसाह्वयाम् ॥ लोहित्यांकरतोयांचतथैववृषकाह्वयाम् ३५ कुमारीमृषिकुल्यांचमारिषां
चसरस्वतीम् ॥ मंदाकिनींसुपुण्यांचसर्वांगंगांचभारत ३६ विश्वस्यमातरःसर्वाःसर्वाश्चैवमहाफलाः ॥ तथानद्यस्त्वप्रकाशाःशतशोऽथसहस्रशः ३७ इत्येताःसरितो
राजन्समाख्यातायथास्मृति ॥ अतऊर्ध्वंजनपदान्निबोधगदतोमम ३८ तत्रेमेकुरुपांचालाःशाल्वामाद्रेयजांगलाः ॥ शूरसेनाःपुलिंदाश्चबोधामालास्तथैवच ३९
मत्स्याःकुशल्याःसौशल्याःकुंतयःकांतिकोसलाः ॥ चेदिमत्स्यकरूषाश्चभोजाःसिंधुपुलिंदकाः ४० उत्तमाश्चदशार्णाश्चमेकलाश्चोत्कलैःसह ॥ पंचालाःकोसलाश्चैव
नैकपृष्ठाधुरंधराः ४१ गोधामद्रकलिंगाश्चकाशयोऽपरकाशयः ॥ जठराःकुकुराश्चैवसदशार्णाश्चभारत ४२ कुंतयोऽवंतयश्चैवतथैवापरकुंतयः ॥ गोमंतामंडकाःसंडा
विदर्भारूपवाहिकाः ४३ अश्मकाःपांडुराष्ट्राश्चगोपराष्ट्राःकरीतयः ॥ अधिराज्यकुशाद्याश्चमल्लराष्ट्रंचकेवलम् ४४ वारवास्यायवाहाश्चचक्राश्चक्रातयःशकाः ॥ विदेहा
मगधाःस्वक्षामलजाविजयास्तथा ४५ अंगावंगाःकलिंगाश्चयकृल्लोमानएवच ॥ मल्लाःसुदेष्णाःप्रह्लादामाहिकाःशशिकास्तथा ४६ बाह्लिकावाटधानाश्चआभीराः
कालतोयकाः ॥ अपरांताःपरांताश्चपंचालाश्चर्ममंडलाः ४७ अटवीशिखराश्चैवमेरुभूताश्चमारिष ॥ उपावृत्तानुपावृताःस्वराष्ट्राःकेकयास्तथा ४८

४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ [illegible] । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० यथागुणबलमिति । यथागुणंसत्त्वादिगुणान्

कुंदापरंतामाहेयाःकक्षाःसामुद्रनिष्कुटाः ॥ अंध्राश्चबहवोराजन्नंतर्गिर्यास्तथैवच ४९ बहिर्गिर्यांगमलजामगधामानवर्जकाः ॥ समंतराःप्रावृषेयाभार्गवाश्चजनाधिप ५० पुंड्राभर्गाःकिराताश्चसुदृष्टायामुनास्तथा ॥ शकानिषादानिषधास्तथैवानर्त्तनैर्ऋताः ५१ दुर्गालाःप्रतिमत्स्याश्चकुंतलाःकोसलास्तथा ॥ तीरग्रहाःशूरसेना ईजिकाःकन्यकागुणाः ५२ तिलभारामसीराश्चमधुमंतःसुकंदकाः ॥ काश्मीराःसिंधुसौवीरागांधारादर्शकास्तथा ५३ अभीसाराउलूताश्चशैवलाबाह्लिकास्तथा ॥ दार्वीचवानवादर्वावातजामरथोरगाः ५४ बहुवाद्याश्चकौरव्यसुदामानःसुमल्लिकाः ॥ वध्राःकरीषकाश्चापिकुलिंदोपत्यकास्तथा ५५ वनायवोदशापार्श्वरोमाणःकुश बिंदवः ॥ कच्छागोपालकक्षाश्चजांगलाःकुरुवर्णकाः ५६ किराताबर्बराःसिद्धावैदेहास्ताम्रलिप्तकाः ॥ ओंड्राम्लेच्छाःसैसिरिध्राःपार्वतीयाश्चमारिष ५७ अथापरे जनपदादक्षिणाभरतर्षभ ॥ द्रविडाःकेरलाःप्राच्याभूषिकावनवासिकाः ५८ कर्णाटकामहिषकाविकल्पाभूषकास्तथा ॥ झिल्लिकाःकुंतलाश्चैवसौहृदानभकाननाः ५९ कौकुट्टकास्तथाचोलाःकौंकणामालवानराः ॥ समंगाःकरकाश्चैवकुकुरांगारमारिषाः ६० ध्वजिन्युत्सवसंकेतास्त्रिगर्त्ताःशाल्वसेनयः ॥ व्यूकाःकोकबकाःप्रोष्ठाःसम वेगवशास्तथा ६१ तथैवविंध्यचुलिकाःपुलिंदावल्कलैःसह ॥ मालवाबल्लवाश्चैवतथैवापरबल्लवाः ६२ कुलिंदाःकालदाश्चैवकुंडलाःकरटास्तथा ॥ मूषकास्तनबाला श्चसनीपाघटसृंजयाः ६३ अठिदापाःशिवाटाश्चतनयासुनयास्तथा ॥ ऋषिकाविदभाःकाकास्तंगणाःपरतंगणाः ६४ उत्तराश्चापरम्लेच्छाःक्रूराभरतसत्तम ॥ यवना श्चीनकांबोजादारुणाम्लेच्छजातयः ६५सकृद्ग्रहाःकुलत्थाश्चहूणाःपारसिकैःसह ॥ तथैवरमणाश्चीनास्तथैवदशमालिकाः ६६ क्षत्रियोपनिवेशाश्चवैश्यशूद्रकुलानिच ॥ शूद्राभीराश्चदरदाःकाश्मीराःपशुभिःसह ६७ खाशीराश्चांतचाराश्चपह्लवागिरिगह्वराः ॥ आत्रेयाःसभरद्वाजास्तथैवस्तनपोषिकाः ६८ प्रोषकाश्चकलिंगाश्चकिरा तानांचजातयः ॥ तोमराहन्यमानाश्चतथैवकरभंजकाः ६९ एतेचान्येजनपदाःप्राच्योदीच्यास्तथैवच ॥ उद्देशमात्रेणमयादेशाःसंकीर्तिताविभो ७० यथागुणबलं चापित्रिवर्गस्यमहाफलम् ॥ दुह्येतधेनुःकामधुक्भूमिःसम्यगनुष्ठिता ७१ तस्यांगृद्ध्यंतिराजानःशूराधर्मार्थकोविदाः ॥ तेत्यजंत्याहवेप्राणान्वसुगृद्धास्तरस्विनः ७२ देवमानुषकायानांकामंभूमिःपरायणम् ॥ अन्योन्यस्याऽवलुंपंतिसारमेयायथाऽऽमिषम् ७३ राजानोभरतश्रेष्ठभोक्तुकामावसुंधराम् ॥ नचापितृप्तिःकामानां विद्यतेऽद्यापिकस्यचित् ७४ तस्मात्परिग्रहेभूमेर्यतंतेकुरुपांडवाः ॥ साम्नाभेदेनदानेनदंडेनैवचभारत ७५

अनतिक्रम्य तद्वत्यथाबलंशौर्यंचानतिक्रस्य त्रिवर्गस्यधर्मार्थकामात्मकस्य महाफलंउत्कृष्टफलंहैरण्यगर्भपदप्राप्त्यंतं सम्यमनुष्ठितासम्यक्पालिताभूमिर्दुह्येतप्रपूरयेत्धेनुरिवकामान्अन्यांश्चदुग्धेइतिकामधुक् ७१ गृद्ध्यंतिअभिकांक्षांकुर्वंति वसुगृद्धाः धनलुब्धाः ७२ देवकायानांयज्ञेन मानुषकायानामन्नप्रसवेन भूमिःपरायणंशरणं ७३ । ७४ तस्मात् अतृप्तत्वात् ७५

एवमाधिदैविकंभूमिजयफलमुक्तं अथाध्यात्मंभूमिजयफलमाह पितेति । अच्छिद्रंसंपूर्णंदर्शनंयस्याःसाभूमिः योगमार्गरीत्याकार्त्स्न्येनदृष्टासतीपित्रादिवदिहभौतिकेभ्यआघातेभ्यःपाति वज्रकायत्वंप्रयच्छ
तीत्यर्थः खंखस्थंसूर्यादीनांपदंद्यौःस्वर्गपदंचसैवभवति तत्तत्प्रापयतीत्यर्थः ७६ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेनवमोऽध्यायः ॥ ९ ॥ ॥ भारतस्येति १ । २ तिष्यंकलियुगं ३
४ । ५ । ६ । ७ प्रजायंतेप्रजांजनयंति ८ । ९ वपुष्मंतःप्रशस्तदेहाः १० । ११ सर्वेवर्णाःपरस्परजयैषिणोजायंतइतिसंबंधः १२ । १३ इर्ष्यापरोत्कर्षासहिष्णुत्वं । मानःस्वस्मिन्पूज्यताबुद्धिः।

पिताभ्राताचपुत्राश्चखंद्यौश्चनरपुंगव ॥ भूमिर्भवतिभूतानांसम्यगच्छिद्रदर्शना ७६ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिजंबूखंडविनिर्माणपर्वणि भारतीयनदीदेशा
दिनामकथनेनवमोऽध्यायः ॥ ९ ॥ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ भारतस्यास्यवर्षस्यतथाहैमवतस्यच ॥ प्रमाणमायुषःसूतबलंचापिशुभाशुभम् १
अनागतमतिक्रांतंवर्त्तमानंचसंजय ॥ आचक्ष्वमेविस्तरेणहरिवर्षंतथैवच २ ॥ संजयउवाच ॥ चत्वारिभारतेवर्षेयुगानिभरतर्षभ ॥ कृतंत्रेताद्वापरंचतिष्यंचकुरु
वर्द्धन ३ पूर्वंकृतयुगंनामततस्त्रेतायुगंप्रभो ॥ संक्षेपाद्वापरस्याथततस्तिष्यंप्रवर्त्तते ४ चत्वारितुसहस्राणिवर्षाणांकुरुसत्तम ॥ आयुःसंख्याकृतयुगेसंख्याताराजसत्तम
५ तथात्रीणिसहस्राणित्रेतायांमनुजाधिप ॥ द्वेसहस्रेद्वापरेतुभुवितिष्ठंतिसांप्रतम् ६ नप्रमाणस्थितिर्ह्यस्तितिष्येऽस्मिन्भरतर्षभ ॥ गर्भस्थाश्चम्रियंतेऽत्रतथाजाता
म्रियंतिच ७ महाबलामहासत्वाःप्रज्ञागुणसमन्विताः ॥ प्रजायंतेचजाताश्चशतशोऽथसहस्रशः ८ जाताःकृतयुगेराजन्धनिनःप्रियदर्शनाः ॥ प्रजायंतेचजाताश्चमु
नयोवैतपोधनाः ९ महोत्साहामहात्मानोधार्मिकाःसत्यवादिनः ॥ प्रियदर्शनावपुष्मंतोमहावीर्याधनुर्द्धराः १० वरार्हायुधिजायंतेक्षत्रियाःशूरसत्तमाः ॥ त्रेतायां
क्षत्रियाराजन्सर्वेवैचक्रवर्तिनः ११ सर्ववर्णाश्चजायंतेसदाचैवचद्वापरे ॥ महोत्साहावीर्यवंतःपरस्परजयैषिणः १२ तेजसाल्पेनसंयुक्ताःक्रोधनाःपुरुषान्नृप ॥ लुब्धा
अनृतकाश्चैवतिष्येजायंतिभारत १३ ईर्ष्यामानस्तथाक्रोधोमायाऽसूयातथैवच ॥ तिष्येभवतिभूतानांरागोलोभश्चभारत १४ संक्षेपोवर्त्ततेराजन्द्वापरेऽस्मिन्न
राधिप ॥ गुणोत्तरंहैमवतंहरिवर्षंततःपरम् १५ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिजंबूखंडविनिर्माणपर्वणिभारतवर्षेकृताद्यनुरोधेनायुर्निरूपणेदशमोऽध्यायः ॥ १० ॥
समाप्तंचजंबूखंडविनिर्माणपर्व ॥ अथभूमिपर्व ॥ धृतराष्ट्रउवाच ॥ जंबूखंडस्त्वयाप्रोक्तोयथावदिहसंजय ॥ विष्कंभमस्यप्रब्रूहिपरिमाणंतुतत्त्वतः १ समुद्रस्य
प्रमाणंचसम्यगच्छिद्रदर्शनम् ॥ शाकद्वीपंचमेब्रूहिकुशद्वीपंचसंजय २ शाल्मलिंचैवतत्त्वेनक्रौञ्चद्वीपंतथैवच ॥ ब्रूहिगावल्गणेसर्वंराहोःसोमार्कयोस्तथा ३
॥ संजयउवाच ॥ राजन्सुबहवोद्वीपायैरिदंसंततंजगत् ॥ सप्तद्वीपान्प्रवक्ष्यामिचंद्रादित्यौग्रहंतथा ४

क्रोधोऽभिज्वलनं । मायाकपटं । असूयापरगुणेषुदोषाविष्करणं । रागोविषयेषुप्रीतिः । लोभस्तल्लिप्सा १४ संक्षेपोगुणानामितिशेषः १५ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेदशमोऽध्यायः ॥ १० ॥
जंबूखंडइति १ । २ । ३ ग्रहंराहुं ४

अष्टादशसहस्राणिषट्शतानिचयोजनानिविष्कंभश्चतुर्दलकमलाकारस्यजंबूद्वीपस्यपत्रांतपरिधिः तादृशविस्तारएवपिंडप्रमाणमन्तर्भाव्यपर्वताकृतित्वाज्जंबूपर्वतइत्युच्यते ५ लावणस्येति क्षेत्रफलतःपंचसहस्रा
यामत्वाज्जंबूद्वीपस्यतदुभयतःपंचपंचभिःसहस्रैःसमुद्रस्यविष्कंभोविस्तारः तेनससमुद्रस्यद्वीपस्यपंचदशसहस्रयोजनोव्यासः । द्विगुणःदशसहस्रयोजनःपरिमंडलश्चेदुभयतःसमुद्रवेष्टनेनसहचत्वारिंशत्सहस्रः ।
एवंतृतीयोऽशीतिसहस्रः । चतुर्थःषष्टिसहस्राधिकंलक्षं । पंचमोलक्षत्रयंविंशतिसहस्राणि । षष्ठोलक्षषट्कंचत्वारिंशत्सहस्राणि सप्तमोद्वादशलक्षाण्यशीतिसहस्राणि । एतेषांसंकलनेपंचविंशतिलक्षा

अष्टादशसहस्राणियोजनानिविशांपते ॥ षट्शतानिचपूर्णानिविष्कंभोजम्बुपर्वतः ५ लावणस्यसमुद्रस्यविष्कंभोद्विगुणःस्मृतः ॥ नानाजनपदाकीर्णोमणिविद्रुम
चित्रितः ६ नैकधातुविचित्रैश्चपर्वतैरुपशोभितः ॥ सिद्धचारणसंकीर्णःसागरःपरिमंडलः ७ शाकद्वीपंचवक्ष्यामियथावदिहपार्थिव ॥ शृणुमेत्वंयथान्यायंब्रुवतः
कुरुनंदन ८ जंबूद्वीपप्रमाणेनद्विगुणःसनराधिप ॥ विष्कंभेणमहाराजसागरोऽपिविभागशः ९ क्षीरोदोभरतश्रेष्ठयेनसंपरिवारितः ॥ तत्रपुण्याजनपदास्तत्रन
म्रियतेजनः १० कुतएवहिदुर्भिक्षंक्षमातेजोयुताहिते ॥ शाकद्वीपस्यसंक्षेपोयथावद्भरतर्षभ ११ उक्तएषमहाराजकिमन्यत्कथयामिते ॥ धृतराष्ट्रउवाच ॥ शाक
द्वीपस्यसंक्षेपोयथावदिहसंजय १२ उक्तस्त्वयामहाप्राज्ञविस्तरंब्रूहितत्त्वतः ॥ संजयउवाच ॥ तथैवपर्वताराजन्सप्तात्रमणिभूषिताः १३ रत्नाकरास्तथानद्यस्ते
षांनामानिमेशृणु ॥ अतीवगुणवत्सर्वंतत्रपुण्यंजनाधिप १४ देवर्षिगंधर्वयुतःप्रथमोमेरुरुच्यते ॥ प्रागायतोमहाराजमलयोनामपर्वतः १५ ततोमेघाःप्रवर्तंते
प्रभवंतिचसर्वशः ॥ ततःपरेणकौरव्यजलधारोमहागिरिः १६ ततोनित्यमुपादत्तेवासवःपरमंजलम् ॥ ततोवर्षंप्रभवतिवर्षकालेजनेश्वर १७ उच्चैर्गिरीरैवतकोयत्र
नित्यंप्रतिष्ठिता ॥ रेवतीदिविनक्षत्रंपितामहकृतोविधिः १८ उत्तरेणतुराजेन्द्रश्यामोनाममहागिरिः ॥ नवमेघप्रभःप्रांशुःश्रीमानुज्ज्वलविग्रहः १९ यतःश्याम
त्वमापन्नाःप्रजाजनपदेश्वर ॥ धृतराष्ट्रउवाच ॥ सुमहान्संशयोमेऽद्यप्रोक्तोयंसंजयत्वया २० प्रजाःकथंसूतपुत्रसंप्राप्ताःश्यामतामिह ॥ संजयउवाच ॥ सर्वे
ष्वेवमहाराजद्वीपेषुकुरुनंदन २१ गौरःकृष्णश्चपतगस्तयोर्वर्णांतरेनृप ॥ श्यामोयस्मात्प्रवृत्तोवैतस्माच्छ्यामोगिरिःस्मृतः २२ ततःपरंकौरवेन्द्रदुर्गशैलोमहोदयः ॥
केसरःकेसरयुतोयतोवातःप्रवर्त्तते २३ तेषांयोजनविष्कंभोद्विगुणःप्रविभागशः ॥ वर्षाणितेषुकौरव्यसप्तोक्तानिमनीषिभिः २४ महामेरुर्महाकाशोजलदःकुमु
दोत्तरः ॥ जलधारोमहाराजसुकुमारइतिस्मृतः २५ रैवतस्यतुकौमारःश्यामस्यमणिकांचनः ॥ केसरस्याथमोदाकीपरेणतुमहापुमान् २६

णिपंचत्रिंशत्सहस्राणियोजनानिसप्तानांद्वीपानांससमुद्राणांविस्तारः ६ । ७ । ८ । ९ । । १० । ११ १२ । १३ । १४ । । १५ । १६ । १७ रेवतीज्योतिर्मंडलरूपेणदि
विविभ्रम्यमाणाऽपिदिव्येनरूपेणात्रापिवर्ततेएवंविधिर्मर्यादापितामहेनकृता १८ । १९ । २० । २१ पतगवर्णंव्याचष्टे तयोरिति । मिश्रोवर्णःपतगइत्यर्थः । कारणगुणाःकार्यगुणानारभंतइ
तिन्यायेनश्यामपर्वतभवःश्यामवर्णः शाकाद्यन्नपरिणामेनमनुष्याअपिश्यामत्वंगताइत्यर्थः । यस्माच्छ्यामोगिरिस्तस्मात्तत्स्थानांश्यामोवर्णःप्रवृत्तइत्यर्थः २२ । २३ । २४ । २५ । २६

२७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपे एकादशोऽध्यायः ॥ ११ ॥



परिवार्यतुकौरव्यदैर्घ्यंह्रस्वत्वमेवच ॥ जंबूद्वीपेनसंख्यातस्तस्यमध्येमहाद्रुमः २७ शाकोनाममहाराजप्रजातस्यसदानुगा ॥ तत्रपुण्याजनपदाःपूज्यतेतत्र
शंकरः २८ तत्रगच्छंतिसिद्धाश्चचारणादैवतानिच ॥ धार्मिकाश्चप्रजाराजंश्चत्वारोतीवभारत २९ वर्णाःस्वकर्मनिरतानचस्तेनोऽत्रदृश्यते ॥ दीर्घायुषोम
हाराजजरामृत्युविवर्जिताः ३० प्रजास्तत्रविवर्द्धंतेवर्षास्विवसमुद्रगाः ॥ नद्यःपुण्यजलास्तत्रगंगाचबहुधागता ३१ सुकुमारीकुमारीचशीताशीवेणिकातथा ॥ महा
नदीचकौरव्यतथामणिजलानदी ३२ चक्षुर्वर्धनिकाचैवनदीभरतसत्तम ॥ तत्रप्रवृत्ताःपुण्योदानद्यःकुरुकुलोद्वह ३३ सहस्राणांशतान्येवयतोवर्षतिवासवः ॥ नता
सांनामधेयानिपरिमाणंतथैवच ३४ शक्यंतेपरिसंख्यातुंपुण्यास्ताहिसरिद्वराः ॥ तत्रपुण्याजनपदाश्चत्वारोलोकसंमताः ३५ मंगाश्चमशकाश्चैवमानसामंदगा
स्तथा ॥ मंगाब्राह्मणभूयिष्ठाःस्वकर्मनिरतान्नृप ३६ मशकेषुतुराजन्याधार्मिकाःसर्वकामदाः ॥ मानसाश्चमहाराजवैश्यधर्मोपजीविनः ३७ सर्वकामसमायुक्ताः
शूराधर्मार्थनिश्चिताः ॥ शूद्रास्तुमंदगानित्यंपुरुषाधर्मशीलिनः ३८ नतत्रराजाराजेन्द्रनदंडोनचदंडिकः ॥ स्वधर्मेणैवधर्मज्ञास्तेरक्षंतिपरस्परम् ३९ एतावदेव
शक्यंतुतत्रद्वीपेप्रभाषितुम् ॥ एतदेवचश्रोतव्यंशाकद्वीपेमहौजसि ४० ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभूमिपर्वणिशाकद्वीपवर्णनेएकादशोऽध्यायः ॥ ११ ॥

॥ ॥ संजयउवाच ॥ ॥ उत्तरेषुचकौरव्यद्वीपेषुश्रूयतेकथा ॥ एवंतत्रमहाराजब्रुवतश्चनिबोधमे १ घृततोयःसमुद्रोऽत्रदधिमंडोदकोऽपरः ॥ सुरोदः
सागरश्चैवतथाऽन्योजलसागरः २ परस्परेणद्विगुणाःसर्वेद्वीपानराधिप ॥ पर्वताश्चमहाराजसमुद्रैःपरिवारिताः ३ गौरस्तुमध्यमेद्वीपेगिरिर्मानःशिलोमहान् ॥
पर्वतःपश्चिमेकृष्णोनारायणसखोनृप ४ तत्ररत्नानिदिव्यानिस्वयंरक्षतिकेशवः ॥ प्रसन्नश्चाभवत्तत्रप्रजनांव्यदधत्सुखम् ५ कुशस्तंबःकुशद्वीपेमध्येजनपदैःसह ॥
संपूज्यतेशाल्मलिश्चद्वीपेशाल्मलिकेनृप ६ क्रौंचद्वीपेमहाक्रौंचोगिरीरत्नचयाकरः ॥ संपूज्यतेमहाराजचातुर्वर्ण्येननित्यदा ७ गोमंतःपर्वतोराजन्सुमहान्सर्वधातु
कः ॥ यत्रनित्यंनिवसतिश्रीमान्कमललोचनः ८ मोक्षिभिःसंगतोनित्यंप्रभुर्नारायणोहरिः ॥ कुशद्वीपेतुराजेन्द्रपर्वतोविद्रुमैश्चितः ९ स्वनामनामादुर्द्ध
र्षोद्वितीयोहेमपर्वतः ॥ द्युतिमान्नामकौरव्यतृतीयःकुमुदोगिरिः १० चतुर्थःपुष्पवान्नामपंचमस्तुकुशेशयः ॥ षष्ठोहरिगिरिर्नामषडेतेपर्वतोत्तमाः ११ तेषा
मंतरविष्कंभोद्विगुणःसर्वभागशः ॥ औद्भिदंप्रथमंवर्षंद्वितीयंवेणुमंडलम् १२ तृतीयंसुरथाकारंचतुर्थंकंबलंस्मृतम् ॥ धृतिमत्पंचमंवर्षंषष्ठंवर्षंप्रभाकरम् १३
सप्तमंकापिलंवर्षंसप्तैतेवर्षलंभकाः ॥ एतेषुदेवगंधर्वाःप्रजाश्चजगतीश्वरः १४

उत्तरेष्विति १ । २ । ३ मानःशिलोमनःशिलामयः ४ । । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ चतुरस्रंचतुर्दलकमलाकारंजंबूमंडलमितिशेषः तस्यपूर्वअश्रांतपरिधिरुक्तः । अ
ष्टादशसहस्राणिषट्शतानिचभारतेति इहयत्रमध्यममंडलपरिधिस्त्रयस्त्रिंशच्छतयोजनइत्युच्यते । ततश्चपंचसहस्रीतोयावान्यत्राग्रभागोबहिर्वृद्धस्तावानेवत्रयस्त्रिंशतोऽग्रेपंचसहस्रीतोगर्भेभागऊनइतिज्ञेयम् ३२

विहरंतेरमंतेचनतेषुम्रियतेजनः ॥ नतेषुदस्यवःसंतिम्लेच्छजात्योऽपिवान्नृप १५ गौरप्रायोजनःसर्वःसुकुमारश्वपार्थिव ॥ अवशिष्टेषुसर्वेषुवक्ष्यामिमनुजेश्वर
१६ यथाश्रुतंमहाराजतदव्यग्रमनाःशृणु ॥ क्रौंचद्वीपेमहाराजक्रौंचोनाममहागिरिः १७ क्रौंचात्परोवामनकोवामनादंधकारकः ॥ अंधकरात्परोराजन्मैनाकः
पर्वतोत्तमः १८ मैनाकात्परतोराजन्गोविंदोगिरिरुत्तमः ॥ गोविंदात्परतोराजन्निबिडोनामपर्वतः १९ परस्तुद्विगुणस्तेषांविष्कंभोवंशवर्द्धन ॥ देशांस्तत्रप्रवक्ष्या
मितन्मेनिगदतःशृणु २० क्रौंचस्यकुशलोदेशोवामनस्यमनोनुगः ॥ मनोनुगात्परश्चोष्णोदेशःकुरुकुलोद्वह २१ उष्णात्परःप्रावरकःप्रावारादंधकारकः ॥ अं
धाकारकदेशात्तुमुनिदेशःपरःस्मृतः २२ मुनिदेशात्परश्चैवप्रोच्यतेदुंदुभिस्वनः ॥ सिद्धचारणसंकीर्णोगौरप्रायोजनाधिप २३ एतेदेशामहाराजदेवगंधर्वसेविताः ॥
पुष्करेपुष्करोनामपर्वतोमणिरत्नवान् २४ तत्रनित्यंप्रभवतिस्वयंदेवःप्रजापतिः ॥ तंपर्युपासतेनित्यंदेवाःसर्वेमहर्षयः २५ वाग्भिर्मनोनुकूलाभिःपूजयंतोजना
धिप ॥ जंबूद्वीपात्प्रवर्तन्तेरत्नानिविविधान्युत २६ द्वीपेषुतेषुसर्वेषुप्रजानांकुरुसत्तम ॥ ब्रह्मचर्येणसत्येनप्रजानांहिदमेनच २७ आरोग्यायुःप्रमाणाभ्यांद्वि
गुणंद्विगुणंततः ॥ एकोजनपदोराजन्द्वीपेष्वेतेषुभारत ॥ उक्ताजनपदायेषुधर्मश्चैकःप्रदृश्यते २८ ईश्वरोदंडमुद्यम्यस्वयमेवप्रजापतिः ॥ द्वीपानेतान्म
हाराजरक्षंस्तिष्ठतिनित्यदा २९ सराजासशिवोराजन्सपितासप्रपितामहः ॥ गोपायतिनरश्रेष्ठप्रजाःसजडपंडिताः ३० भोजनंचात्रकौरव्यप्रजाःस्वयमुपस्थितम् ॥
सिद्धमेवमहाबाहोतद्धिभुंजंतिनित्यदा ३१ ततःपरंसमानामदृश्यतेलोकसंस्थितिः ॥ चतुरस्रंमहाराजत्रयस्त्रिंशत्तुमंडलम् ३२ तत्रतिष्ठंतिकौरव्यचत्वारोलोकसं
मताः ॥ दिग्गजाभरतश्रेष्ठवामनैरावतादयः ३३ सुप्रतीकस्तथाराजन्प्रभिन्नकरटामुखः ॥ तस्याहंपरिमाणंतुनसंख्यातुमिहोत्सहे ३४ असंख्यातःसनित्यं
हितिर्यगूर्ध्वमधस्तथा ॥ तत्रवैवायवोवांतिदिग्भ्यःसर्वाभ्यएवहि ३५ असंबद्धामहाराजतान्निगृण्हंतितेगजाः ॥ पुष्करैःपद्मसंकाशैर्विकसद्भिर्महाप्रभैः ३६ शत
धापुनरेवाशुतेतान्मुंचंतिनित्यशः ॥ श्वसद्भिर्मुच्यामानास्तुदिग्गजैरिहमारुताः ३७ आगच्छंतिमहाराजततस्तिष्ठंतिवैप्रजाः ॥ धृतराष्ट्रउवाच ॥ परोवैविस्तरो
ऽत्यर्थंत्वयासंजयकीर्तितः ३८ दर्शितंद्वीपसंस्थानमुत्तरंब्रूहिसंजय ॥ संजयउवाच ॥ उक्ताद्वीपामहाराजग्रहंवैशृणुतत्त्वतः ३९ स्वर्भानोःकौरवश्रेष्ठयावदेवप्रमा
णतः ॥ परिमंडलोमहाराजस्वर्भानुःश्रूयतेग्रहः ४०

तत्रपत्रसंधिस्थानेषुचतुर्षु ३३ तस्यगजचतुष्टयस्यपृथिव्याआश्रयभूतस्यतत्कस्योपरिवर्ततेइतिदुर्वचं तेनइश्वरशक्त्यैवदिग्गजाध्रियंतइतिभावः ३४ सःगजसमूहः वातरज्जुभिर्गजाबद्धाइत्येतन्मतांतरं
तदपिदूषयति तत्रेति ३५ प्रत्युतवायोरेवनिग्रहंतेकुर्वंतीत्याह तानिति । पुष्करैःशुंडाग्रैः ३६ । ३७ । ३८ उत्तरंसूर्येन्दुराहुप्रमाणम् ३९ । ४०

परिणाहेनपरिधिनाषट्त्रिंशत्सहस्राणि विपुलत्वेनततोऽप्याधिक्येन इदमुत्तरान्त्रयि ४१ षष्टियोजनानिपरिणाहएवेत्यर्थः ४२ । ४३ । ४४ पतगःशीघ्रगः विभावसुःसूर्यः ४५ । ४६ । ४७ । ४८
४९ । ५० । ५१ । ५२ । इतिभीष्मपर्वणि नीलकंठीये भारतभावदीपे भूमिपर्वार्थप्रकाशेद्वादशोऽध्यायः ॥ १२ ॥ ॥ अथेति ॥ १ । २ । ३ ककुदंराज्ञांमध्येध्वजतुल्यं । ' ककुदोऽप्य



॥ १३ ॥ योजनानांसहस्राणिविष्कंभोद्वादशास्यवै ॥ परिणाहेनषट्त्रिंशद्विपुलत्वेनचानघ ४१ षष्टिमाहुःशतान्यस्यबुधाःपौराणिकास्तथा ॥ चंद्रमास्तुसहस्राणिराज
न्नेकादशस्मृतः ४२ विष्कंभेणकुरुश्रेष्ठत्रयस्त्रिंशतुमंडलम् ॥ एकोनषष्टिविष्कंभंशीतरश्मेर्महात्मनः ४३ सूर्यस्त्वष्टौसहस्राणिद्वेचान्येकुरुनंदन ॥ विष्कंभेण
ततोराजन्मंडलंत्रिंशतासमम् ४४ अष्टपंचाशतंराजन्विपुलत्वेनचानघ ॥ श्रूयतेपरमोदारःपतगोऽसौविभावसुः ४५ एतत्प्रमाणमर्कस्यनिर्दिष्टमिहभारत ॥ स
राहुश्छादयत्येतौयथाकालंमहत्तया ४६ चंद्रादित्यौमहाराजसंक्षेपोऽयमुदाहृतः ॥ इत्येतत्तेमहाराजपृच्छतःशास्त्रचक्षुषा ४७ सर्वमुक्तंयथातत्त्वंतस्माच्छममवा
प्नुहि ॥ यथोद्दिष्टंमयाप्रोक्तंसनिर्माणमिदंजगत् ४८ तस्मादाश्वसकौरव्यपुत्रंदुर्योधनंप्रति ॥ श्रुत्वेदंभरतश्रेष्ठभूमिपर्वमनोनुगम् ४९ श्रीमान्भवतिराजन्यःसि
द्धार्थःसाधुसंमतः ॥ आयुर्बलंचकीर्तिश्चतस्यतेजश्चवर्धते ५० यःशृणोतिमहीपालपर्वणीदंयतव्रतः ॥ प्रीयंतेपितरस्तस्यतथैवचपितामहाः ५१ इदंतुभारतंव
र्षंयत्रवर्त्तामहेवयम् ॥ पूर्वैःप्रवर्तितंपुण्यंतत्सर्वंश्रुतवानसि ५२ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि उत्तरद्वीपादिसंस्थानवर्णनेद्वादशोऽध्यायः ॥ १२ ॥ ॥
समाप्तमिदंभूमिपर्व ॥ ॥ अथभगवद्गीतापर्व ॥ ॥ वैशंपायनउवाच ॥ अथगावल्गणिर्विद्वान्संयुगादेत्यभारत ॥ प्रत्यक्षदर्शीसर्वस्यभूतभव्यभविष्य
वित् १ ध्यायतेधृतराष्ट्रायसहसोत्पत्यदुःखितः ॥ आचष्टनिहतंभीष्मंभरतानांपितामहम् २ ॥ संजयउवाच ॥ संजयोऽहंमहाराजनमस्तेभरतर्षभ ॥ हतोभी
ष्मःशांतनवोभरतानांपितामहः ३ ककुदंसर्वयोधानांधामसर्वधनुष्मताम् ॥ शरतल्पगतःसोऽद्यशेतेकुरुपितामहः ४ यस्यवीर्यंसमाश्रित्यद्यूतंपुत्रस्तवाकरोत् ॥
सशेतेनिहतोराजन्संख्येभीष्मःशिखंडिना ५ यःसर्वान्पृथिवीपालान्समवेतान्महामृधे ॥ जिगायैकरथेनैवकाशिपुर्यांमहारथः ६ जामदग्न्यंरणेरामंयोयुध्यदपसं
भ्रमः ॥ नहतोजामदग्न्येनसहतोऽद्यशिखंडिना ७ महेन्द्रसदृशःशौर्येस्थैर्येचहिमवानिव ॥ समुद्रइवगांभीर्येसहिष्णुत्वेधरासमः ८ शरदंष्ट्रोधनुर्वक्त्रःखड्गजिह्वोदुरा
सदः ॥ नरसिंहःपितातेऽद्यपांचाल्येननिपातितः ९ पांडवानांमहासैन्यंयंदृष्ट्वोद्यतमाहवे ॥ प्रावेपतभयोद्विग्नंसिंहंदृष्ट्वेवगोगणः १० परिरक्ष्यससेनांतेदशरात्रमनी
कहा ॥ जगामास्तमिवादित्यःकृत्वाकर्मसुदुष्करम् ११ यःसशक्रइवाक्षोभ्योवर्षन्बाणान्सहस्रशः ॥ जघानयुधियोधानामर्बुदंदशभिर्दिनैः १२ सशेतेनिहतो
भूमौवातभग्नइवद्रुमः ॥ तवदुर्मंत्रितेराजन्यथानार्हःसभारत १३ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभगवद्गीतापर्वणिभीष्ममृत्युश्रवणेत्रयोदशोऽध्यायः ॥ १३ ॥

स्त्रीवृषांगेराड्ध्वजेवरे ' इतिमेदिनी । धामतेजः ४ । ५ । ६ अपसंभ्रमोनिर्भयः ७ । ८ । ९ । १० । ११ अर्बुदंकोटिदशकंलक्षंवा पूर्वमयुतस्यप्रत्यहंप्रतिज्ञानात् १२ । १३ ॥ ॥ १३ ॥
॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कथमिति १ । २ ३ । ४ । ५ । ६ । ७ । ८ अस्थत्वमंतिकेस्थित्वासर्वंदृष्टवानसीतिशेषः ९ । १० । ११ प्रचिन्वंतंपुष्पवदाददानम् १२ समचेष्टतम्रियमाणपशुवद्धस्तपादविक्षेपंकृतवत् १३ । १४

धृतराष्ट्रउवाच ॥ कथंकुरूणामृषभोहतोभीष्मःशिखंडिना ॥ कथंरथात्सन्यपतत्पितामेवासवोपमः १ कथमाचक्ष्वमेयोधाहीनाभीष्मेणसंजय ॥ बलिनादेवकल्पेन
गुर्वर्थेब्रह्मचारिणा २ तस्मिन्हतेमहाप्राज्ञेमहेष्वासेमहाबले ॥ महासत्वेनरव्याघ्रेकिमुआसीन्मनस्तव ३ आर्त्तिपरामाविशतिमनःशंससिमेहतम् ॥ कुरूणामृषभंवीर
मकंपंपुरुषर्षभम् ४ केतंयांतमनुप्राप्ताःकेवाऽस्यासन्पुरोगमाः ॥ केतिष्ठन्केन्यवर्त्तंतकेन्ववर्त्तंतसंजय ५ केशूरारथशार्दूलमच्युतंक्षत्रियर्षभम् ॥ तथाऽनीकंगाहमानं
सहसापृष्ठतोऽन्वयुः ६ यस्तमोर्कइवापोहन्परसैन्यममित्रहा ॥ सहस्ररश्मिप्रतिमःपरेषांभयमादधत् ७ अकरोद्दुष्करंकर्मरणेपांडुसुतेषुयः ॥ ग्रसमानमनीकानिय
एनंपर्यवारयन् ८ कृतिनंतंदुराधर्षंसंजयास्यत्वमंतिके ॥ कथंशांतनवंयुद्धेपांडवाःप्रत्यवारयन् ९ निकृंतंतमनीकानिशरदंष्ट्रंमनस्विनम् ॥ चापव्यात्ताननंघोरमसि
जिह्वंदुरासदम् १० अनर्हंपुरुषव्याघ्रंह्रीमंतमपराजितम् ॥ पातयामासकौन्तेयःकथंतमजितंयुधि ११ उग्रधन्वानमुग्रेषुंवर्त्तमानंरथोत्तमे ॥ परेषामुत्तमांगानिप्रचिन्वं
तमथेषुभिः १२ पांडवानांमहत्सैन्यंयंदृष्ट्वोद्यतमाहवे ॥ कालाग्निमिवदुर्धर्षंसमचेष्टतनित्यशः १३ परिकृष्यससेनांतुदशरात्रमनीकहा ॥ जगामास्तमिवादित्यःकृत्वा
कर्मसुदुष्करम् १४ यःसशक्रइवाक्षय्यवर्षंशरमयंक्षिपन् ॥ जघानयुधियोधानामर्बुदंदशभिर्दिनैः १५ सशेतेनिहतोभूमौवातभुग्नइवद्रुमः ॥ ममदुर्मंत्रितेनाजौयथानार्ह
तिभारतः १६ कथंशांतनवंदृष्ट्वापांडवानामनीकिनी ॥ प्रहर्तुमशकत्तत्रभीष्मंभीमपराक्रमम् १७ कथंभीष्मेणसंग्रामंप्राकुर्वन्पांडुनंदनाः ॥ कथंचनाजयद्भीष्मो
द्रोणेजीवतिसंजय १८ कृपेसन्निहितेतत्रभरद्वाजात्मजेतथा ॥ भीष्मःप्रहरतांश्रेष्ठःकथंसनिधनंगतः १९ कथंचातिरथस्तेनपांचाल्येनशिखंडिना ॥ भीष्मोविनि
हतोयुद्धेदेवैरपिदुरासदः २० यःस्पर्द्धतेरणेनित्यंजामदग्न्यंमहाबलम् ॥ अजितंजामदग्न्येनशक्रतुल्यपराक्रमम् २१ तंहतंसमरेभीष्मंमहारथकुलोदितम् ॥ संजयाच
क्ष्वमेवीरंयेनशर्मनविद्महे २२ मामकाःकेमहेष्वासानाजहुःसंजयाच्युतम् ॥ दुर्योधनसमादिष्टाःकेवीराःपर्यवारयन् २३ यच्छिखंडिमुखाःसर्वेपांडवाभीष्ममभ्ययुः ॥
कच्चित्तंकुरवःसर्वेनाजहुःसंजयाच्युतम् २४ अश्मसारमयंनूनंहृदयंसुदृढंमम ॥ यच्छ्रुत्वापुरुषव्याघ्रंहतंभीष्मंनदीर्यते २५ यस्मिन्सत्यंचमेधाचनीतिश्चभरतर्षभे ॥
अप्रमेयाणिदुर्धर्षेकथंसनिहतोयुधि २६ मौर्वीघोषस्तनयित्नुःपृषत्कपृषतोमहान् ॥ धनुर्ह्रादमहाशब्दोमहामेघइवोन्नतः २७ योऽभ्यवर्षतकौन्तेयान्सपांचालान्स
सृंजयान् ॥ निघ्नन्पररथान्वीरोदानवानिववज्रभृत् २८ इष्वस्त्रसागरंघोरंबाणग्राहंदुरासदम् ॥ कार्मुकोर्मिणमक्षय्यमद्वीपंचलमप्लवम् २९

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ अजहुस्त्यक्तवंतः २३ । २४ । २५ । २६ मौर्वीघोषेणस्तनयित्नुर्गर्जन्मेघइव पृषत्कपृषतोबाणबिंदुः धनुरेवह्रादरूपोमहाशब्दो
ऽशनिध्वनिरूपोयस्य २७ । २८ कार्मुकोर्मिणंचापोर्मिमंतं अद्वीपंनिराश्रयं अप्लवंतरणोपायहीनम् २९

३० । ३१ । ३१ । ३२ । ३३ अपासेधन्न्यवारयन् ३४ । ३५ । ३६ । ३७ । ३८ यःप्रजापतेर्दक्षादेःपरमेष्ठीपरमेपदेतिष्ठतीतितथाहिरण्यगर्भइवतस्मिन्नितिशेषः ३९ । ४० । ४१ । ४२

गदासिमकरावासंहयावर्त्तंगजाकुलम् ॥ पदातिमत्स्यकलिलंशंखदुंदुभिनिःस्वनम् ३० हयान्गजपदातींश्वरथांश्वतरसावहून् ॥ निमज्जयंतंसमरेपरवीरापहारिणम् ३१ विदह्यमानंकोपेनतेजसाचपरंतपम् ॥ वेलेवमकरावासंकेवीराःपर्यवारयन् ३२ भीष्मोयदकरोत्कर्मसमरेसंजयारिहा ॥ दुर्योधनहितार्थायकेतस्यास्यपुरोऽभवन् ३३ केरक्षन्दक्षिणंचक्रंभीष्मस्यामिततेजसः ॥ पृष्ठतःकेपरान्वीरानपासेधन्यतव्रताः ३४ केपुरस्तादवर्त्तंतरक्षंतोभीष्ममंतिके ॥ केऽरक्षन्नुत्तरंचक्रंवीरावीरस्ययुध्यतः ३५ वामेचक्रेवर्त्तमानाःकेऽघ्नन्संजयसृंजयान् ॥ अग्रतोऽग्र्यमनीकेषुकेऽभ्यरक्षन्दुरासदम् ३६ पार्श्वतःकेऽभ्यरक्षंतगच्छंतोदुर्गमांगतिम् ॥ समूहेकेपरान्वीरान्प्रत्ययुध्यंत संजय ३७ रक्ष्यमाणःकथंवीरैर्गोप्यमानाश्वतेनते ॥ दुर्जयानामनीकानिनाजयंस्तरसायुधि ३८ सर्वलोकेश्वरस्येवपरमेष्ठीप्रजापतेः ॥ कथंप्रहर्तुमपितेशेकुःसंजय पांडवाः ३९ यस्मिन्द्वीपेसमाश्वस्ययुध्यंतेकुरवःपरैः ॥ तंनिमग्नंनरव्याघ्रंभीष्मंशंससिसंजय ४० यस्यवीर्येसमाश्रित्यममपुत्रोबृहद्बलः ॥ नपांडवानगणयत्कथं सनिहतःपरैः ४१ यःपुराविबुधैःसर्वैःसहायेयुद्धदुर्मदः ॥ कांक्षितोदानवान्घ्नद्भिःपिताममममहाव्रतः ४२ यस्मिन्जातेमहावीर्येशांतनुर्लोकविश्रुतः ॥ शोकंदैन्यंचदुःखंचप्राजहात्पुत्रलक्ष्मणि ४३ प्रोक्तंपरायणंप्राज्ञंस्वधर्मनिरतंशुचिम् ॥ वेदवेदांगतत्त्वज्ञंकथंशंससिमेहतम् ४४ सर्वास्त्रविनयोपेतंशांतंदांतंमनस्विनम् ॥ हतंशांतनवंश्रुत्वा मन्येशेषंहतंबलम् ४५ धर्मादधर्मोबलवान्संप्राप्तइतिमेमतिः ॥ यत्रवृद्धंगुरुंहत्वाराज्यमिच्छंतिपांडवाः ४६ जामदग्न्यःपुरारामःसर्वास्त्रविदनुत्तमः ॥ अंबार्थमुद्यतःसंख्ये भीष्मेणयुधिनिर्जितः ४७ तमिंद्रसमकर्माणंककुदंसर्वधन्विनाम् ॥ हतंशंससिमेभीष्मंकिंनुदुःखमतःपरम् ४८ असकृत्क्षत्रियव्राताःसंख्येयेनविनिर्जिताः ॥ जामदग्न्येनवीरेणपरवीरनिघातिना ४९ नहतोयोमहाबुद्धिःसहतोऽद्यशिखंडिना ॥ तस्मान्नूनंमहावीर्याद्भार्गवाद्युद्धदुर्मदात् ५० तेजोवीर्यबलैर्भूयान्शिखंडीद्रुपदात्मजः ॥ यःशूरंकृतिनंयुद्धेसर्वशास्त्रविशारदम् ५१ परमास्त्रविदंवीरंजघानभरतर्षभम् ॥ केवीरास्तममित्रघ्नमन्वयुःशत्रुसंसदि ५२ शंसमेतद्यथाचासीद्युद्धंभीष्मस्यपांडवैः ॥ योषेवहतवीरामेसेनापुत्रस्यसंजय ५३ अगोपमिवचोद्भ्रांतंगोकुलंतद्बलंमम ॥ पौरुषंसर्वलोकस्यपरंयस्मिन्महाहवे ५४ परासक्तेचवस्तस्मिन्कथमासीन्मनस्तदा ॥ जीवितेऽप्यद्यसामर्थ्यंकिमिवास्मासुसंजय ५५ घातयित्वामहावीर्यंपितरंलोकधार्मिकम् ॥ अगाधेसलिलेमग्नांनावंदृष्ट्वेवपारगाः ५६ भीष्मेहतेभृशंदुःखान्मन्ये शोचंतिपुत्रकाः ॥ अद्रिसारमयंनूनंहृदयंममसंजय ५७

पुत्रलक्ष्मणिपुत्रोत्तमे । ‘लक्ष्मचिह्नेप्रधानेच’ इतिविश्वः ४३ प्रोक्तंलोकेख्यातम् ४४ सर्वास्त्रविनयोपेतंसर्वास्त्रशिक्षायुक्तं । ‘विनयातुबलायांस्त्रीशिक्षायांप्रणतौपुमान्’ इतिमेदिनी ४५ । ४६ । ४७ ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ परासक्तेपरलोकप्रिये ५५ । ५६ । ५६

५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० ॥ इति भीष्मपर्वणि नीलकंठीये भारत

यच्छ्रुत्वापुरुषव्याघ्रंहतंभीष्मंनदीर्यते । यस्मिन्नस्त्राणिमेधाचनीतिश्चपुरुषर्षभे ५८ अप्रमेयाणिदुर्धर्षेकथंसनिहतोयुधि ॥ नचास्त्रेणनशौर्येणतपसामेधयानच ५९
नधृत्यानपुनस्त्यागान्मृत्योःकश्चिद्विमुच्यते ॥ कालोनूनंमहावीर्यःसर्वलोकदुरत्ययः ६० यत्रशांतनवंभीष्मंहतंशंससिसंजय ॥ पुत्रशोकाभिसंतप्तोमहद्दुःखमचिंत
यम् ६१ आशंसेऽहंपरंत्राणंभीष्माच्छांतनुनंदनात् ॥ यदाऽऽदित्यमिवापश्यत्पतितंभुविसंजय ६२ दुर्योधनःशांतनवंकितदाप्रत्यपद्यत ॥ नाहंस्वेषांपरेषांवाबुद्ध्या
संजयचिंतयन् ६३ शेषंकिंचित्प्रपश्यामिप्रत्यनीकेमहीक्षिताम् ॥ दारुणःक्षत्रधर्मोऽयमृषिभिःसंप्रदर्शितः ६४ यत्रशांतनवंहत्वाराज्यमिच्छंतिपांडवाः ॥ वयंवारा
ज्यमिच्छामोघातयित्वामहाव्रतम् ६५ क्षत्रधर्मेस्थिताःपार्थानापराध्यंतिपुत्रकाः ॥ एतदार्येणकर्तव्यंकृच्छ्रास्वापत्सुसंजय ६६ पराक्रमःपराशक्तिस्तत्तुतस्मिन्प्रतिष्ठि
तम् ॥ अनीकानिविनिघ्नन्तंह्रीमंतमपराजितम् ६७ कथंशांतनवंतातंपांडुपुत्रान्यवारयन् ॥ यथायुक्तान्यनीकानिकथंयुद्धंमहात्मभिः ६८ कथंवानिहतोभीष्मःपि
तासंजयमेपरैः ॥ दुर्योधनश्चकर्णश्चशकुनिश्चापिसौबलः ६९ दुःशासनश्चकितवोहतेभीष्मेकिमब्रुवन् ॥ यच्छरीरैरुपास्तीर्णांनरवारणवाजिनाम् ७० शरशक्तिमहा
खड्गतोमराक्षांमहाभयाम् ॥ प्राविशन्कितवामंदाःसभांयुद्धदुरासदाम् ७१ प्राणद्यूतेप्रतिभयेकेऽदीव्यंतनरर्षभाः ॥ केजीयंतेजितास्तत्रकृतलक्ष्यानिपातिताः ७२ अ
न्येभीष्माच्छांतनवात्तन्ममाचक्ष्वसंजय ॥ नहिमेशांतिरस्तीहश्रुत्वादेवव्रतंहतम् ७३ पितरंभीमकर्माणंभीष्ममाहवशोभिनम् ॥ आर्तिर्मेहृदयेरूढांमहतींपुत्रहानि
जाम् ७४ त्वंहिमेसर्पिषेवाग्निमुद्दीपयसिसंजय ॥ महांतंभारमुद्यम्यविश्रुतंसार्वलौकिकम् ७५ दृष्ट्वाविनिहतंभीष्मंमन्येशोचंतिपुत्रकाः ॥ श्रोष्यामितानिदुःखानि
दुर्योधनकृतान्यहम् ७६ तस्मान्मेसर्वमाचक्ष्वयद्वृत्तंतत्रसंजय ॥ यद्वृत्तंतत्रसंग्रामेमंदस्याबुद्धिसंभवम् ७७ अपनीतंसुनीतंयत्तन्ममाचक्ष्वसंजय ॥ यत्कृतंतत्रसंग्रामे
भीष्मेणजयमिच्छता ७८ तेजोयुक्तंकृतास्त्रेणशंसतच्चाप्यशेषतः ॥ तथातदभवद्युद्धंकुरुपांडवसेनयोः ७९ क्रमेणयेनयस्मिंश्चकालेयच्चयथाऽभवत् ८० ॥ इतिश्रीम
हाभारते भीष्मपर्वणिभगवद्गीतापर्वणि धृतराष्ट्रप्रश्नेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ संजयउवाच ॥ त्वद्युक्तोऽयमनुप्रश्नोमहाराजयथाऽर्हसि ॥ नतुदुर्योधनेदोषमि
ममासंक्तुमर्हसि १ यआत्मनोदुश्चरितादशुभंप्राप्नुयान्नरः ॥ एनसातेननान्यंसउपाशंकितुमर्हति २ महाराजमनुष्येषुनिंद्यंयःसर्वमाचरेत् ॥ सवध्यःसर्वलोकस्यनिंदिता
निसमाचरन् ३ निकारोनिकृतिप्रज्ञैःपांडवैस्त्वत्प्रतीक्षया ॥ अनुभूतःसहामात्यैःक्षांतश्चसुचिरंवने ४ हयानांचगजानांचराज्ञांचामिततेजसाम् ॥ प्रत्यक्षंयन्मयादृष्टं
दृष्टंयोगबलेनच ५ शृणुतत्पृथिवीपालमाचशोकेमनःकृथाः ॥ दिष्टमेतत्पुरानूनमिदमेवनराधिप ६ नमस्कृत्वापितुस्तेऽहंपाराशर्यायधीमते ॥ यस्यप्रसादा
द्दिव्यंतत्प्राप्तंज्ञानमनुत्तमम् ७

भावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ त्वद्युक्तइति । आसंक्तुंआसंजयितुम् १ एनसापापेन २ । ३ । ४ । ५ । ६ । ७

८ व्युत्थितस्यउच्छास्त्रवर्तिनउत्पत्तिःकारणंतस्यविज्ञानम् ९ । १० व्यूढेषुव्यूहरचनयास्थितेषु ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ॥ इतिभीष्मपर्वणिनील

दृष्टिश्चातींद्रियाराजन्दूराच्छ्रवणमेवच ॥ परचित्तस्यविज्ञानमतीतानागतस्यच ८ व्युत्थितोत्पत्तिविज्ञानमाकाशेचगतिःशुभा ॥ अस्त्रैरसंगोयुद्धेषुवरदानान्महात्मनः
९ शृणुमेविस्तरेणेदंविचित्रंपरमाद्भुतम् ॥ भरतानामभूद्युद्धंयथातल्लोमहर्षणम् १० तेष्वनीकेषुयत्तेषुव्यूढेषुचविधानतः ॥ दुर्योधनोमहाराजदुःशासनमथाब्रवीत् ११
दुःशासनरथास्तूर्णंयुज्यंतांभीष्मरक्षिणः ॥ अनीकानिचसर्वाणिशीघ्रंत्वमनुचोदय १२ अयंसमामभिप्राप्तोवर्षपूगाभिचिंतितः ॥ पांडवानांससैन्यानांकुरूणांचसमाग
मः १३ नातःकार्यतमंमन्येरणेभीष्मस्यरक्षणात् ॥ हन्याद्गुप्तोह्यसौपार्थान्सोमकांश्चससृंजयान् १४ अब्रवीच्चविशुद्धात्मानाहंहन्यांशिखंडिनम् ॥ श्रूयतेस्त्रीह्यसौपूर्वंत
स्माद्वर्ज्योरणेमम १५ तस्माद्भीष्मोरक्षितव्योविशेषेणेतिमेमतिः ॥ शिखंडिनोवधेयत्ताःसर्वेतिष्ठंतुमामकाः १६ तथाप्राच्याःप्रतीच्याश्चदाक्षिणात्योत्तरापथाः ॥ सर्व
थाऽस्त्रेषुकुशलास्तेरक्षंतुपितामहम् १७ अरक्ष्यमाणंहिवृकोहन्यात्सिंहंमहाबलम् ॥ मासिंहंजंबुकेनेवघातयामःशिखंडिना १८ वामंचक्रंयुधामन्युरुत्तमौजाश्चदक्षि
णम् ॥ गोप्तारौफाल्गुनंप्राप्तौफाल्गुनोऽपिशिखंडिनः १९ संरक्ष्यमाणःपार्थेनभीष्मेणचविवर्जितः ॥ यथानहन्याद्गांगेयंदुःशासनतथाकुरु २० ॥ इतिश्रीम०भीष्म
पर्वणिभगवद्गीताप०दुर्योधनदुःशासनसंवादेपंचदशोऽध्यायः ॥ १५ ॥ ॥ संजयउवाच ॥ ततोरजन्यांव्युष्टायांशब्दःसमभवन्महान् ॥ क्रोशतांभूमिपालानांयुज्य
तांयुज्यतामिति १ शंखदुंदुभिघोषैश्चसिंहनादैश्चभारत ॥ हयहेषितनादैश्चरथनेमिस्वनैस्तथा २ गजानांबृंहतांचैवयोधानांचापिगर्जताम् ॥ क्ष्वेलितास्फोटितोत्क्रुष्टैस्तु
मुलंसर्वतोऽभवत् ३ उदतिष्ठन्महाराजसर्वंयुक्तमशेषतः ॥ सूर्योदयेमहत्सैन्यंकुरुपांडवसेनयोः ४ राजेंद्रतवपुत्राणांपांडवानांतथैवच ॥ दुष्प्रधृष्याणिचास्त्राणिसशस्त्र
कवचानिच ५ ततःप्रकाशेसैन्यानिसमदृश्यंतभारत ॥ त्वदीयानांपरेषांचशस्त्रवंतिमहांतिच ६ तत्रनागारथाश्चैवजांबूनदपरिष्कृताः ॥ विभ्राजमानादृश्यंतेमेघाइव
सविद्युतः ७ रथानीकान्यदृश्यंतनगराणीवभूरिशः ॥ अतीवशुशुभेतत्रपितातेपूर्णचंद्रवत् ८ धनुर्भिर्ऋष्टिभिःखड्गैर्गदाभिःशक्तितोमरैः ॥ योधाःप्रहरणैःशुभ्रैस्तेष्वनी
केष्ववस्थिताः ९ गजाःपदातारथिनस्तुरगाश्चविशांपते ॥ व्यतिष्ठन्वागुराकाराःशतशोऽथसहस्रशः १० ध्वजाबहुविधाकाराव्यदृश्यंतसमुच्छ्रिताः ॥ स्वेषांचैवप
रेषांचद्युतिमंतःसहस्रशः ११ कांचनामणिचित्रांगाज्वलंतइवपावकाः ॥ अर्चिष्मंतोव्यरोचन्तगजारोहाःसहस्रशः १२ महेन्द्रकेतवःशुभ्रामहेन्द्रसदनेष्विव ॥ सन्नद्धास्ते
प्रवीराश्चददृशुर्युद्धकांक्षिणः १३ उद्यतैरायुधैश्चित्रास्तलबद्धाःकलापिनः ॥ ऋषभाक्षामनुष्येंद्राश्चमूमुखगताबभुः १४

कंठीये भारतभावदीपेपंचदशोऽध्यायः ॥ १५ ॥ ॥ ॥ ॥ ततइति १ । २ । ३ युक्तंसन्नद्धं अशेषतः सर्वप्रकारैः ४ । ५ ६ । ७ । ८ । ९ वागुराकाराः परेषांबंधनार्थमित्य
र्थः १० । ११ । १२ । १३ तलबद्धाःतलंज्याघातत्राणंबद्धंयैस्ते कलापिनःतूणवंतः १४

१५ । १६ । १७ । १८ बद्धकृष्णाजिनाइति युद्धेमरणदीक्षांकृतवंतइत्यर्थः १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ तथाविधःसंमर्दइतिशेषः २७ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभाव
दीपेषोडशोऽध्यायः ॥ १६ ॥ ॥ यथासइति १ मघाविषयगःसोमस्तद्दिनंप्रत्यपद्यतेति । मघापित्र्यंनक्षत्रंतस्यविषयोदेशःपितृलोकस्तद्गतःसोमः कुरुपांडवयुद्धारंभदिनमुक्तंभारतसावित्र्यां । 'हेमंते
प्रथमेमासिशुक्लपक्षेत्रयोदशीं प्रवृत्तंभारतंयुद्धंनक्षत्रेयमदैवते' । प्रथमेमार्गशीर्षे अत्रत्रयोदशीशब्देनतद्युक्ताचतुर्दश्येवग्राह्या । अर्जुनेनहतोभीष्मोमाघमासेऽसिताष्टमी' इति ' त्रयोदश्यांतुमध्याह्नेभारद्वाजो
निपातितः'इति तत्रैवयुद्धस्यदशमेपंचदशेचाह्निहतयोर्भीष्मद्रोणयोरष्टमीत्रयोदशीसंयोगदर्शनात् अत्रपौषेऽपिमाघशब्दोमकरायनाभिप्रायेण तदानींतत्संभवात् असिताष्टमीतिच्छेदःअन्यथासप्तमीद्वादश्योरेवत
योर्हननंप्राप्नोति यत्तुअमावास्यायांदुर्योधनहननंतत्रैवोक्तं तत्राप्यमावास्याशब्दइष्टिदिनेप्रतिपद्येवप्रयुक्तोवेदितव्यः । यमदैवतेतिभरणीनग्राह्या किंतुयुग्मदैवतंमृगशीर्षमेवग्राह्यं तस्यहिपूर्वदलंशुक्रदेवत्यत्वादासुरं

शकुनिःसौबलःशल्यआवंत्योऽथजयद्रथः ॥ विंदानुविंदौकैकेयाःकांबोजश्चसुदक्षिणः १५ श्रुतायुधश्चकालिंगोजयत्सेनश्चपार्थिवः ॥ बृहद्बलश्चकौशल्यःकृतवर्माच
सात्वतः १६ दशैतेपुरुषव्याघ्राःशूराःपरिघबाहवः ॥ अक्षौहिणीनांपतयोयज्वानोभूरिदक्षिणाः १७ एतेचान्येचबहवोदुर्योधनवशानुगाः ॥ राजानोराजपुत्राश्चनी
तिमंतोमहारथाः १८ सन्नद्धाःसमदृश्यंतस्वेष्वनीकेष्ववस्थिताः ॥ बद्धकृष्णाजिनाःसर्वेबलिनोयुद्धशालिनः १९ हृष्टादुर्योधनस्यार्थेब्रह्मलोकायदीक्षिताः ॥ सम
र्थादशवाहिन्यःपरिगृह्यव्यवस्थिताः २० एकादशीधार्त्तराष्ट्रीकौरवाणांमहाचमूः ॥ अग्रतःसर्वसैन्यानांयत्रशांतनवोऽग्रणीः २१ श्वेतोष्णीषंश्वेतहयंश्वेतवर्माणम
च्युतम् ॥ अपश्याममहाराजभीष्मंचंद्रमिवोदितम् २२ हेमतालध्वजंभीष्मंराजतेस्यंदनेस्थितम् ॥ श्वेताभ्रइवतीक्ष्णांशुंददृशुःकुरुपांडवाः २३ सृंजयाश्चमहेष्वासा
धृष्टद्युम्नपुरोगमाः ॥ जृंभमाणंमहासिंहंदृष्ट्वाक्षुद्रमृगायथा २४ धृष्टद्युम्नमुखाःसर्वेसमुद्विविजिरेमुहुः ॥ एकादशैताःश्रीजुष्टावाहिन्यस्तवपार्थिव २५ पांडवानांतथास
प्तमहापुरुषपालिताः ॥ उन्मत्तमकरावर्तौमहाग्राहसमाकुलौ २६ युगांतेसमवेतौद्वौदृश्येतेसागराविव ॥ नैवनस्तादृशोराजन्दृष्टपूर्वोनचश्रुतः ॥ अनीकानांसमे
तानांकौरवाणांतथाविधः २७ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभगवद्गीताप० सैन्यवर्णनेषोडशोऽध्यायः ॥ १६ ॥ संजयउवाच ॥ यथासभगवान्व्यासःकृष्णद्वै
पायनोऽब्रवीत् ॥ तथैवसहिताःसर्वेसमाजग्मुर्महीक्षितः १ मघाविषयगःसोमस्तद्दिनंप्रत्यपद्यत ॥ दीप्यमानाश्चसंपेतुर्दिविसप्तमहाग्रहाः २

उत्तरार्द्धंबुधदैवत्यत्वादैवं तेनतत्रासुराणामुपरमोदेवानामभ्युदयश्चसिद्ध्यति किंच । 'चत्वारिंशदहान्यद्यद्वेचमेनिःसृतस्यवै । पुष्येणसंप्रयातोऽस्मिश्रवणेपुनरागतः'इतियुद्धारंभादष्टादशेऽह्नितीर्थयात्रातआग
तस्यबलदेवस्यवचनात्श्रवणेयुद्धसमाप्तिर्दृश्यते ततःप्राचीनेऽष्टादशर्क्षेमृगशीर्षएवयुद्धारंभःसंभवति । नत्वेकविंशेभरण्यां अष्टादशदिनमध्येनक्षत्रत्रयक्षयस्यकल्पयितुमयुक्तत्वात् । कार्त्तिकीकृत्तिकायो
गानुपातेनचतुर्दश्यांमृगस्यैवसंभावनाच्च एतेनयुद्धारंभंप्रकृत्यमघाविषयगःसोमस्तद्दिनंप्रत्यपद्यतेतिभीष्मपर्वणिसंजयवाक्यान्मघायांयुद्धारंभइत्यपिनिरस्तं बलदेववाक्यविरुद्धत्वात् शब्दार्थस्तुमघापदे
नतत्सहचराःपितरोलक्ष्यंते तेनयुद्धेमृतानामुत्तमदेहप्रदानार्थंचंद्रस्तदापितृलोकेसन्निहितोऽभूदितिस्वर्गिणांदिव्यदेहलाभश्चंद्राधीनइतिशास्त्रप्रसिद्धेः । तथाद्वादश्यांरात्रियुद्धेचंद्रोदयकालेत्रिभागमात्रशे
षायांरात्रौयुद्धमवर्त्ततेत्युक्तं तत्रत्रिभागेत्यस्यत्रिमुहूर्त्तशेषायामित्यर्थः । तथा ' अष्टपंचाशतंरात्र्यःशयानस्याद्यमेगताः ' इतिभीष्मवचनंतु मायोऽयंसमनुप्राप्तः त्रिभागमात्रःपक्षोऽयमितिवाक्यशेषानुसाराव-

—अशतंशतहीनंयथास्यात्तथा अष्टपंच अष्टपंचाशद्रात्रयोव्यतीताइतिव्याख्येयंविलोमशोधनात् अष्टपंचाशद् नंशवंरात्रयोद्वाचत्वारिंशद्रात्रयोव्यतीताइत्यर्थः तथाचपौष कृष्णाष्टमीतोमाघशुक्लपंचम्यांतावतीदिनसंख्या पूर्यते पक्षस्यचतृतीयोभागोगतोभवति तत्राप्येकतिथिक्षयात् पंचम्याःद्विचत्वारिंशत्तमत्वंज्ञेयं शेषोभवितुमर्हतीत्यत्रकार्यशेषोदेहत्यागादिरेवशेषोनतुपक्षशेषइतिव्याख्याज्ञेया तत्रायंनिष्कर्षः कार्त्तिकशुक्लद्वादश्यां रेवत्यांकृष्णप्रयाणंततोमार्गशीर्षकृष्णपंचम्यांपुष्येसेनयोर्निर्याणं ततःपंचम्याउपरिषष्ठीमारभ्यसप्तदिनानिगणयित्वातदुपर्यष्टमेऽह्नि अमावास्याभविष्यतीत्यनेन त्रयोदशदिनात्मकोऽयंकृष्णपक्षोमहोत्पातजनक इतिसूचितं क्षीणयोश्चतिथ्योःपक्षांतरेपुनर्वृद्ध्यासंख्यापूरणंभवतीतिमार्गशीर्षकृष्णपंचमीमारभ्यपौषशुक्लप्रतिपद्द्विचत्वारिंशीतिथिर्भवतीतिबलदेववाक्योक्तादिनसंख्यानक्षत्रसंख्याचानुगृहीताभवति । यत्तु

द्विधाभूतइवादित्यउदयेप्रत्यदृश्यत ॥ ज्वलंत्याशिखयाभूयोभानुमानुदितोरविः ३ ववाशिरेचदीप्तायांदिशिगोमायुवायसाः ॥ लिप्समानाःशरीराणिमांसशोणित भोजनाः ४ अहन्यहनिपार्थानांवृद्धःकुरुपितामहः ॥ भरद्वाजात्मजश्चैवप्रातरुत्थायसंयतौ ५ जयोस्तुपांडुपुत्राणामित्यूचतुररिंदमौ ॥ युयुधातेतवार्थायथासस मयःकृतः ६ सर्वधर्मविशेषज्ञःपितादेवव्रतस्तव ॥ समानीयमहीपालानिदंवचनमब्रवीत् ७ इदंवःक्षत्रियाद्वारंस्वर्गायापावृतंमहत् ॥ गच्छध्वंतेनशक्रस्यब्रह्मणः सहलोकताम् ८ एषवःशाश्वतःपंथाःपूर्वैःपूर्वतरैःकृतः ॥ संभावयध्वमात्मानमव्यग्रमनसोयुधि ९ नाभागोऽथययातिश्चमांधातानहुषोनृगः ॥ संसिद्धाःपरमंस्था नंगताःकर्मभिरीदृशैः १० अधर्मःक्षत्रियस्यैषयद्व्याधिमरणंगृहे ॥ यदयोनिधनंयातिसोऽस्यधर्मःसनातनः ११ एवमुक्तामहीपालाभीष्मेणभरतर्षभ ॥ निर्ययुः स्वान्यनीकानिशोभयंतोरथोत्तमैः १२ सतुवैकर्त्तनःकर्णःसामात्यःसहबंधुभिः ॥ न्यासितःसमरेशस्त्रंभीष्मेणभरतर्षभ १३ अपेतकर्णाःपुत्रास्तेराजानश्चैवतावकाः॥ निर्ययुःसिंहनादेननादयंतोदिशोदश १४ श्वेतैश्छत्रैःपताकाभिर्ध्वजवारणवाजिभिः ॥ तान्यनीकानिशोभंतेगजैरथपदातिभिः १५ भेरीपणवशब्दैश्चदुंदुभीनांच निःस्वनैः ॥ रथनेमिनिनादैश्चबभूवाकुलितामही १६ कांचनांगदकेयूरैःकार्मुकैश्चमहारथाः ॥ भ्राजमानाव्यराजंतसाग्नयःपर्वताइव १७ तालेनमहताभीष्मःपं चतारेणकेतुना ॥ विमलादित्यसंकाशस्तस्थौकुरुचमूपरि १८ येत्वदीयामहेष्वासाराजानोभरतर्षभ ॥ अवर्त्तंतयथादेशंराजन्शांतनवस्यते १९ सतुगोवासनः शैब्यःसहितःसर्वराजभिः ॥ ययौमातंगराजेनराजार्हेणपताकिना ॥ पद्मवर्णस्त्वनीकानांसर्वेषामग्रतःस्थितः २० अश्वत्थामाययौयत्तःसिंहलांगूलकेतुना ॥ श्रुतायुधश्चित्रसेनःपुरुमित्रोविविंशतिः २१ शल्योभूरिश्रवाश्चैवविकर्णश्चमहारथः ॥ एतेसप्तमहेष्वासाद्रोणपुत्रपुरोगमाः २२ स्यंदनैर्वरवर्माणोभीष्मस्यास न्पुरोगमाः ॥ तेषामपिमहोत्सेधाःशोभयंतोरथोत्तमान् २३

'सप्तमाच्चापिदिवसादमावास्याभविष्यति । संग्रामंयोजयेत्तत्रतांह्याहुःशक्रदैवतां। मयाध्वंवैकुरुक्षेत्रंपुष्योद्येतिपुनःपुनः'इतिदुर्योधनवाक्यं तत्रसंग्राममित्यनेनसंग्रामेजयसाधनं धाराबंधादिकंतस्यांयोजयेदित्यु क्तं । शक्रदैवतामित्यनेनतस्यांज्येष्ठानक्षत्रयोगउच्यते सचतिथिद्वयक्षयात्तत्रासंभवन्नपितत्रतिथिवदेवनक्षत्रक्षयाद्वातिथिनक्षत्रयोराद्यंतयोगाद्वाज्ञेयं इतिसर्वसमंजसं महाग्रहाःराहुकेत्वोरुपग्रहत्वात्सप्तैव २ । ३ ववाशिरेशब्दंकृतवंतः ४ । ५ । ६ । ७ । ८ । ९ । १० अयोनिधनंअयसाशस्त्रेणमरणम् ११ । १२ । १३ । १४ । १५ । १६ । १७ तालेनध्वजभूतेन ,१८ । १९ गोवासनःतद्देश्यः २० । २१ । २२ । २३

२४ । २५ । २६ । २७ अंगपतिनाकर्णपुत्रेणवृषकेतुना २८ वराहेणकेतुमुख्येनेतिसंबंधः २९ । ३० । ३१ । ३२ । ३३ निष्केणकंठाभरणेन ३४ । ३५ । ३६ । ३७ । ३८ । ३९

भ्राजमानाव्यरोचंतजांबूनदमयाध्वजाः ॥ जांबूनदमयीवेदीकमंडलुविभूषिता २४ केतुराचार्यमुख्यस्यद्रोणस्यधनुषासह ॥ अनेकशतसाहस्रमनीकमनुक
र्षतः २५ महान्दुर्योधनस्यासीन्नागोमणिमयोध्वजः ॥ तस्यपौरवकालिंगकांबोजाःससुदक्षिणाः २६ क्षेमधन्वाचशल्यश्चतस्थुःप्रमुखतोरथाः ॥ स्यंदने
नमहार्हेणकेतुनावृषभेणच ॥ प्रकर्षन्नेवसेनाग्रंमागधस्यकृपोययौ २७ तदंगपतिनागुप्तंकृपेणचमनस्विना ॥ शारदांबुधरप्रख्यंप्राच्यानांसुमहद्बलम् २८
अनीकप्रमुखेतिष्ठन्वराहेणमहायशाः ॥ शुशुभेकेतुमुख्येनराजतेनजयद्रथः २९ शतंरथसहस्राणांतस्यासन्वशवर्त्तिनः ॥ अष्टौनागसहस्राणिसादिनामयुतानिषट्
३० तत्सिंधुपतिनाराज्ञापालितंध्वजिनीमुखम् ॥ अनंतरथनागाश्वमशोभतमहद्बलम् ३१ षष्ट्यारथसहस्रैस्तुनागानामयुतेनच ॥ पतिःसर्वकालिंगानांययौकेतुमता
सह ३२ तस्यपर्वतसंकाशाव्यरोचंतमहागजाः ॥ यंत्रतोमरतूणीरैःपताकाभिःसुशोभिताः ३३ शुशुभेकेतुमुख्येनपावकेनकलिंगकः ॥ श्वेतच्छत्रेणनिष्केण
चामरव्यजनेनच ३४ केतुमानपिमातंगंविचित्रपरमांकुशम् ॥ आस्थितःसमरेराजन्मेघस्थइवभानुमान् ३५ तेजसादीप्यमानस्तुवारणोत्तममास्थितः ॥ भग
दत्तोययौराजायथावज्रधरस्तथा ३६ गजस्कंधगतावास्तांभगदत्तेनसंमितौ ॥ विंदानुविंदावावंत्यौकेतुमंतमनुव्रतौ ३७ सरथानीकवान्व्यूहोहस्त्यंगोनृपशीर्षवान् ॥
वाजिपक्षःपतत्युग्रःप्रहसन्सर्वतोमुखः ३८ द्रोणेनविहितोराजन्राज्ञाशांतनवेनच ॥ तथैवाचार्यपुत्रेणबाल्हीकेनकृपेणच ३९ ॥ इतिश्रीमहाभारतेभीष्मपर्व
णिभगवद्गीताप० सैन्यवर्णनेसप्तदशोऽध्यायः ॥ १७ ॥ संजयउवाच ॥ ततोमुहूर्त्तात्तुमुलःशब्दोहृदयकंपनः ॥ अश्रूयतमहाराजयोधानांप्रयुयुत्सताम् १
शंखदुंदुभिघोषैश्चवारणानांचबृंहितैः ॥ नेमिघोषैरथानांचदीर्यतीववसुंधरा २ हयानांहेषमाणानांयोधानांचैवगर्जताम् ॥ क्षणेनैवनभोभूमिःशब्देनापूरितंतदा ३
पुत्राणातवदुर्धर्षपांडवानांतथैवच ॥ समकंपंतसैन्यानिपरस्परसमागमे ४ तत्रनागारथाश्चैवजांबूनदविभूषिताः ॥ भ्राजमानाव्यदृश्यंतमेघाइवसविद्युतः ५
ध्वजाबहुविधाकारास्तावकानांनराधिप ॥ कांचनांगदिनोरेजुर्ज्वलिताइवपावकाः ६ स्वेषांचैवपरेषांचसमदृश्यंतभारत ॥ महेन्द्रकेतवःशुभ्रामहेन्द्रसदनेष्विव
७ कांचनैःकवचैर्वीराज्वलनार्कसमप्रभैः ॥ सन्नद्धाःसमदृश्यंतज्वलनार्कसमप्रभाः ८ कुरुयोधवराराजन्विचित्रायुधकार्मुकाः ॥ उद्यतैरायुधैश्चित्रैस्तलबद्धाःप
ताकिनः ९ ऋषभाक्षामहेष्वासाश्चमूमुखगताबभुः ॥ पृष्ठगोपास्तुभीष्मस्यपुत्रास्तवनराधिप ॥ दुःशासनोदुर्विषहोदुर्मुखोदुःसहस्तथा १० विविंशतिश्चित्र
सेनोविकर्णश्चमहारथः ॥ सत्यव्रतःपुरुमित्रोजयोभूरिश्रवाःशलः ११ रथाविंशतिसाहस्रास्तथैषामनुयायिनः ॥ अभीषाहाःशूरसेनाःशिबयोऽथवसातयः १२

॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ शतानामयुतानिषट् षट्शतान्ययुतगुणानिषष्टिलक्षाणीतियावत् १६ । १७ । १८ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेअष्टमोऽध्यायः ॥ १८ ॥ अक्षौहिण्यइति १ । २ । ३

शाल्वामत्स्यास्तथांबष्ठास्त्रैगर्त्ताःकेकयास्तथा ॥ सौवीराःकैतवाःप्राच्याःप्रतीच्योदीच्यवासिनः १३ द्वादशैतेजनपदाःसर्वेशूरास्तनुत्यजः ॥ महतारथवंशेन
तेररक्षुःपितामहम् १४ अनीकंदशसाहस्रंकुंजराणांतरस्विनाम् ॥ मागधोयत्रनृपतिस्तद्रथानीकमन्वयात् १५ रथानांचक्ररक्षाश्चपादरक्षाश्चदंतिनाम् ॥ अभ
वन्वाहिनीमध्येशतानामयुतानिषट् १६ पादाताश्चाग्रतोऽगच्छन्धनुश्चर्मासिपाणयः ॥ अनेकशतसाहस्रानखरप्रासयोधिनः १७ अक्षौहिण्योदशैकाचतवपु
त्रस्यभारत ॥ अदृश्यंतमहाराजगंगेवयमुनांतरा १८ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभगवद्गीतापर्वणि सैन्यवर्णनेअष्टादशोऽध्यायः ॥ १८ ॥
॥ धृतराष्ट्रउवाच ॥ अक्षौहिण्योदशैकाचव्यूढादृष्ट्वायुधिष्ठिरः ॥ कथमल्पेनसैन्येनप्रत्यव्यूहतपांडवः १ योवेदमानुषंव्यूहंदैवंगांधर्वमासुरम् ॥ कथंभीष्मंस
कौन्तेयःप्रत्यव्यूहतसंजय २ ॥ संजयउवाच ॥ धार्तराष्ट्राण्यनीकानिदृष्ट्वाव्यूढानिपांडवः ॥ अभ्यभाषतधर्मात्माधर्मराजोधनंजयम् ३ महर्षेर्वचनात्तातवेद
यंतिबृहस्पतेः ॥ संहतान्योधयेदल्पान्कामंविस्तारयेद्बहून् ४ सूचीमुखमनीकंस्यादल्पानांबहुभिःसह ॥ अस्माकंचतथासैन्यमल्पीयःसुतरांपरैः ५ एतद्व
चनमाज्ञायमहर्षेर्व्यूहपांडव ॥ एतच्छ्रुत्वाधर्मराजंप्रत्यभाषतपांडवः ६ एषव्यूहामितेव्यूहंराजसत्तमदुर्जयम् ॥ अचलंनामवज्राख्यंविहितंवज्रपाणिना ७ यःस
वातइवोद्धूतःसमरेदुःसहःपरैः ॥ सनःपुरोयोत्स्यतेवैभीमःप्रहरतांवरः ८ तेजांसिरिपुसैन्यानांमृद्नन्पुरुषसत्तमः ॥ अग्रेऽग्रणीर्योत्स्यतिनोयुद्धोपायविचक्षणः ९
यंदृष्ट्वाकुरवःसर्वेदुर्योधनपुरोगमाः ॥ निवर्तिष्यंतिसंत्रस्ताःसिंहंक्षुद्रमृगायथा १० तंसर्वेसंश्रयिष्यामःप्राकारमकुतोभयाः ॥ भीमंप्रहरतांश्रेष्ठंदेवराजमिवामराः
११ नहिसोऽस्तिपुमाँल्लोकेयःसंक्रुद्धंवृकोदरम् ॥ द्रष्टुमत्युग्रकर्माणंविषहेतनरर्षभम् १२ एवमुक्त्वामहाबाहुस्तथाचक्रेधनंजयः ॥ व्यूह्यतानिबलान्याशुप्रय
यौफाल्गुनस्तथा १३ संप्रयातान्कुरून्दृष्ट्वापांडवानांमहाचमूः ॥ गंगेवपूर्णास्तिमितास्पंदमानाव्यदृश्यत १४ भीमसेनोऽग्रणीस्तेषांधृष्टद्युम्नश्चवीर्यवान् ॥
नकुलःसहदेवश्चधृष्टकेतुश्चपार्थिवः १५ विराटश्चततःपश्चाद्राजाऽथाक्षौहिणीवृतः ॥ भ्रातृभिःसहपुत्रैश्चसोऽभ्यरक्षतपृष्ठतः १६ चक्ररक्षौतुभीमस्यमाद्रीपुत्रौम
हाद्युती ॥ द्रौपदेयाःससौभद्राःपृष्ठगोपास्तरस्विनः १७ धृष्टद्युम्नश्चपांचाल्यस्तेषांगोप्तामहारथः ॥ सहितःपृतनाशूरैरथमुख्यैःप्रभद्रकैः १८ शिखंडीतुततः
पश्चादर्जुनेनाभिरक्षितः ॥ यत्तोभीष्मविनाशायप्रययौभरतर्षभ १९ पृष्ठतोऽप्यर्जुनस्यासीद्युयुधानोमहाबलः ॥ चक्ररक्षौतुपांचाल्यौयुधामन्यूत्तमौजसौ २०
कैकेयोधृष्टकेतुश्चचेकितानश्चवीर्यवान् ॥ भीमसेनोगदांबिभ्रद्वज्रसारमयींदृढाम् ॥ चरन्वेगेनमहतासमुद्रमपिशोषयेत् २१ एतेतिष्ठंतिसामात्याःप्रेक्षंतस्तेजना
धिप ॥ धृतराष्ट्रस्यदायादाइतिबीभत्सुरब्रवीत् २२ भीमसेनंतदाराजन्दर्शयस्वमहाबलम् ॥ ब्रुवाणंतुतथापार्थंसर्वसैन्यानिभारत २३

संहतानिति । अल्पैःसंहत्यैवयोद्धव्यंबहुभिस्तुविशकलितैरपियोद्धुंशक्यमित्यर्थः ४ । ५ व्यूहव्यूहंकुरु ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ स्पंदमानाकिंचिच्चलंती १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ धृतराष्ट्रस्यदायादाइत्यनेनतवैवैतेभागइतिसूचयति । २२ । २३

२४ । २५ । २६ । २७ । २८ । २९ वारणाराजानमन्वयुरितिसंबंधः अचलाःनिष्कंपाः ३० जीमूताःपर्वताः 'जीमूतोऽद्रौ' इतिमेदिनी ३१ । ३२ । ३३ । ३४ । ३५ प्रावात्प्रववौ सपृषतःसार्द्रबिं
दुः ३६ वाताःरूक्षावायवः ३७ आहत्यआस्फाल्य ३८ । ३९ । ४० । ४१ । ४२ । ४३ मज्जानइति । नोऽस्माकंयोधानांमज्जाःधातुविशेषान्ग्रसंतइवेतियोज्यं ४४ भीमसेनंदृष्ट्वाव्यवस्थिता

अपूजयंस्तदावाग्भिरनुकूलाभिराहवे ॥ राजातुमध्यमानीकेकुंतीपुत्रोयुधिष्ठिरः २४ बृहद्भिःकुंजरैर्मत्तैश्चलद्भिरचलैरिव ॥ अक्षौहिण्याऽथपांचाल्योयज्ञसेनोमहामनाः ॥
विराटमन्वयात्पश्चात्पांडवार्थेपराक्रमी २५ तेषामादित्यचंद्राभाःकनकोत्तमभूषणाः ॥ नानाचित्रधराराजत्रथेष्वासन्महाध्वजाः २६ समुत्सार्यततःपश्चाद्धृष्टद्युम्नोमहा
रथः ॥ भ्रातृभिःसहपुत्रैश्चसोऽभ्यरक्षद्युधिष्ठिरम् २७ त्वदीयानांपरेषांचरथेषुविपुलान्ध्वजान् ॥ अभिभूयार्जुनस्यैकोरथेतस्थौमहाकपिः २८ पदातास्त्वग्रतोऽगच्छ
न्नसिशक्त्यृष्टिपाणयः ॥ अनेकशतसाहस्राभीमसेनस्यरक्षिणः २९ वारणादशसाहस्राःप्रभिन्नकरटामुखाः ॥ शूराहेममयैर्जालैर्दीप्यमानाइवाचलाः ३० क्षरंतइवजी
मूताममहार्हाःपद्मगंधिनः ॥ राजानमन्वयुःपश्चाज्जीमूताइववार्षिकाः ३१ भीमसेनोगदांभीमांप्रकर्षन्परिघोपमाम् ॥ प्रचकर्षमहासैन्यंदुराधर्षोमहामनाः ३२ तमर्क
मिवदुष्प्रेक्ष्यंतपंतमिववाहिनीम् ॥ नशेकुःसर्वयोधास्तेप्रतिवीक्षितुमंतिके ३३ वज्रोनामैषसव्यूहोनिर्भयःसर्वतोमुखः ॥ चापविद्युद्ध्वजोघोरोगुप्तोगांडीवधन्वना ३४ यंप्र
तिव्यूह्यतिष्ठंतिपांडवास्तववाहिनीम् ॥ अजेयोमानुषेलोकेपांडवैरभिरक्षितः ३५ संध्यांतिष्ठत्सुसैन्येषुसूर्यस्योदयनंप्रति ॥ प्रावात्सपृषतोवायुर्निरभ्रेस्तनयित्नुमान् ३६
विष्वग्वाताश्चविववुर्नीचैःशर्करकर्षिणः ॥ रजश्चोद्धूयतमहत्तमआच्छादयज्जगत् ३७ पपातमहतीचोल्काप्राङ्मुखीभरतर्षभ ॥ उद्यंतंसूर्यमाहत्यव्यशीर्यतमहास्वना
३८ अथसंनह्यमानेषुसैन्येषुभरतर्षभ ॥ निष्प्रभोऽभ्युदयौसूर्यःसघोषंभूश्चचालच ३९ व्यशीर्यतसनादाचभूस्तदाभरतर्षभ ॥ निर्घाताबहवोराजन्दिक्षुसर्वासुचाभवन्
४० प्रादुरासीद्रजस्तीव्रंनप्राज्ञायतकिंचन ॥ ध्वजानांधूयमानानांसहसामातरिश्वना ४१ किंकिणीजालबद्धानांकांचनस्रग्वरांबरैः ॥ महतांसपताकानामादित्यसमते
जसाम् ४२ सर्वंझणझणीभूतमासीत्तालवनेष्विव ॥ एवंतेपुरुषव्याघ्राःपांडवायुद्धनंदिनः ४३ व्यवस्थिताःप्रतिव्यूह्यतवपुत्रस्यवाहिनीम् ॥ ग्रसंतइवमज्जानोयोधानां
भरतर्षभ ४४ दृष्ट्वाऽग्रतोभीमसेनंगदापाणिमवस्थितम् ४५ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भगव० पांडवसैन्यव्यूहेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ धृतराष्ट्र
उवाच ॥ सूर्योदयेसंजयकेनुपूर्वंयुयुत्सवोहृष्यमाणाइवासन् ॥ मामकावाभीष्मनेत्राःसमीपेपांडवावाभीमनेत्रास्तदानीम् १ केषांजघन्यौसोमसूर्यौसवायूकेषांसे
नांश्वापदाश्चाभषंत ॥ केषांयूनांमुखवर्णाःप्रसन्नाःसर्वमेतत्वंब्रूहिमेवंयथावत् २ ॥ संजयउवाच ॥ उभेसेनेतुल्यमित्रोपयातेउभेव्यूहेहृष्टरूपेनरेन्द्र ॥ उभेचित्रेवनराजिप्रका
शेतथैवोभेनागरथाश्वपूर्णे ३

इतिसंबंधः ४५ ॥ इतिभीष्मपर्वणि नीलकंठीयेभारतभावदीपे एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ भीष्मोनेतानिर्वोढायेषांतेभीष्मनेत्राः १ मेवंपुष्कलंयथास्यात्तथाब्रूहि । मेवमितिमीवतेःपुष्ट्यर्थस्यघञिबाहु
लकादुपधाह्रस्वेततोगुणेरूपं । गौडास्त्विहपाठांतरंकल्पयंति सर्वमेतद्ब्रूहिमेत्वंयथावदिति २ व्यूहेस्वेस्वेइतिशेषः ३

४ । ५ । ६ । ७ । ८ । ९ । १० भूमींद्रइवपर्वतइवअप्रकंप्यइत्यर्थः ११ । १२ । १३ । १४ येनयत्रतेनतत्र १५ । १६ । १७ । १८ । १९ अनंतरूपाबह्वीत्वदीया नतुपांडवानांसेनाबह्वी

उभेसेनेबृहत्यौभीमरूपेतथैवोभेभारतदुर्विषह्ये ॥ तथैवोभेस्वर्गजयायसृष्टेतथैवोभेसत्पुरुषोपजुष्टे ४ पश्चान्मुखाःकुरवोधार्त्तराष्ट्राःस्थिताःपार्थाःप्राङ्मुखायोत्स्य
मानाः ॥ दैत्येन्द्रसेनेवचकौरवाणांदेवेन्द्रसेनेवचपांडवानाम् ५ चक्रेवायुःपृष्ठतःपांडवानांधार्त्तराष्ट्रान्श्वापदाव्याहरंत ॥ गजेन्द्राणांमदगंधांश्चतीव्रान्नसेहिरेतवपुत्रस्य
नागाः ६ दुर्योधनोहस्तिनंपद्मवर्णंसुवर्णकक्षंजालवंतंप्रभिन्नम् ॥ समास्थितोमध्यगतःकुरूणांसंस्तूयमानोबंदिभिर्मागधैश्च ७ चंद्रप्रभंश्वेतमथातपत्रंसौवर्णस्र
ग्भ्राजतिचोत्तमांगे ॥ तंसर्वतःशकुनिःपार्वतीयैःसार्द्धंगांधारैर्यातिगांधारराजः ८ भीष्मोऽग्रतःसर्वसैन्यस्यवृद्धःश्वेतच्छत्रःश्वेतधनुःसखड्गः ॥ श्वेतोष्णीषःपांडुरेण
ध्वजेनश्वेतैरश्वैःश्वेतशैलप्रकाशैः ९ तस्यसैन्येधार्त्तराष्ट्राश्चसर्वेबाल्हीकानामेकदेशःशलश्च ॥ येचांबष्ठाःक्षत्रियायेचसिंधोस्तथासौवीराःपंचनदाश्चशूराः १० शोणैर्ह
यैरुक्मरथोमहात्माद्रोणोधनुष्पाणिरदीनसत्वः ॥ आस्तेगुरुःप्रायशःसर्वराज्ञांपश्चाच्चभूमींद्रइवाभियाति ११ वार्द्धक्षत्रिःसर्वसैन्यस्यमध्येभूरिश्रवाःपुरुमित्रोजयश्च ॥
शाल्वामत्स्याःकेकयाश्चेतिसर्वेगजानीकैर्भ्रातरोयोत्स्यमानाः १२ शारद्वतश्चोत्तरधूर्महात्मामहेष्वासोगौतमश्चित्रयोधी ॥ शकैःकिरातैर्यवनैःपल्हवैश्चसार्धंचमू
मुत्तरतोऽभियाति १३ महारथैर्वृष्णिभोजैःसुगुप्तंसुराष्ट्रकैर्विहितैरात्तशस्त्रैः ॥ बृहद्बलंकृतवर्माभिगुप्तंबलंत्वदीयंदक्षिणेनाभियाति १४ संशप्तकानामयुतंरथानांमृ
त्युर्जयोवाऽर्जुनस्येतिसृष्टाः ॥ येनार्जुनस्तेनराजन्कृतास्त्राःप्रयातारस्तेत्रिगर्ताश्चशूराः १५ साग्रंशतसहस्रंतुनागानांतवभारत ॥ नागेनागेरथशतंशतमश्वारथे
रथे १६ अश्वेऽश्वेदशधानुष्काधानुष्केशतचर्मिणः ॥ एवंव्यूढान्यनीकानिभीष्मेणतवभारत १७ संव्यूह्यमानुषंव्यूहंदैवंगांधर्वमासुरम् ॥ दिवसेदिवसेप्राप्तेभीष्मः
शांतनवोग्रणीः १८ महारथौघविपुलःसमुद्रइवघोषवान् ॥ भीष्मेणधार्त्तराष्ट्राणांव्यूहःप्रत्यङ्मुखोयुधि १९ अनंतरूपाध्वजिनीनरेंद्रभीमात्वदीयानतुपांडवा
नाम् ॥ तांचैवमन्येबृहतींदुष्प्रधर्षायस्यानेताकेशवश्चार्जुनश्च २० ॥ इतिश्री० भी० भ० सैन्यवर्णनेविंशोऽध्यायः ॥ २० ॥ ॥ ॥ ॥ संजय
उवाच ॥ बृहतींधार्त्तराष्ट्रस्यसेनांदृष्ट्वासमुद्यताम् ॥ विषादमगमद्राजाकुंतीपुत्रोयुधिष्ठिरः १ व्यूहंभीष्मेणचाभेद्यंकल्पितंप्रेक्ष्यपांडवः ॥ अभेद्यमिवसंप्रेक्ष्यविव
र्णोऽर्जुनमब्रवीत् २ धनंजयकथंशक्यमस्माभिर्योद्धुमाहवे ॥ धार्त्तराष्ट्रैर्महाबाहोयेषांयोद्धापितामहः ३ अक्षोभ्योऽयमभेद्यश्चभीष्मेणामित्रकर्षिणा ॥ कल्पि
तःशास्त्रदृष्टेनविधिनाभूरिवर्चसा ४ तेवयंसंशयंप्राप्ताःससैन्याःशत्रुकर्षण ॥ कथमस्मान्महाव्यूहादुत्थानंनोभविष्यति ५ अथार्जुनोऽब्रवीत्पार्थंयुधिष्ठिरममि
त्रहा ॥ विषण्णमिवसंप्रेक्ष्यतवराजन्ननीकिनीम् ६ प्रज्ञयाऽभ्यधिकान्शूरान्गुणयुक्तान्बहूनपि ॥ जयंत्यल्पतरायेनतन्निबोधविशांपते ७ तत्रतेकारणंराजन्प्रव
क्ष्याम्यनसूयवे ॥ नारदस्तमृषिर्वेदभीष्मद्रोणौचपांडव ८

तथापितांबृहतीमेवमन्येइतिसंबंधः २० ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपे विंशोऽध्यायः ॥ २० ॥ ॥ बृहतीमिति १ । २ । ३ । ४ उत्थानंजयः ५ । ६ । ७ । ८

९ । १० । ११ । १२ गुणभूतोदासभूतः १३ । १४ अकुंठसायकः अप्रतिहतायुधः १५ । १६ । १७ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेएकविंशोऽध्यायः ॥ २१ ॥ ॥ ॥

एनमेवार्थमाश्रित्ययुद्धेदेवासुरेऽब्रवीत् ॥ पितामहःकिलपुरामहेन्द्रादीन्दिवौकसः ९ नतथाबलवीर्याभ्यांजयंतिविजिगीषवः ॥ यथासत्यानृशंस्याभ्यांधर्मेणै वोद्यमेनच १० ज्ञात्वाधर्ममधर्मंचलोभंचोत्तममास्थिताः ॥ युद्ध्यध्वमनहंकारायतोधर्मस्ततोजयः ११ एवंराजन्विजानीहिध्रुवोऽस्माकंरणेजयः ॥ यथातुनारदः प्राहयतःकृष्णस्ततोजयः १२ गुणभूतोजयःकृष्णेपृष्ठतोऽभ्येतिमाधवम् ॥ तद्यथाविजयश्चास्यसन्नतिश्चापरोगुणः १३ अनंततेजागोविंदःशत्रुपूगेषुनिर्व्यथः ॥ पुरुषःसनातनमयोयतःकृष्णस्ततोजयः १४ पुराह्येषहरिर्भूत्वाविकुंठोऽकुंठसायकः ॥ सुरासुरानवस्फूर्जन्नब्रवीत्केजयंत्विति १५ कथंकृष्णजयेमेतियैरुक्तंतत्रतैर्जितम् ॥ तत्प्रसादाद्धित्रैलोक्यंप्राप्तंशक्रादिभिःसुरैः १६ तस्यतेनव्यथांकांचिदिहपश्यामिभारत ॥ यस्यतेजयमाशास्तेविश्वभुक्त्रिदिवेश्वरः १७ ॥ ॥ इतिश्रीमहा भारतेभीष्मपर्वणिभवद्गीताप० युधिष्ठिरार्जुनसंवादेएकविंशोऽध्यायः ॥ २१ ॥ ॥ ६ ॥ ॥ संजयउवाच ॥ ततोयुधिष्ठिरोराजास्वांसेनां समनोदयत् ॥ प्रतिव्यूहन्ननीकानिभीष्मस्यभरतर्षभ १ यथोद्दिष्टान्यनीकानिप्रत्यव्यूहंतपांडवाः ॥ स्वर्गंपरममिच्छंतःसुयुद्धेनकुरूद्वहाः २ मध्येशि खंडिनोऽनीकंरक्षितंसव्यसाचिना ॥ धृष्टद्युम्नश्चरन्नग्रेभीमसेनेनपालितः ३ अनीकंदक्षिणंराजन्युयुधानेनपालितम् ॥ श्रीमतासात्वताग्र्येणशक्रेणेवधनुष्मता ४ महेंद्रयानप्रतिमंरथंतुसोपस्करंहाटकरत्नचित्रम् ॥ युधिष्ठिरःकांचनभांडयोक्त्रंसमास्थितोनागपुरस्यमध्ये ५ समुच्छ्रितंदंतशलाकमस्यसुपांडुरंछत्रमतीवभा ति ॥ प्रदक्षिणंचैनमुपाचरंतमहर्षयःसंस्तुतिभिर्महेन्द्रम् ६ पुरोहिताःशत्रुवधंवदंतोब्रह्मर्षिसिद्धाःश्रुतवंतएनम् ॥ जप्यैश्चमंत्रैश्चमहौषधीभिःसमंततःस्वस्त्य यनंब्रुवंतः ७ ततःसवस्त्राणितथैवगाश्चफलानिपुष्पाणितथैवनिष्कान् ॥ कुरूत्तमोब्राह्मणसान्महात्माकुर्वन्ययौशक्रइवामरेशः ८ सहस्रसूर्यःशतकिंकिणीकः परार्द्ध्यजांबूनदहेमचित्रः ॥ रथोऽर्जुनस्याग्निरिवार्चिमालीविभ्राजतेश्वेतहयःसुचक्रः ९ तमास्थितःकेशवसंग्रहीतंकपिध्वजोगांडिवबाणपाणिः ॥ धनुर्धरोयस्य समःपृथिव्यांनविद्यतेनोभविताकदाचित् १० उद्धर्तयिष्यंस्तवपुत्रसेनामतीवरौद्रंसबिभर्तिरूपम् ॥ अनायुधोयःसुभुजोभुजाभ्यांनराश्वनागान्युधिभस्मकु र्यात् ११ सभीमसेनःसहितोयमाभ्यांवृकोदरोवीररथस्यगोप्ता ॥ तंतत्रसिंहर्षभमत्तखेलंलोकेमहेन्द्रप्रतिमानकल्पम् १२ समीक्ष्यसेनाग्रगतंदुरासदंसंविव्यथुः पंकगतायथाद्विपाः ॥ वृकोदरंवारणराजदर्पंयोधास्त्वदीयाभयविग्नसत्वाः १३ अनीकमध्येतिष्ठंतंराजपुत्रंदुरासदम् ॥ अब्रवीद्भरतश्रेष्ठंगुडाकेशंजनार्दनः १४ वासुदेवउवाच ॥ यएषरोषात्प्रतपन्बलस्थोयोनःसेनांसिंहइवेक्षतेच ॥ सएषभीष्मःकुरुवंशकेतुर्येनाहृतास्त्रिशतंवाजिमेधाः १५

ततइति १ । २ । ३ । ४ पुरस्यमध्येस्थितंइदानीमानीतमितिभावः ५ । ६ । ७ । ८ सहस्रंसूर्यतुल्यान्यादर्शचक्राणियस्मिन्ससहस्रसूर्यः ९ । १० । ११ । १२ । १३ । १४ पाठांतरे योनः सेनांयोभीष्मोनोऽस्मभ्यंअस्मत्तःसेनांस्वांआररक्ष अभेद्यव्यूहरचनयारक्षितवान् १५

गूहंतिपरिवारयंति । भरतर्षभेणभीष्मेण १६ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ॥ इदानींस्त्रस्यदिव्यंज्ञानमस्तीतिदर्शयन्संजयउवाच धार्त्त राष्ट्रबलमिति । हितार्थायहितश्चासावर्थश्चहितार्थोजयस्तदर्थं १ दुर्गायाःअसुरविहंतृत्वेनप्रसिद्धायाःस्तोत्रंउदीरय असुरांशानांशत्रूणांपराजयाय २ संख्येसंग्रामे ३ हेसिद्धसेनानि सिद्धानांयोगिनां सेनासमुदायस्तस्यनेत्री परमपदप्रापिकायोगसिद्धिकरीत्यर्थः । आर्ये ऋगतौअस्मात्ऋहलोर्ण्यत् प्राप्यब्रह्मस्वरूपेइत्यर्थः । मंदरेमंदरत्रेनवसतीतितथा कुमारिअविप्लुतब्रह्मचर्ये जरादिहीनेइतिवा । कालिकालशक्ते । कापालि कपालस्यायंपतिःकापालोरुद्रस्तत्पत्नि । कपिल.कृष्णपिंगलश्चवर्णविशेषौतद्वति ४ भद्रंकल्याणंकालयतिभक्तान्प्रत्यानयतिसाभद्रकाली । महतीचासौकाली चकालयित्रीसंहर्त्रीकालरूपामहाकाली । चंडिचंडस्यकालांतकस्यभार्ये । चंडेप्रगल्भे । तारिणिसंकटोत्तरणकर्त्रि । वरवर्णिनीसर्वसौभाग्यलक्षणोपेतास्त्रीतद्रूपे ५ कात्यायनिकतगोत्रोद्भवे । महाभागेअ

एतान्यनीकानिमहानुभावंगूहंतिमेघाइवरश्मिमंतम् ॥ एतानिहत्वापुरुषप्रवीरकांक्षस्वयुद्धंभरतर्षभेण १६ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभगवद्गी० श्रीकृष्णार्जुनसंवादेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ संजयउवाच ॥ धार्त्तराष्ट्रबलंदृष्ट्वायुद्धायसमुपस्थितम् ॥ अर्जुनस्यहितार्थायकृष्णोवचनमब्रवीत् १ ॥ श्रीभगवानुवाच ॥ शुचिर्भूत्वामहाबाहोसंग्रामाभिमुखेस्थितः ॥ पराजयायशत्रूणांदुर्गास्तोत्रमुदीरय २ ॥ संजयउवाच ॥ एवमुक्तोऽर्जुनःसंख्येवासुदेवेनधीमता ॥ अवतीर्यरथात्पार्थःस्तोत्रमाहकृतांजलिः ३ ॥ अर्जुनउवाच ॥ नमस्तेसिद्धसेनानिआर्येमंदरवासिनि ॥ कुमारिकालिकापालिकपिलेकृष्णपिंगले ४ भद्रकालिनमस्तुभ्यंमहाकालिनमोऽस्तुते ॥ चंडिचंडेनमस्तुभ्यंतारिणिवरवर्णिनि ५ कात्यायनिमहाभागेकरालिविजयेजये ॥ शिखिपिच्छध्वजधरेनानाभरणभूषिते ६ अट्टशूलप्रहरणेखङ्गखेटकधारिणि ॥ गोपेन्द्रस्यानुजेज्येष्ठेनंदगोपकुलोद्भवे ७ महिषासृक्प्रियेनित्यंकौशिकिपीतवासिनि ॥ अट्टहासेकोकमुखेनमस्तेऽस्तुरणप्रिये ८ उमेशाकंभरिश्वेतेकृष्णेकैटभनाशिनि ॥ हिरण्याक्षिविरूपाक्षिसुधूम्राक्षिनमोऽस्तुते ९ वेदश्रुतिमहापुण्येब्रह्मण्येजातवेदसि ॥ जंबूकटकचैत्येषुनित्यंसन्निहितालये १० त्वंब्रह्मविद्याविद्यानांमहानिद्राचदेहिनाम् ॥ स्कंदमातर्भगवतिदुर्गेकांतारवासिनि ११ स्वाहाकारःस्वधाचैवकलाकाष्ठासरस्वती ॥ सावित्रिवेदमाताचतथावेदांतउच्यते १२ स्तुताऽसित्वंमहादेविविशुद्धेनांतरात्मना ॥ जयोभवतुमेनित्यंत्वत्प्रसादाद्रणाजिरे १३ कांतारभयदुर्गेषुभक्तानांचालयेषुच ॥ नित्यंवससिपातालेयुद्धेजयसिदानवान् १४

तिपूज्ये । करालिक्रूरे । विजयेविशिष्टोजयोययासा जयप्रदेइत्यर्थः । विजयेजयस्वरूपे ६ अट्टंअत्युत्कटंशूलंतदेवप्रहरणमायुधंयस्याः । खेटकंचर्म ७ कौशिकिकुशिककुलोत्पन्ने । अट्टहासेप्रशस्तस्मिते । कोकंचक्रवत्वृत्तंवारक्तबीजवधेऽसुरादानशीलंवामुखंयस्याःसाकोकमुखा ८ श्वेतेमहेश्वररूपे । कृष्णेवासुदेवरूपे । हिरण्याक्षिपीतनेत्रे । विरूपाक्षिविविधरूपयुक्तनेत्रेमनुष्यादौ । सुधूम्राक्षिमार्जाराद्यौ । एतेनसार्वात्म्यमुक्तंभवति ९ ब्रह्मण्येयज्ञकर्मविप्रादिपुसाध्वीब्रह्मण्या । जातवेदसिअतीतज्ञेअतीतैर्ज्ञातेवा । जंबूकटकेषुजंबूद्वीपराजधानीषु चैत्येषुदेवतालयेषु नित्यंसन्निहितआलयःस्थानं यस्याःसातथा १० महानिद्राब्रह्मविद्याफलभूतामुक्तिः । स्कंदमातरितिसर्वदेवतारूपत्वोपलक्षणं ११ स्वाहेतिसर्वकर्मरूपत्वं । कलेतिसर्वस्थूलसूक्ष्मकालरूपत्वं । सावित्रीतिसर्ववाङ्मयरूपत्वंचउच्यते १२ रणाजिरेयुद्धांगने १३ । १४

जंभनीतंद्रा । मोहिनीनिद्रा । मायाअद्भुतप्रदर्शनं । ह्रीर्लज्जाख्याचेतोवृत्तिः एतच्चकामादिवृत्तीनामप्युपलक्षणं । श्रीर्लक्ष्मीः विद्यातपोधनादिसमृद्धिरूपा । संध्यासंधौआदावंतेचभवासंध्या सृष्टिप्रलयकर्त्रीत्यर्थः । प्रभावतीचंद्रसूर्यप्रभायुक्ताऽहोरात्ररूपा । सावित्रीसवितुःसूर्यस्यसंबंधिनीप्रभाप्रकाशनशक्तिस्तद्रूपा । जननीमातृवत्पालयित्री १५ तुष्टिःसंतोषः । पुष्टिरुपचयः । धृतिर्धैर्यम् । दीप्तिर्ज्योतिः । ययाकांत्याचं द्रादित्यौवर्धेतेअसंतंकांतिमंतौभवतः वक्ष्यतिच । 'यदादित्यगतंतेजोजगद्भासयतेऽखिलं । यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकम्' इति । 'येनसूर्यस्तपतितेजसेद्धः' इतिश्रुतिश्च । परंचिन्मात्रंब्रह्मैवेत्यर्थः । भूतिःऐश्वर्यं भूतिमतांमहेश्वरादीनां । 'एषाऽस्यपरमासंपत्' इतिश्रुतेर्ब्रह्मरूपैव । संख्येसम्यक्ख्यानंप्रकाशनंयत्रतस्मिन्नात्मानात्मविवेकरूपेसमाधौसिद्धैर्जीवन्मुक्तैश्चारणैराजानसिद्धैश्चवीक्ष्यसेऽनुभूयसेप्रत्य गात्मत्वेन तदेवमाकारविशेषोपहितंब्रह्माभिध्यातंसत्सर्वामोक्षादर्वाचीनाराज्यविजयादिसिद्धीःप्रयच्छतीतिप्रदर्शितं तदेववक्ष्यतिभगवान् । 'येऽप्यन्यदेवताभक्तायजंतेश्रद्धयान्विताः । तेऽपिमामेवकौन्तेययजं

त्वंजंभनीमोहिनीचमायाह्रीःश्रीस्तथैवच ॥ संध्याप्रभावतीचैवसावित्रीजननीतथा १५ तुष्टिःपुष्टिर्धृतिर्दीप्तिश्चंद्रादित्यविवर्धिनी ॥ भूतिर्भूतिमतांसंख्येवीक्ष्यसेसिद्ध
चारणैः ॥ १६ ॥ संजयउवाच ॥ ततःपार्थस्यविज्ञायभक्तिंमानववत्सला ॥ अंतरिक्षगतोवाचगोविंदस्याग्रतःस्थिता ॥ १७ ॥ देव्युवाच ॥ स्वल्पेनैवतुकालेनश
त्रून्जेष्यसिपांडव ॥ नरस्त्वमसिदुर्धर्षनारायणसहायवान् ॥ १८ ॥ अजेयस्त्वंरणेऽरीणामपिवज्रभृतःस्वयम् ॥ इत्येवमुक्त्वावरदाक्षणेनांतरधीयत ॥ १९ ॥ लब्ध्वा
वरंतुकौन्तेयोमेनेविजयमात्मनः ॥ आरुरोहततःपार्थोरथंपरमसंमतम् ॥ २० ॥ कृष्णार्जुनावेकरथौदिव्यौशंखौप्रदध्मतुः ॥ यइदंपठतेस्तोत्रंकल्यउत्थायमानवः
२१ ॥ यक्षरक्षःपिशाचेभ्योनभयंविद्यतेसदा ॥ नचापिरिपवस्तेभ्यःसर्पाद्यायेचदंष्ट्रिणः ॥ २२ ॥ नभयंविद्यतेतस्यसदाराजकुलादपि ॥ विवादेजयमाप्नोतिबद्धोमु
च्यतिबंधनात् ॥ २३ ॥ दुर्गंतरतिचावश्यंतथाचोरैर्विमुच्यते ॥ संग्रामेविजयेन्नित्यंलक्ष्मींप्राप्नोतिकेवलाम् ॥ २४ ॥ आरोग्यबलसंपन्नोजीवेद्वर्षशतंतथा ॥ एतद्दृष्टंप्र
सादात्तुमयाव्यासस्यधीमतः ॥ २५ ॥ मोहादेतौनजानंतिनरनारायणावृषी ॥ तवपुत्रादुरात्मानःसर्वेमन्युवशानुगाः ॥ २६ ॥ प्राप्तकालमिदंवाक्यंकालपाशेनगुं
ठिताः ॥ द्वैपायनोनारदश्चकण्वोरामस्तथाऽनघः ॥ अवारयंस्तवसुतंनचासौतद्गृहीतवान् ॥ २७ ॥

स्यविधिपूर्वकं । लभंतेचततःकामान्मयैवविहितान्हितान्' इतिच । तथामहतीविमोक्षाख्यासिद्धिरपिसर्वाकारानुपहितब्रह्मज्ञानादेवभवतीतिप्रतिपादनायगीताशास्त्रमारीप्समानेनतत्रविश्वासोत्पत्त्यर्थंसद्यःप्रत्य यकरंदेवीस्तोत्रंकुर्वितिनियुक्तोऽर्जुनोदेवींप्रत्यक्षतोदृष्ट्वाजातप्रत्ययोगीतास्वपिश्रद्धांबध्नीयादित्याशयवताभगवताएतदुक्तमितिप्रघट्टकार्थः । एवमेववेदेऽपिकारीर्यादीनांसद्योवृष्ट्यादिफलानांकर्मणांविधानमदृ ष्टार्थेषुकर्मसुश्रद्धोत्पादनार्थमेवेतिनिर्णीतंपूर्वाचार्यैः १६ ततःपार्थस्येति । अंतरिक्षगतेत्यैश्वर्यप्रदर्शनार्थंविशेषणं १७ नरस्त्वमित्यर्जुनायपूर्वंनरनारायणात्मकंरूपंस्मारयति तेनचतत्स्मृत्यैवसर्वभयनिवृत्तिर्भवति तद्विस्मरणादेवतुपराजयभयमित्यपिदर्शितं । एवमयंगीताशास्त्रस्यवक्ष्यमाणस्योपोद्घातोदर्शितः १८ । १९ कथामनुसंधत्तेलब्ध्वेत्यादिना २० एतत्स्तोत्रपाठफलमाह यइदमिति । कल्येप्रभाते २१ तेभ्योनभयमिति पूर्वेणसंबंधः २२ । २३ । २४ । २५ । २६ । २७

यत्रेति । धर्मफलंद्युतिप्रभृतयः तर्हिमत्पक्षेऽपिधर्मोऽस्त्येवेतिमन्वानंप्रत्याह यत्रधर्मस्तत्रकृष्णः त्वत्पक्षेकृष्णाभावाद्धर्मोऽपिनास्ति तत्फलभूताद्युत्यादयोऽपिनसंतीत्यर्थः । फलितमाह यतःकृष्णस्ततोजयइति २८
॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेत्रयोविंशोऽध्यायः ॥ २३ ॥ केषामित्यध्यायःस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ । ७ ॥ इतिश्रीमत्पदवाक्यप्रमाणज्ञमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगो
विंदसूरिसूनोः श्रीनीलकंठस्यकृतौभारतभावदीपे भीष्मपर्वणि जंबूखंडनिर्माणकात्यायनीस्तवांतग्रंथार्थप्रकाशे चतुर्विंशोऽध्यायः ॥ २४ ॥ ओंनमोब्रह्मादिभ्योब्रह्मविद्यासंप्रदायकर्तृभ्योवंशऋषिभ्योनमो
गुरुभ्यः । प्रणम्यभगवत्पादान्श्रीधरादींश्चसद्गुरून् ॥ संप्रदायानुसारेणगीताव्याख्यांसमारभे ॥ १ ॥ भारतेसर्ववेदार्थोभारतार्थश्चकृत्स्नशः ॥ गीतायामस्तितेनेयंसर्वशास्त्रमयीमता ॥ २ ॥ कर्मोपास्तिज्ञानभेदैः
शास्त्रंकांडत्रयात्मकं ॥ अन्येतूपासनाकांडात्तृतीयोनातिरिच्यते ॥ ३ ॥ तदेवब्रह्मविद्धित्वंनेदंयत्तदुपासते ॥ इतिश्रुत्यैववेद्यस्यह्युपास्यादन्यतेरिता ॥ ४ ॥ इयमष्टादशाध्यायीक्रमात्षट्कत्रिकेणहि ॥ कर्मोपा

यत्रधर्मोद्युतिःकांतिर्यत्रह्रीःश्रीस्तथामतिः ॥ यतोधर्मस्ततःकृष्णोयतःकृष्णस्ततोजयः २८ ॥ इति श्रीम० भीष्मपर्वणिभगवद्गी० दुर्गास्तोत्रेत्रयोविंशोऽध्यायः ॥ २३ ॥
धृतराष्ट्रउवाच ॥ केषांप्रहृष्टास्तत्राग्रेयोधायुध्यंतिसंजय ॥ उदग्रमनसःकेवाकेवादीनाविचेतसः ॥ १ ॥ केपूर्वंप्राहरंस्तत्रयुद्धेहृदयकंपने ॥ मामकाःपांडवेयावातन्ममा
चक्ष्वसंजय ॥ २ ॥ कस्यसेनासमुदयेगंधमाल्यसमुद्भवः ॥ वाचःप्रदक्षिणाश्चैवयोधानामभिगर्जताम् ॥ ३ ॥ संजयउवाच ॥ उभयोःसेनयोस्तत्रयोधाजहृषिरेतदा ॥
स्रजःसमाःसुगंधानामुभयत्रसमुद्भवः ४ संहतानामनीकानांव्यूढानांभरतर्षभ ॥ संसर्गात्समुदीर्णानांविमर्दःसुमहानभूत् ॥ ५ ॥ वादित्रशब्दस्तुमुलःशंखभेरीविमि
श्रितः ॥ शूराणांरणशूराणांगर्जतामितरेतरम् ॥ ६ ॥ उभयोःसेनयोराजन्महान्व्यतिकरोऽभवत् ॥ अन्योन्यंवीक्ष्यमाणानांयोधानांभरतर्षभ ॥ कुंजराणांचनदतां
सैन्यानांचप्रहृष्यताम् ॥ ७ ॥ इ० म० भी० प० भगवद्गीताप० धृतराष्ट्रसंजयसंवादेचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ धृतराष्ट्रउवाच ॥ धर्मक्षेत्रेकुरुक्षेत्रेसमवेतायुयु
त्सवः ॥ मामकाःपांडवाश्चैवकिमकुर्वतसंजय ॥ १ ॥ संजयउवाच ॥ दृष्ट्वातुपांडवानीकंव्यूढंदुर्योधनस्तदा ॥ आचार्यमुपसंगम्यराजावचनमब्रवीत् ॥ २ ॥ पश्यै
तांपांडुपुत्राणामाचार्यमहतींचमूम् ॥ व्यूढांद्रुपदपुत्रेणतवशिष्येणधीमता ॥ ३ ॥ अत्रशूरामहेष्वासाभीमार्जुनसमायुधि ॥ युयुधानोविराटश्चद्रुपदश्चमहारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानःकाशिराजश्चवीर्यवान् ॥ पुरुजित्कुंतिभोजश्चशैब्यश्चनरपुंगवः ॥ ५ ॥

स्तिज्ञानकांडत्रितयात्मानिगद्यते ॥ ५ ॥ तत्रयुद्धोद्यमंश्रुत्वौत्सुक्यादग्रिमंवृत्तांतंबुभुत्सुःधृतराष्ट्रउवाच धर्मक्षेत्रइति । तत्रवेदे 'तेषांकुरुक्षेत्रंदेवयजनमास' इतिकर्मकांडप्रसिद्धंकुरुक्षेत्रमन्यत् । 'अविमुक्तंवैकुरुक्षेत्रंदे
वानांदेवयजनंसर्वेषांभूतानांब्रह्मसदनम्' इत्यविमुक्ताख्यंब्रह्मप्राप्तिस्थानभूतंकुरुक्षेत्रमन्यत् । ब्रह्मसदनत्वंचास्यात्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतीतिवाक्यशेषे
णव्युत्पादितं एतद्व्यावृत्त्यर्थंधर्मक्षेत्रेइतिविशेषणं । कुरुदेशांतरगतंहिकुरुक्षेत्रंधर्मक्षेत्रमेवनतुतद्ब्रह्मसदनं प्रवर्ग्यकांडेतस्यधर्मक्षेत्रत्वमात्रश्रवणात् । तत्रसमवेताःमिलिताः युयुत्सवोयोद्धुमिच्छवः । पांडवानांपृथग्ग्रहणंस्व
धुमभत्वाभावसूचनार्थम् १ व्यूढंव्यूहरचनयास्थितं आचार्यंद्रोणंराजादुर्योधनः राजाऽब्रवीदित्येवसिद्धेवचनपदेनसंक्षिप्तबह्वर्थत्वादिगुणवत्त्वंवाक्यस्यसूच्यते २ द्रुपदपुत्रेणेति । पूर्ववैरसूचनेनक्रोधोद्दीपनार्थं
विशेषणम् ३ महेष्वासामहांतइष्वासाःधनूंषियेषांते युयुधानःसात्यकिः द्रुपदश्चमहारथइत्येकः ४ धृष्टकेत्वादयःषट् ५

युधामन्यूत्तमौजसौ सौभद्रोऽभिमन्युः पंचद्रौपदेयाःप्रतिविंध्यादयश्चेत्यष्टौ चकारात्पांडवाघटोत्कचादयश्चातिप्रसिद्धाग्राह्याः सर्वेऽपिमहारथाएव तल्लक्षणंतु 'एकादशसहस्राणियोधयेद्यस्तुधन्विनां ॥ शस्त्र
शास्त्रप्रवीणश्चसवैप्रोक्तोमहारथः ॥ अमितान्योधयेद्यस्तुसंप्रोक्तोऽतिरथस्तुसः ॥ रथस्त्वेकेनयोद्धास्यात्तन्न्यूनोर्धरथःस्मृतः'इति ६ विशिष्टाःश्रेष्ठाः निबोधबुध्यस्व । भौवादिकस्यपरस्मैपदिनोबुधेरिदंरूपं संज्ञार्थं
अस्मत्पक्षेपिशूराःसंतीतिज्ञापनार्थं । परेषुप्राबल्यंदृष्ट्वातवोत्साहभंगोमाभूदित्यर्थः ७ विकर्णःस्वभ्राता सौमदत्तिर्भूरिश्रवाः । जयद्रथपदस्थाने तथैवचेतिक्वचित्पाठः ८ अन्येशल्यकृतवर्मप्रभृतयः । शस्त्राणिविदार
काणिखड्गादीनि प्रहरणानिकेवलंप्रहारार्थानिगदादीनिनानाविधानियेषांतेनानाशस्त्रप्रहरणाः ९ पर्याप्तंपरितआप्तंपरिवेष्टितं पांडवसैन्यंहिसप्ताक्षौहिणीमितत्वादल्पंबहुनैकादशाक्षौहिणीमितेनास्मत्सैन्येनवेष्टयितुं
शक्यं नतुतदीयेनास्मदीयमित्यर्थः एवंचपर्याप्तमित्यस्यपारणीयमित्यर्थः १० अयनेषु व्यूहरचनयास्थितेसैन्येप्रवेशमार्गेषु स्वेस्वेस्थानेस्थितायूयंमध्यस्थंभीष्ममेवाभिरक्षंतु । अस्यसेनापतेश्चांचल्येसर्वाऽपिसेना

युधामन्युश्चविक्रांतउत्तमौजाश्चवीर्यवान् ॥ सौभद्रोद्रौपदेयाश्चसर्वएवमहारथाः ६ अस्माकंतुविशिष्टायेतान्निबोधद्विजोत्तम ॥ नायकाममसैन्यस्यसंज्ञार्थंतान्ब्र
वीमिते ७ भवान्भीष्मश्चकर्णश्चकृपश्चसमितिंजयः ॥ अश्वत्थामाविकर्णश्चसौमदत्तिर्जयद्रथः ८ अन्येचबहवःशूरामदर्थेत्यक्तजीविताः ॥ नानाशस्त्रप्रहरणाःसर्वे
युद्धविशारदाः ९ अपर्याप्तंतदस्माकंबलंभीष्माभिरक्षितम् ॥ पर्याप्तंत्विदमेतेषांबलंभीमाभिरक्षितम् १० अयनेषुचसर्वेषुयथाभागमवस्थिताः ॥ भीष्ममेवाभिरक्षं
तुभवंतःसर्वएवहि ११ तस्यसंजनयन्हर्षंकुरुवृद्धःपितामहः ॥ सिंहनादंविनद्योच्चैःशंखंदध्मौप्रतापवान् १२ ततःशंखाश्चभेर्यश्चपणवानकगोमुखाः ॥ सहसैवाभ्य
हन्यन्तसशब्दस्तुमुलोऽभवत् १३ ततःश्वेतैर्हयैर्युक्तेमहतिस्यंदनेस्थितौ ॥ माधवःपांडवश्चैवदिव्यौशंखौप्रदध्मतुः १४ पांचजन्यंहृषीकेशोदेवदत्तंधनंजयः ॥ पौण्ड्रंद
ध्मौमहाशंखंभीमकर्मावृकोदरः १५ अनंतविजयंराजाकुंतीपुत्रोयुधिष्ठिरः ॥ नकुलःसहदेवश्चसुघोषमणिपुष्पकौ १६ काश्यश्चपरमेष्वासःशिखंडीचमहारथः ॥
धृष्टद्युम्नोविराटश्चसात्यकिश्चापराजितः १७ द्रुपदोद्रौपदेयाश्चसर्वशःपृथिवीपते ॥ सौभद्रश्चमहाबाहुःशंखान्दध्मुःपृथक्पृथक् १८ सघोषोधार्त्तराष्ट्राणांहृदया
निव्यदारयत् ॥ नभश्चपृथिवींचैवतुमुलोव्यनुनादयन् १९ अथव्यवस्थितान्दृष्ट्वाधार्तराष्ट्रान्कपिध्वजः ॥ प्रवृत्तेशस्त्रसंपातेधनुरुद्यम्यपांडवः २० हृषीकेशंतदा
वाक्यमिदमाहमहीपते ॥ अर्जुनउवाच ॥ सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युत २१ यावदेतान्निरीक्षेऽहंयोद्धुकामानवस्थितान् ॥ कैर्मयासहयोद्धव्यमस्मिन्रण
समुद्यमे २२ योत्स्यमानानवेक्षेऽहंयएतेऽत्रसमागताः ॥ धार्त्तराष्ट्रस्यदुर्बुद्धेर्युद्धेप्रियचिकीर्षवः २३ ॥ ॥

आकुलीभवेत् तत्स्थैर्येस्थिराचभवेदतःसएवरक्ष्यइत्यर्थः ११ तस्यैवंवदतोदुर्योधनस्य संजयवाक्यमिदं सिंहनादमितिणमुलंतं तेनविनद्येत्यस्यानुप्रयोगःकषादित्वात् समूलकाषंकषतिस्मदैत्यानित्या
दिवत् । कुरुवृद्धोभीष्मः प्राग्विराटनगरादौदृष्टप्रभावान्पांडवान्दृष्ट्वाराज्ञोभयंमाभूदितिशंखंदध्मौ हर्षंयुद्धोत्साहंजनयन् हेत्वर्थेशतृप्रत्ययः हर्षजननार्थमित्यर्थः १२ अभ्यहन्यंतअभिहताः कर्मकर्तरिप्र
योगः १३ । १४ । १५ । १६ । १७ । १८ । १९ व्यवस्थितान् भयोद्विग्नतयावैषम्येणावस्थितान् कपिध्वजपांडवपदाभ्यांभीषणध्वजत्वंशौर्यंचप्रदृश्यते २० हृषीकेशंसर्वेषामिंद्रियाणांप्र
वर्तकत्वेनपरचित्ताभिज्ञं । वाक्यमेवाहनतुकंचिदर्थमितिद्योतनार्थंवाक्यपदं वाक्यमेवाह सेनयोरिति२१ रथस्थापनप्रयोजनमाह यावदिति । कैःसहमयायोद्धव्यंमयासहवाकैर्योद्धव्यमित्युभयत्रसहशब्दसंबंधः ।
केवामांजेतुंयतंतेमयावाकेजेतव्याइत्यालोचनार्थमित्यर्थः २२ योत्स्यमानान् नतुशांतिकामान् यतोदुर्बुद्धेःप्रियंचिकीर्षन्ति तेनतेषामपितत्तुल्यत्वंसूचितम् २३

यस्माद्नंतैश्वर्योभगवांस्तदनुगृहीतोऽर्जुनश्चयुधिष्ठिरपक्षेऽस्तिअतस्त्वयाजयाशानकार्येत्याह यत्रेति। यत्रपक्षेध्रुवेतिसर्वत्रसंबध्यते श्रीर्दिव्यसभादिशोभा । विजयःप्रसिद्धः भूतिरैश्वर्यंसर्वनियंतृत्वम्
। नीतिर्नयश्चएतत्सर्वंतत्रतस्मिन्पक्षेध्रुवमितिममप्रतिः अतःपांडवैःसहसंधिरेवकर्तव्यइतिभावः ७८ ॥ इतिश्रीमत्पदवाक्यप्रमाणज्ञमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोःश्रीनीलकंठसूरिवर्य
स्यकृतौभारतभावदीपे भीष्मपर्वणिगीतार्थप्रकाशेअष्टादशोऽध्यायः ॥ १८ ॥ पर्वाणितु० ॥ ४२ ॥ गीतासुगीताकर्तव्याइत्यादयःसार्धाःपंचश्लोकागौडैर्नपठ्यंते १ । २ । ३ । ४
५ एवंगीतांतेमन्मनाभवेत्यादिनानिष्कामानामात्मनिष्ठानांभविष्यसीत्यात्मप्राप्तिश्चतत्फलभूतादर्शिता । सकामानांत्वर्थार्थीनांकामसिद्धिः । अर्थश्चसतामपिपांडवानामिवगुरुवधानृताद्याश्रयेणैवसिद्धय

यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ७८ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रे
श्रीकृष्णार्जुनसंवादेसंन्यासयोगोनामअष्टादशोऽध्यायः ॥ १८ ॥ पर्वणितुद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ समाप्तंभगवद्गीतापर्व ॥ अथभीष्मवधपर्व ॥ वैशं
पायनउवाच ॥ गीतासुगीताकर्त्तव्याकिमन्यैःशास्त्रसंग्रहैः ॥ यास्वयंपद्मनाभस्यमुखपद्माद्विनिःसृता १ सर्वशास्त्रमयीगीतासर्वदेवमयोहरिः ॥ सर्वतीर्थमयीगं
गासर्ववेदमयोमनुः २ गीतागंगाचगायत्रीगोविंदेतिहृदिस्थिते ॥ चतुर्गकारसंयुक्तेपुनर्जन्मनविद्यते ३ षट्शतानिसविंशानिश्लोकानांप्राहकेशवः ॥ अर्जुनःसप्त
पंचाशत्सप्तषष्टिंतुसंजयः ४ धृतराष्ट्रःश्लोकमेकंगीतायामानमुच्यते ॥ भारतामृतसर्वस्वगीतायामथितस्यच ॥ सारमुद्धृत्यकृष्णेनअर्जुनस्यमुखेहुतम् ५ ॥ संज
यउवाच ॥ ततोधनंजयंदृष्ट्वाबाणगांडीवधारिणम् ॥ पुनरेवमहानादंव्यसृजंतमहारथाः ६ पांडवाःसोमकाश्चैवयेचैषामनुयायिनः ॥ दध्मुश्चमुदिताःशंखान्वीराः
सागरसंभवान् ७ ततोभेर्यश्चपेश्यश्चक्रकचागोविषाणिकाः ॥ सहसैवाभ्यहन्यंतततःशब्दोमहानभूत् ८ तथादेवाःसगंधर्वाःपितरश्चजनाधिप ॥ सिद्धचारणसं
घाश्चसमीयुस्तेदिदृक्षया ९ ऋषयश्चमहाभागाःपुरस्कृत्यशतक्रतुम् ॥ समीयुस्तत्रसहिताद्रष्टुंतद्वैशसंमहत् १० ततोयुधिष्ठिरोदृष्ट्वायुद्धायसमवस्थिते ॥ तेसेने
सागरप्रख्येमुहुःप्रचलितेनृप ११ विमुच्यकवचंवीरोनिक्षिप्यचवरायुधम् ॥ अवरुह्यरथात्क्षिप्रंपद्भ्यामेवकृतांजलिः १२ पितामहमभिप्रेक्ष्यधर्मराजोयुधिष्ठिरः
॥ वाग्यतःप्रययौयेनप्राङ्मुखोरिपुवाहिनीम् १३ तंप्रयांतमभिप्रेक्ष्यकुंतीपुत्रोधनंजयः ॥ अवतीर्यरथात्तूर्णंभ्रातृभिःसहितोऽन्वयात् १४ वासुदेवश्चभगवान्पृ
ष्ठतोऽनुजगामतम् ॥ तथामुख्याश्चराजानस्तच्चित्ताजग्मुरुत्सुकाः १५ ॥ अर्जुनउवाच ॥ किंतेव्यवसितंराजन्यदस्मानपहायवै ॥ पद्भ्यामेवप्रयातोऽसिप्राङ्मु
खोरिपुवाहिनीम् १६ ॥ भीमसेनउवाच ॥ क्कगमिष्यसिराजेंद्रनिक्षिप्तकवचायुधः ॥ दंशितेष्वरिसैन्येषुभ्रातॄनुत्सृज्यपार्थिव १७ ॥ नकुलउवाच ॥ एवंग
तेत्वयिज्येष्ठेममभ्रातरिभारत ॥ भीर्मेदुनोतिहृदयंब्रूहिगंताभवान्क्कनु १८ ॥ सहदेवउवाच ॥ अस्मिन्रणसमूहेवैवर्त्तमानेमहाभये ॥ उत्सृज्यक्कनुगंताऽसिशत्रू
नभिमुखोनृप १९ ॥ संजयउवाच ॥ एवमाभाष्यमाणोऽपिभ्रातृभिःकुरुनंदनः ॥ नोवाचवाग्यतःकिंचिद्गच्छत्येवयुधिष्ठिरः २० ॥

तिसोऽपिबलवदनुग्रहात् । अन्येषांतुकौरवाणामिवसाध्यमानोनिरन्वयोच्छेदायभवतीतिदर्शयिष्यन्युद्धप्रधानंग्रंथंसौप्तिकपर्वांतमारभतेऽर्थस्यानर्थहेतुत्वंविवरीतुंततोधनंजयंदृष्ट्वेति । ततःअर्जुनस्यकरिष्येवचनं
तवेत्येवंरूपप्रतिज्ञानंतरंधनंजयंयुद्धार्थंसन्नद्धंदृष्ट्वेत्यर्थः ६।७ भेर्योबृहत्योढक्काः पेश्यःकाहलाः। क्रकचाजयमंगलाः । गोविषाणिकागवादिशृंगाणि । सहसायुगपदेवअभ्यहन्यंतअवाद्यंत ८।९।१०।११ वरायुधंधनुः
श्रेष्ठं अवरुह्यअवतीर्य १२ येनविजयाख्येनप्रयोजनेनस्वयंयुधिष्ठिरःसंग्रामेदृष्टबुद्धिस्तत्सिद्ध्यर्थंअभिप्रेक्ष्यआलोच्यप्रथमंपितामहंप्रतिप्रययौ रिपुवाहिनींप्रविश्येतिशेषः १३। १४।१५।१६।१७।१८ ।१९।२०

२१ गौतमंकृपं २२ पुराकल्पेप्राचीनशास्त्रे २३ । २४ । २५ मिथोऽन्योन्यं एषोहीतिसुलोपाभावआर्षः २६ व्यक्तंनियतं भीष्मस्यअंतिकंसमीपं २७ । २८ । २९ । ३० । ३१ धिक्कृत्वाधिक्कृत्य असमासआर्षः धिगित्यकरोदितिवा ३२ विवक्षितंवक्तुमिष्टं ३३ । ३४ । ३५ । ३६ । ३७ पराभावायपराकृतोनिरस्तोभावःसत्तायत्रसःतस्मैमरणायेत्यर्थः परश्चासावभावश्चेतिविग्रहेऽपिसएवार्थः

तानुवाचमहाप्राज्ञोवासुदेवोमहामनाः ॥ अभिप्रायोऽस्यविज्ञातोमयेतिप्रहसन्निव २१ एषभीष्मंतथाद्रोणंगौतमंशल्यमेवच ॥ अनुमान्यगुरून्सर्वान्योत्स्यतेपार्थिवो ऽरिभिः २२ श्रूयतेहिपुराकल्पेगुरूननुमान्ययः ॥ युध्यतेसभवेद्व्यक्तमपध्यातोमहत्तरैः २३ अनुमान्ययथाशास्त्रंयस्तुयुध्येन्महत्तरैः ॥ ध्रुवस्तस्यजयोयुद्धेभवेदिति मतिर्मम २४ एवंब्रुवतिकृष्णेऽत्रधार्त्तराष्ट्रचमूंप्रति ॥ हाहाकारोमहानासीन्निःशब्दास्त्वपरेऽभवन् २५ दृष्ट्वायुधिष्ठिरंदूराद्धार्त्तराष्ट्रस्यसैनिकाः ॥ मिथःसंकथयांचक्रु रेषोहिकुलपांसनः २६ व्यक्तंभीतइवाभ्येतिराजाऽसौभीष्ममंतिकम् ॥ युधिष्ठिरःससोदर्यःशरणार्थंप्रयाचकः २७ धनंजयेकथंनाथेपांडवेचवृकोदरे ॥ नकुलेसहदेवेच भीतिरभ्येतिपांडवम् २८ ननूनंक्षत्रियकुलेजातःसंप्रथितेभुवि ॥ यथाऽस्यहृदयंभीतमल्पसत्वस्यसंयुगे २९ ततस्तेसैनिकाःसर्वेप्रशंसंतिस्मकौरवान् ॥ हृष्टाःसुमन सोभूत्वाचैलानिदुधुवुश्चह ३० व्यनिंदंश्चतथासर्वेयोधास्तत्रविशांपते ॥ युधिष्ठिरंससोदर्यंसहितंकेशवेनहि ३१ ततस्तत्कौरवंसैन्यंधिक्कृत्वातुयुधिष्ठिरम् ॥ निःशब्द मभवत्तूर्णंपुनरेवविशांपते ३२ किंनुवक्ष्यतिराजाऽसौकिंभीष्मःप्रतिवक्ष्यति ॥ किंभीमःसमरश्लाघीकिंनुकृष्णार्जुनाविति ३३ विवक्षितंकिमस्येतिसंशयःसुमहानभूत् ॥ उभयोःसेनयोराजन्युधिष्ठिरकृतेतदा ३४ सोऽवगाह्यचमूंशत्रोःशरशक्तिसमाकुलाम् ॥ भीष्ममेवाभ्ययात्तूर्णंभ्रातृभिःपरिवारितः ३५ तमुवाचततःपादौकराभ्यां पीड्यपांडवः ॥ भीष्मंशांतनवंराजायुद्धायसमुपस्थितम् ३६ ॥ युधिष्ठिरउवाच ॥ आमंत्रयेत्वांदुर्धर्षत्वयायोत्स्यामहेसह ॥ अनुजानीहिमांताताशिषश्चप्रयोजय ३७ ॥ भीष्मउवाच ॥ यद्येवंनाभिगच्छेथायुधिमांपृथिवीपते ॥ शपेयंत्वांमहाराजपराभावायभारत ३८ प्रीतोऽहंपुत्रयुध्यस्वजयमाप्नुहिपांडव ॥ यत्तेऽभिलषितं चान्यत्तदवाप्नुहिसंयुगे ३९ व्रियतांचवरःपार्थकिमस्मत्तोऽभिकांक्षसि ॥ एवंगतेमहाराजनतवास्तिपराजयः ४० अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् ॥ इति सत्यंमहाराजबद्धोऽस्म्यर्थेनकौरवैः ४१ अतस्त्वांक्लीबवद्वाक्यंब्रवीमिकुरुनंदन ॥ भृतोऽस्म्यर्थेनकौरव्ययुद्धादन्यत्किमिच्छसि ४२ ॥ युधिष्ठिरउवाच ॥ मंत्रयस्वम हाबाहोहितैषीममनित्यशः ॥ युध्यस्वकौरवस्यार्थेममैषसततंवरः ४३ ॥ भीष्मउवाच ॥ राजन्किमत्रसाह्यंतेकरोमिकुरुनंदन ॥ कामंयोत्स्येपरस्यार्थेब्रूहियत्तेविव क्षितम् ४४ ॥ युधिष्ठिरउवाच ॥ कथंजयेयंसंग्रामेभवंतमपराजितम् ॥ एतन्मेमंत्रयहितंयदिश्रेयःप्रपश्यसि ४५ भीष्मउवाच ॥ नैनंपश्यामिकौन्तेययोमांयुध्यंतमा हवे ॥ विजयेतपुमान्कश्चित्साक्षादपिशतक्रतुः ४६ ॥ युधिष्ठिरउवाच ॥ हंतपृच्छामितस्मात्त्वांपितामहनमोऽस्तुते ॥ वधोपायंब्रवीहित्वमात्मनःसमरेपरैः ४७

३८ । ३९ एवंगतेईदृगाचरणवतित्वयि ४० । ४१ क्लीबवद्वस्वोक्तस्यवरस्ययुद्धादन्यदितिस्वेनैवसंकोचनात्कातरवत्भृतःपोषितः युद्धात्प्रातिभट्याद ४२ । ४३ साह्यंसाहाय्यम ४४ श्रेयःप्रपश्यसियदि वक्तुंयोग्यमितिमन्यसेतर्हिवदेत्यर्थः ४५ । ४६ । ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तावत्संप्रति ४८ । ४९ । ५० आत्मनिःश्रेयसंस्वहितसाधनं ५१ अहंरिपून्कथंजयेतत्त्वंविगतकल्मषःसन्कथयेतिशेषः ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ ध्रुवोऽवश्यंभावी अभिजानामिअनुजाना

भीष्मउवाच ॥ नस्मतंतातपश्यामिसमरेयोजयेतमाम् ॥ नतावन्मृत्युकालोऽपिपुनरागमनंकुरु ४८ ॥ संजयउवाच ॥ ततोयुधिष्ठिरोवाक्यंभीष्मस्यकुरुनंदन ॥
शिरसाप्रतिजग्राहभूयस्तमभिवाद्यच ४९ प्रायात्पुनर्महाबाहुराचार्यस्यरथंप्रति ॥ पश्यतांसर्वसैन्यानांमध्येनभ्रातृभिःसह ५० सद्रोणमभिवाद्याथकृत्वाचाभिप्रदक्षि
णम् ॥ उवाचराजादुर्धर्षमात्मनिःश्रेयसंवचः ५१ आमंत्रयेत्वांभगवन्योत्स्येविगतकल्मषः ॥ कथंजयेरिपून्सर्वाननुज्ञातस्त्वयाद्विज ५२ ॥ द्रोणउवाच ॥ यदिमांना
भिगच्छेथायुद्धायकृतनिश्चयः ॥ शपेयंत्वांमहाराजपराभावायसर्वशः ५३ तद्युधिष्ठिरतुष्टोऽस्मिपूजितश्चत्वयाऽनघ ॥ अनुजानामियुध्यस्वविजयंसमवाप्नुहि ५४
करवाणिचतेकामंब्रूहित्वमभिकांक्षितम् ॥ एवंगतेमहाराजयुद्धादन्यत्किमिच्छसि ५५ अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् ॥ इतिसत्यंमहाराजबद्धोऽस्म्य
र्थेनकौरवैः ५६ ब्रवीम्येतत्क्लीबवत्त्वांयुद्धादन्यत्किमिच्छसि ॥ योत्स्येऽहंकौरवस्यार्थेतवाशास्योजयोमया ५७ ॥ युधिष्ठिरउवाच ॥ जयमाशास्वमेब्रह्मन्मंत्रयस्व
चमद्धितम् ॥ युद्ध्यस्वकौरवस्यार्थेवरएषवृतोमया ५८ ॥ द्रोणउवाच ॥ ध्रुवस्तेविजयोराजन्यस्यमंत्रीहरिस्तव ॥ अहंत्वामभिजानामिरणेशत्रून्विमोक्ष्यसे ५९
यतोधर्मस्ततःकृष्णोयतःकृष्णस्ततोजयः ॥ युध्यस्वगच्छकौन्तेयपृच्छमांकिंब्रवीमिते ६० ॥ युधिष्ठिरउवाच ॥ पृच्छामित्वांद्विजश्रेष्ठशृणुयन्मेऽभिकांक्षितम् ॥
कथंजयेयंसंग्रामेभवंतमपराजितम् ६१ ॥ द्रोणउवाच ॥ नतेऽस्तिविजयस्तावद्यावद्युद्ध्याम्यहंरणे ॥ ममाशुनिधनेराजन्यतस्वसहसोदरैः ६२ ॥ युधिष्ठिरउवाच ॥
हंततस्मान्महाबाहोवधोपायंवदात्मनः ॥ आचार्यप्रणिपत्यैषपृच्छामित्वांनमोऽस्तुते ६३ ॥ द्रोणउवाच ॥ नशत्रुंतातपश्यामियोमांहन्याद्रणेस्थितम् ॥ युध्य
मानंसुसंरब्धंशरवर्षौघवर्षिणम् ६४ ऋतेप्रायगतंराजन्न्यस्तशस्त्रमचेतनम् ॥ हन्यान्मांयुधियोधानांसत्यमेतद्ब्रवीमिते ६५ शस्त्रंचाहंरणेजह्यांश्रुत्वातुमहदप्रि
यम् ॥ श्रद्धेयवाक्यात्पुरुषादेतत्सत्यंब्रवीमिते ६६ ॥ संजयउवाच ॥ एतच्छ्रुत्वामहाराजभारद्वाजस्यधीमतः ॥ अनुमान्यतमाचार्यंप्रायाच्छारद्वतंप्रति ६७
सोऽभिवाद्यकृपंराजाकृत्वाचापिप्रदक्षिणम् ॥ उवाचदुर्मर्षतमंवाक्यंवाक्यविदांवरः ६८ अनुमानयेत्वांयोत्स्येऽहंगुरोविगतकल्मषः ॥ जयेयंचरिपून्सर्वाननुज्ञात
स्त्वयाऽनघ ६९ ॥ कृपउवाच ॥ यदिमांनाभिगच्छेथायुद्धायकृतनिश्चयः ॥ शपेयंत्वांमहाराजपराभावायसर्वशः ७० अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् ॥
इतिसत्यंमहाराजबद्धोऽस्म्यर्थेनकौरवैः ७१ तेषामर्थेमहाराजयोद्धव्यमितिमेमतिः ॥ अतस्त्वांक्लीबवद्ब्रूयांयुद्धादन्यत्किमिच्छसि ७२ ॥ युधिष्ठिरउवाच ॥ हंतपृ
च्छामितेतस्मादाचार्यशृणुमेवचः ॥ इत्युक्त्वाव्यथितोराजानोवाचगतचेतनः ७३ ॥ ॥ ॥

मि विमोक्ष्यसेशत्रून्जीवितादितिशेषः ५९।६० । ६१ । ६२ हंतविषादे ६३ । ६४ प्रायगतंमरणायनियतं अचेतनंयोगबलेनत्यक्तदेहं योधानांमध्येकश्चिदितिशेषः ६५ जह्यांत्यजेयं श्रद्धेयवाक्यात्आदेयव
चनात् ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ ॥ ॥ ॥ ॥ ॥ ॥

७४ । ७५ । ७६ । ७७ परान्प्रकृष्टान् ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ इदंवक्ष्यमाणवचनंयुधिष्ठिरंप्रत्यब्रवीत् ९५

॥ संजयउवाच ॥ तंगौतमःप्रत्युवाचविज्ञायास्यविवक्षितम् ॥ अवध्योऽहंमहीपालयुद्ध्यस्वजयमाप्नुहि ७४ प्रीतस्तेऽभिगमेनाहंजयंतवनराधिप ॥ आशा
सिष्येसदोत्थायसत्यमेतद्ब्रवीमिते ७५ एतच्छ्रुत्वामहाराजगौतमस्यविशांपते ॥ अनुमान्यकृपंराजाप्रययौयेनमद्रराट् ७६ सशल्यमभिवाद्याथकृत्वाचाभिप्रद
क्षिणम् ॥ उवाचराजादुर्धर्षमात्मनिःश्रेयसंवचः ७७ अनुमानयेत्वांदुर्धर्षयोत्स्येविगतकल्मषः ॥ जयेयंनुपरान्राजन्ननुज्ञातस्त्वयारिपून् ७८ ॥ शल्यउवा
च ॥ यदिमांनाधिगच्छेथायुद्धायकृतनिश्चयः ॥ शपेयंत्वांमहाराजपराभावायवैरणे ७९ तुष्टोऽस्मिपूजितश्चास्मियत्कांक्षसितदस्तुते ॥ अनुजानामिचैवत्वां
युध्यस्वजयमाप्नुहि ८० ब्रूहिचैवपरंवीरकेनार्थःकिंददामिते ॥ एवंगतेमहाराजयुद्धादन्यत्किमिच्छसि ८१ अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् ॥ इति
सत्यंमहाराजबद्धोऽस्म्यर्थेनकौरवैः ८२ करिष्याभिहितेकामंभागिनेययथेप्सितम् ॥ ब्रवीम्यतःक्लीबवत्त्वांयुद्धादन्यत्किमिच्छसि ८३ ॥ युधिष्ठिरउवाच ॥ मंत्र
यस्वमहाराजनित्यंमद्धितमुत्तमम् ॥ कामंयुद्ध्यपरस्यार्थेवरमेतंवृणोम्यहम् ८४ ॥ शल्यउवाच ॥ किमत्रब्रूहिसाह्यंतेकरोमिनृपसत्तम ॥ कामंयोत्स्येपर
स्यार्थेबद्धोऽस्म्यर्थेनकौरवैः ८५ ॥ युधिष्ठिरउवाच ॥ सएवमेवरःशल्यउद्योगेयस्त्वयाकृतः ॥ सूतपुत्रस्यसंग्रामेकार्यस्तेजोवधस्त्वया ८६ ॥ शल्यउवाच ॥
संपत्स्यत्येषतेकामःकुंतीपुत्रयथेप्सितम् ॥ गच्छयुध्यस्वविश्रब्धःप्रतिजानेवचस्तव ८७ ॥ संजयउवाच ॥ अनुमान्याथकौन्तेयोमातुलंमद्रकेश्वरम् ॥ निर्ज
गाममहासैन्याद्भ्रातृभिःपरिवारितः ८८ वासुदेवस्तुराधेयमाहवेऽभिजगामवै ॥ ततएनमुवाचेदंपांडवार्थेगदाग्रजः ८९ श्रुतंमेकर्णभीष्मस्यद्वेषात्किलनयो
त्स्यसे ॥ अस्मान्वरयराधेययावद्भीष्मोनहन्यते ९० हतेतुभीष्मेराधेयपुनरेष्यसिसंयुगम् ॥ धार्तराष्ट्रस्यसाहाय्यंयदिपश्यसिचेत्समम् ९१ ॥ कर्णउवाच ॥
नविप्रियंकरिष्यामिधार्तराष्ट्रस्यकेशव ॥ त्यक्तप्राणंहिमांविद्धिदुर्योधनहितैषिणम् ९२ ॥ संजयउवाच ॥ तच्छ्रुत्वावचनंकृष्णःसंन्यवर्ततभारत ॥ युधिष्ठिरपु
रोगैश्चपांडवैःसहसंगतः ९३ अथसैन्यस्यमध्येतुप्राक्रोशत्पांडवाग्रजः ॥ योऽस्मान्वृणोतितमहंवरयेसाह्यकारणात् ९४ अथतान्समभिप्रेक्ष्ययुयुत्सुरिदमब्रवीत् ॥
प्रीतात्माधर्मराजानंकुंतीपुत्रंयुधिष्ठिरम् ९५ अहंयोत्स्यामिभवतःसंयुगेधृतराष्ट्रजान् ॥ युष्मदर्थेमहाराजयदिमांवृणुषेऽनघ ९६ ॥ युधिष्ठिरउवाच ॥ एह्येहिस
र्वेयोत्स्यामस्तवभ्रातॄनपंडितान् ॥ युयुत्सोवासुदेवश्चवयंचब्रूमसर्वशः ९७ वृणोमित्वांमहाबाहोयुद्ध्यस्वममकारणात् ॥ त्वयिपिंडश्चतंतुश्चधृतराष्ट्रस्यदृश्यते ९८
भजस्वास्मान्राजपुत्रभजमानान्महाद्युते ॥ नभविष्यतिदुर्बुद्धिर्धार्तराष्ट्रोऽत्यमर्षणः ९९

 भवतःभवत्संबंधी मिषतइतिपाठेपश्यतस्तवेतिशेषः ९६ । ९७ तंतुःसंततिः पिंडःपितृयज्ञः अन्येसर्वेमरिष्यंतीतिभावः ९८ भजस्वेति । अभजमानःसर्वोऽपिधृतराष्ट्रपुत्रोनभविष्यतिमरिष्यतीत्यर्थः ९९

१०० । १०१ । १०२ पुष्करान्दीर्घकाहलान् एकपुष्करानितिपाठेमुरजान् १०३ । १०४ गौरवंमान्यत्वं १०५ सौहृदंमैत्रीं कृपांस्नेहं दयांपरदुःखप्रहाणेच्छाम् ६ कीर्तिमतांपांडवानांस्तुति संहितावाचइतिसंबंधः १०७ आर्याःकुलीनाः वृत्तंचरितं । मदप्रमदपीडादेर्वाग्भंगंगद्गदंविदुः १०८ । १०९ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥



॥ संजयउवाच ॥ ततोयुयुत्सुःकौरव्यान्परित्यज्यसुतांस्तव ॥ जगामपांडुपुत्राणांसेनांविश्राव्यदुंदुभिम् १०० ततोयुधिष्ठिरोराजासंप्रहृष्टःसहानुजः ॥ जग्राहकवचंभूयोदीप्तिमत्कनकोज्ज्वलम् १०१ प्रत्यपद्यंततेसर्वेस्वरथान्पुरुषर्षभाः ॥ ततोव्यूहंयथापूर्वंप्रत्यव्यूहंततेपुनः १०२ अवादयन्दुंदुभींश्चशतशश्चैवपुष्करान् ॥ सिंहनादांश्चविविधान्विनेदुःपुरुषर्षभाः १०३ रथस्थान्पुरुषव्याघ्रान्पांडवान्प्रेक्ष्यपार्थिवाः ॥ धृष्टद्युम्नादयःसर्वेपुनर्जहृषिरेतदा १०४ गौरवंपांडुपुत्राणांमान्यान्मानयतांचतान् ॥ दृष्ट्वामहीक्षितस्तत्रपूजयांचक्रिरेभृशम् १०५ सौहृदंचकृपांचैवप्राप्तकालंमहात्मनाम् ॥ दयांचज्ञातिषुपरांकथयांचक्रिरेनृपाः १०६ साधुसाध्वितिसर्वत्रनिश्चेरुःस्तुतिसंहिताः ॥ वाचःपुण्याःकीर्तिमतांमनोहृदयहर्षणाः १०७ म्लेच्छाश्चार्याश्चयेतत्रददृशुःशुश्रुवुस्तथा ॥ वृत्तंतत्पांडुपुत्राणांरुरुदुस्तेसगद्गदाः १०८ ततोजघ्नुर्महाभेरीःशतशश्चसहस्रशः ॥ शंखांश्चगोक्षीरनिभान्दध्मुर्हृष्टामनस्विनः १०९ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० भीष्मादिसंमानने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ धृतराष्ट्रउवाच ॥ एवंव्यूढेष्वनीकेषुमामकेष्वितरेषुच ॥ केपूर्वंप्राहरंस्तत्रकुरवःपांडवानुकिम् १ संजयउवाच ॥ भ्रातृभिःसहितोराजन्पुत्रोदुःशासनस्तव ॥ भीष्मंप्रमुखतःकृत्वाप्रययौसहसेनया २ तथैवपांडवाःसर्वेभीमसेनपुरोगमाः ॥ भीष्मेणयुद्धमिच्छन्तःप्रययुर्हृष्टमानसाः ३ क्ष्वेडाःकिलकिलाशब्दाःक्रकचागोविषाणिकाः ॥ भेरीमृदंगमुरजाहयकुंजरनिःस्वनाः ४ उभयोःसेनयोर्राजंस्ततस्तेऽस्मान्समाद्रवन् ॥ वयंतान्प्रतिनर्दन्तस्तदासीत्तुमुलंमहत् ५ महांत्यनीकानिमहासमुच्छ्रयेसमागमेपांडवधार्तराष्ट्रयोः ॥ चकंपिरेशंखमृदंगनिःस्वनैःप्रकंपितानीववनानिवायुना ६ नरेंद्रनागाश्वरथाकुलानामभ्यागतानामशिवेमुहूर्ते ॥ बभूवघोषस्तुमुलश्चमूनांवातोद्धुतानामिवसागराणाम् ७ तस्मिन्समुत्थितेशब्देतुमुलेलोमहर्षणे ॥ भीमसेनोमहाबाहुःप्राणदद्गोवृषोयथा ८ शंखदुंदुभिनिर्घोषंवारणानांचबृंहितम् ॥ सिंहनादंचसैन्यानांभीमसेनरवोऽभ्यभूत् ९ हयानांहेषमाणानामनीकेषुसहस्रशः ॥ सर्वानभ्यभवच्छब्दान्भीमस्यनदतःस्वनः १० तंश्रुत्वानिनदंतस्यसैन्यास्तववितत्रसुः ॥ जीमूतस्येवनदतःशक्राशनिसमस्वनम् ११ वाहनानिचसर्वाणिशकृन्मूत्रंप्रसुस्रुवुः ॥ शब्देनतस्यवीरस्यसिंहस्येवेतरेमृगाः १२ दर्शयन्घोरमात्मानंमहाभ्रमिवनादयन् ॥ विभीषयंस्तवसुतान्भीमसेनःसमभ्ययात् १३ तमायांतंमहेष्वासंसोदर्याःपर्यवारयन् ॥ छादयंतःशरव्रातैर्मेघाइवदिवाकरम् १४

एवमिति । एवंव्यूढेष्वित्यादेर्दृष्ट्वाभीष्मस्यविक्रममित्यंतस्यसर्वातिशायीभीष्मस्यपराक्रमइतितात्पर्यार्थः १ । २ । ३ क्ष्वेडाःसिंहनादाः मृदंगाःमर्दलाः मुरजाःक्षुद्रमर्दलाः ४ समाद्रवन्अन्योन्यंसंगता अभूवन् ५ महान्समुच्छ्रयःसंप्रहारोयत्र ६ । ७ गोवृषोबलीवर्दश्रेष्ठः ८ अभ्यभूत्अभिभूतवान् ९ । १० सैन्याःसेनामुख्याः ११ । १२ नादयन्नादंकुर्वन् १३ सोदर्याःराजानुजाः १४

१५ । १६ निर्मुक्ताःमुक्तकंचुकाश्चाशीविषाउपमायेषांतान् १७ । १८ । १९ भीमाः भयंकराःज्यानांतलानांचनिःस्वनायेतैः २० लाघवंक्षिप्रहस्तता निमित्तंलक्ष्यं २१ । २२ भीमंभयंकरं २३ जातसंरंभाश्चिरसंभृतकोपाः कृतागसःकृतापराधाः भीमोऽपिबाल्येधार्तराष्ट्रान्मर्दयन्कृतापराधोस्तीत्युक्तंपरस्परेति । व्यायच्छंतव्यायामंचक्रुः २४ पटेइतिसप्तम्यंतं २५ । २६ । २७ अंतर्धीयतअंतर्हितः अडभावआर्षः

दुर्योधनश्चपुत्रस्तेदुर्मुखोदुःशलःशलः ॥ दुःशासनश्चातिरथस्तथादुर्मर्षणोनृपः १५ विविंशतिश्चित्रसेनोविकर्णश्चमहारथः ॥ पुरुमित्रोजयोभोजःसौमदत्तिश्चवीर्यवान्
१६ महाचापानिधुन्वंतोमेघाइवसविद्युतः ॥ आददानाश्चनाराचान्निर्मुक्ताशीविषोपमान् १७ अथतेद्रौपदीपुत्राःसौभद्रश्चमहारथः ॥ नकुलःसहदेवश्चधृष्टद्युम्नश्च
पार्षतः १८ धार्तराष्ट्रान्प्रतिययुरर्दयंतःशितैःशरैः ॥ वज्रैरिवमहावेगैःशिखराणिधराभृताम् १९ तस्मिन्प्रथमसंग्रामेभीमज्यातलनिःस्वने ॥ तावकानांपरेषांच
नासीत्कश्चित्पराङ्मुखः २० लाघवंद्रोणशिष्याणामपश्यंभरतर्षभ ॥ निमित्तवेधिनांचैवशरानुत्सृजतांभृशम् २१ नोपशाम्यतिनिर्घोषोधनुषांकूजतांतथा ॥ विनि
श्चेरुःशरादीप्ताज्योर्तीषीवनभस्तलात् २२ सर्वेत्वन्येमहीपालाःप्रेक्षकाइवभारत ॥ ददृशुर्दर्शनीयंतंभीमंज्ञातिसमागमम् २३ ततस्तेजातसंरंभाःपरस्परकृतागसः ॥
अन्योन्यस्पर्धयाराजन्व्यायच्छंतमहारथाः २४ कुरुपांडवसेनेतेहस्त्यश्वरथसंकुले ॥ शुशुभातेरणेऽतीवपटेचित्रार्पितेइव २५ ततस्तेपार्थिवाःसर्वेप्रगृहीतशरासनाः ॥
सहसैन्याःसमापेतुःपुत्रस्यतवशासनात् २६ युधिष्ठिरेणचादिष्टाःपार्थिवास्तेसहस्रशः ॥ विनदंतःसमापेतुःपुत्रस्यतववाहिनीम् २७ उभयोःसेनयोस्तीव्रःसैन्यानांसस
मागमः ॥ अंतर्धीयतचादित्यःसैन्येनरजसाऽऽवृतः २८ प्रयुद्धानांप्रभग्नानांपुनरावर्तिनामपि ॥ नात्रस्वेषांपरेषांवाविशेषःसमदृश्यत २९ तस्मिंस्तुतुमुलेयुद्धेवर्तमानेम
हाभये ॥ अतिसर्वाण्यनीकानिपितातेऽभिव्यरोचत ३० ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवध॰ युद्धारंभेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ संजयउवाच ॥
पूर्वाह्णेतस्यरौद्रस्ययुद्धमह्नोविशांपते ॥ प्रावर्ततमहाघोरंराज्ञांदेहावकर्तनम् १ कुरूणांसृंजयानांचजिगीषूणांपरस्परम् ॥ सिंहानामिवसंह्रादोदिवमुर्वींचनादयन् २
आसीत्किलकिलाशब्दस्तलशंखरवैःसह ॥ जज्ञिरेसिंहनादाश्चशूराणांप्रतिगर्जताम् ३ तलत्राभिहताश्चैवज्याशब्दाभरतर्षभ ॥ पत्तीनांपादशब्दश्चवाजिनांचमहा
स्वनः ४ तोत्रांकुशनिपातश्चआयुधानांचनिःस्वनः ॥ घंटाशब्दश्चनागानामन्योन्यमभिधावताम् ५ तस्मिन्समुदितेशब्देतुमुलेलोमहर्षणे ॥ बभूवरथनिर्घोषः
पर्जन्यनिनदोपमः ६ तेमनःक्रूरमाधायसमभित्यक्तजीविताः ॥ पांडवानभ्यवर्ततसर्वएवोच्छ्रितध्वजाः ७ अथशांतनवोराजन्नभ्यधावद्धनंजयम् ॥ प्रगृह्यकार्मुकं
घोरंकालदंडोपमंरणे ८ अर्जुनोऽपिधनुर्गृह्यगांडीवंलोकविश्रुतम् ॥ अभ्यधावततेजस्वीगांगेयंरणमूर्धनि ९ तावुभौकुरुशार्दूलौपरस्परवधैषिणौ ॥ गांगेयस्तुरणे
पार्थंविद्ध्वानाकंपयद्बली १०

सैन्येनसेनाभवेन २८ । २९ अति अतिक्रम्य ३० ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ ॥ पूर्वाण्हेइति । तस्याण्हःपूर्वाह्णेपूर्वभागे १ सृंजयानांपांचालभेदानाम् २ तलंज्याघातवारणम् ३ । ४ तोत्रंगजदमनंवेणुकाख्यंवेणुबुध्नसमाकारम् ५ । ६ । ७।८ रणमूर्धनिरणांगने ९ । १०

महेष्वासःमहानिष्वासोधनुर्यस्य ११ । १२ आनर्च्छतुःपीडितवंतौ तक्षमाणौतनूकुर्वाणौ १३ पुष्पैःशबलौविचित्रौ किंशुकौपलाशा १४ । १५ । १६ शिताभ्यांतीक्ष्णाभ्यांध्वजंचिच्छेदेत्यन्वयः एकेनपार्ष्णि

तथैवपांडवोराजन्भीष्मंनाकंपयद्युधि ॥ सात्यकिस्तुमहेष्वासःकृतवर्माणमभ्ययात् ११ तयोःसमभवद्युद्धंतुमुलंलोमहर्षणम् ॥ सात्यकिःकृतवर्माणंकृतवर्माचसात्यकिम् १२ आनर्च्छतुःशरैर्घोरैस्तक्षमाणौपरस्परम् ॥ तौशराचितसर्वांगौशुशुभातेमहाबलौ १३ वसंतेपुष्पशबलौपुष्पिताविवकिंशुकौ ॥ अभिमन्युर्महेष्वासंबृहद्बलमयोधयत् १४ ततःकोसलराजाऽसावभिमन्योर्विशांपते ॥ ध्वजंचिच्छेदसमरेसारथिंचन्यपातयत् १५ सौभद्रस्तुततःक्रुद्धःपातितेरथसारथौ ॥ बृहद्बलंमहाराजविव्याधनवभिःशरैः १६ अथापराभ्यांभल्लाभ्यांशिताभ्यामरिमर्दनः ॥ ध्वजमेकेनचिच्छेदपार्ष्णिमेकेनसारथिम् १७ अन्योन्यंचशरैःक्रुद्धौततक्षातेपरस्परम् ॥ मानिनंसमरेदृप्तंकृतवैरंमहारथम् १८ भीमसेनस्तवसुतंदुर्योधनमयोधयत् ॥ तावुभौनरशार्दूलौकुरुमुख्यौमहाबलौ १९ अन्योन्यंशरवर्षाभ्यांववृषातेरणाजिरे ॥ तौवीक्ष्यतुमहात्मानौकृतिनौचित्रयोधिनौ २० विस्मयःसर्वभूतानांसमपद्यतभारत ॥ दुःशासनस्तुनकुलंप्रत्युद्यायमहाबलम् २१ अविध्यन्निशितैर्बाणैर्बहुभिर्मर्मभेदिभिः ॥ तस्यमाद्रीसुतःकेतुंसशरंचशरासनम् २२ चिच्छेदनिशितैर्बाणैःप्रहसन्निवभारत ॥ अथैनंपंचविंशत्याक्षुद्रकाणांसमार्पयत् २३ पुत्रस्तुतवदुर्धर्षोनकुलस्यमहाहवे ॥ तुरंगांश्चिच्छिदेबाणैर्ध्वजंचैवाभ्यपातयत् २४ दुर्मुखःसहदेवंचप्रत्युद्यायमहाबलम् ॥ विव्याधशरवर्षेणयतमानंमहाहवे २५ सहदेवस्ततोवीरोदुर्मुखस्यमहारणे ॥ शरेणभृशतीक्ष्णेनपातयामाससारथिम् २६ तावन्योन्यंसमासाद्यसमरेयुद्धदुर्मदौ ॥ त्रासयेतांशरैर्घोरैःकृतप्रतिकृतैषिणौ २७ युधिष्ठिरःस्वयंराजामद्रराजानमभ्ययात् ॥ तस्यमद्राधिपश्चापंद्विधाचिच्छेदमारिष २८ तदपास्यधनुश्छिन्नंकुंतीपुत्रोयुधिष्ठिरः ॥ अन्यत्कार्मुकमादायवेगवद्बलवत्तरम् २९ ततोमद्रेश्वरंराजाशरैःसन्नतपर्वभिः ॥ छादयामाससंक्रुद्धस्तिष्ठतिष्ठेतिचाब्रवीत् ३० धृष्टद्युम्नस्ततोद्रोणमभ्यद्रवतभारत ॥ तस्यद्रोणःसुसंक्रुद्धःपरासुकरणंदृढम् ३१ त्रिधाचिच्छेदसमरेपांचाल्यस्यतुकार्मुकम् ॥ शरंचैवमहाघोरंकालदंडमिवापरम् ३२ प्रेषयामाससमरेसोऽस्यकायेन्यमज्जत ॥ अथान्यद्धनुरादायसायकांश्चचतुर्दश ३३ द्रोणंद्रुपदपुत्रस्तुप्रतिविव्याधसंयुगे ॥ तावन्योन्यंसुसंक्रुद्धौचक्रतुःसुभृशंरणम् ३४ सौमदत्तिंरणेशंखोरभसंरभसोयुधि ॥ प्रत्युद्ययौमहाराजतिष्ठतिष्ठेतिचाब्रवीत् ३५ तस्यवैदक्षिणंवीरोनिर्बिभेदरणेभुजम् ॥ सौमदत्तिस्तथाशंखंजत्रुदेशेसमाहनत् ३६ तयोस्तदभवद्युद्धंघोररूपंविशांपते ॥ दृप्तयोःसमरेपूर्वंवृत्रवासवयोरिव ३७ बाह्लीकंतुरणेक्रुद्धंक्रुद्धरूपोविशांपते ॥ अभ्यद्रवदमेयात्माधृष्टकेतुर्महारथः ३८

पृष्ठगोपं एकेनसारथिमितिच १७ । १८ १९ कृतिनौयुद्धकुशलौ २० । २१ । २२ क्षुद्रकाणांबाणविशेषाणां २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० परासुकरणंमारणसाधनं ३१ । ३२ । ३३ । ३४ रभसंसत्वरं ३५ वीरःशंखः जत्रुदेशेअंससंधौ ३६ । ३७ धृष्टकेतुःशिशुपालसुतः ३८

३९ । ४० समीयतुःअन्योन्यस्पर्धयासंभिज्ञितौ ४१ । ४२ । ४३ सन्नतपर्वभिःअलक्षितग्रंथिभिः ४४ । ४५ । ४६ । ४७ सुपीतेनसुष्ठुपायितेन तीक्ष्णेनसूक्ष्मधारेण यतोनिशितेनशाणोल्लीढेन

बाह्लीकस्तुरणेराजन्धृष्टकेतुममर्षणः ॥ शरैर्बहुभिरानर्च्छंत्सिंहनादमथानदत् ३९ चेदिराजस्तुसंक्रुद्धोबाह्लीकंनवभिःशरैः ॥ विव्याधसमरेतूर्णंमत्तोमत्तमिव
द्विपम् ४० तौतत्रसमरेक्रुद्धौनर्दंतौचपुनःपुनः ॥ समीयतुःसुसंक्रुद्धावंगारकबुधाविव ४१ राक्षसंरौद्रकर्माणंक्रूरकर्माघटोत्कचः ॥ अलंबुषंप्रत्युदियाद्बलंश
क्रइवाहवे ४२ घटोत्कचस्ततःक्रुद्धोराक्षसंतंमहाबलम् ॥ नवत्यासायकैस्तीक्ष्णैर्दारयामासभारत ४३ अलंबुषस्तुसमरेभैमसेनिंमहाबलम् ॥ बहुधादारयामा
सशरैःसन्नतपर्वभिः ४४ व्यभ्राजेतांततस्तौतुसंयुगेशरविक्षतौ ॥ यथादेवासुरेयुद्धेबलशक्रौमहाबलौ ४५ शिखंडीसमरेराजन्द्रौणिमभ्युद्ययौबली ॥ अश्व
त्थामाततःक्रुद्धःशिखंडिनमुपस्थितम् ४६ नाराचेनसुतीक्ष्णेनभृशंविद्ध्वाव्यकंपयत् ॥ शिखंड्यपिततोराजन्द्रोणपुत्रमताडयत् ४७ सायकेनसुपीतेनतीक्ष्णेननि
शितेनच ॥ तौजघ्नतुस्तदाऽन्योन्यंशरैर्बहुविधैर्मृधे ४८ भगदत्तंरणेशूरंविराटोवाहिनीपतिः ॥ अभ्ययात्त्वरितोराजंस्ततोयुद्धमवर्तत ४९ विराटोभगदत्तंतुश
रवर्षेणभारत ॥ अभ्यवर्षत्सुसंक्रुद्धोमेघोवृष्ट्याइवाचलम् ५० भगदत्तस्ततस्तूर्णंविराटंपृथिवीपतिम् ॥ छादयामाससमरेमेघःसूर्यमिवोदितम् ५१ बृहत्क्षत्रं
तुकैकेयंकृपःशारद्वतोययौ ॥ तंकृपःशरवर्षेणच्छादयामासभारत ५२ गौतमंकैकयःक्रुद्धःशरवृष्ट्याऽभ्यपूरयत् ॥ तावन्योन्यंहयान्हत्वाधनुश्छित्वाचभारत ५३
विरथावसियुद्धायसमीयतुरमर्षणौ ॥ तयोस्तदभवद्युद्धंघोररूपंसुदारुणम् ५४ द्रुपदस्तुततोराजन्सैन्धवंवैजयद्रथम् ॥ अभ्युद्ययौहृष्टरूपोहृष्टरूपंपरंतपः ५५
ततःसैन्धवकोराजाद्रुपदंविशिखैस्त्रिभिः ॥ ताडयामाससमरेसचतंप्रत्यविध्यत ५६ तयोस्तदभवद्युद्धंघोररूपंसुदारुणम् ॥ ईक्षणप्रीतिजननंशुक्रांगारकयोरिव ५७
विकर्णस्तुसुतस्तुभ्यंसुतसोमंमहाबलम् ॥ अभ्ययाज्जवनैरश्वैस्ततोयुद्धमवर्तत ५८ विकर्णःसुतसोमंतुविद्ध्वानाकंपयच्छरैः ॥ सुतसोमोविकर्णंचतदद्भुतमिवाभ
वत् ५९ सुशर्माणंनरव्याघ्रश्चेकितानोमहारथः ॥ अभ्यद्रवत्सुसंक्रुद्धःपांडवार्थेपराक्रमी ६० सुशर्मातुमहाराजचेकितानंमहारथम् ॥ महताशरवर्षेणवा
रयामाससंयुगे ६१ चेकितानोऽपिसंरब्धःसुशर्माणंमहाहवे ॥ प्राच्छादयत्तमिषुभिर्महामेघइवाचलम् ६२ शकुनिःप्रतिविंध्यंतुपराक्रांतंपराक्रमी ॥ अभ्य
द्रवतराजेंद्रमत्तःसिंहइवद्विपम् ६३ यौधिष्ठिरस्तुसंक्रुद्धःसौबलंनिशितैःशरैः ॥ व्यदारयतसंग्रामेमघवानिवदानवम् ६४ शकुनिःप्रतिविंध्यंतुप्रतिविध्यंतमाहवे ॥
व्यदारयन्महाप्राज्ञःशरैःसन्नतपर्वभिः ६५ सुदक्षिणंतुराजेन्द्रकांबोजानांमहारथम् ॥ श्रुतकर्मापराक्रांतमभ्यद्रवतसंयुगे ६६ सुदक्षिणस्तुसमरेसाहदेविंमहा
रथम् ॥ विद्ध्वानाकंपयतवैमैनाकमिवपर्वतम् ६७

मृधेसंग्रामे ४८ । ४९ वृष्ट्याइवेत्यसंधिरार्षः ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ तुभ्यंतव सुतसोमंभैमसेनिं ५८ । ५९ चेकितानोयादवः ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७

६८ इरावानर्जुनपुत्रः ६९ । ७० गदाग्रेणगदामुखेन ७१ संसज्जतुः संसक्तावभूतां ७२ तयोर्द्वंद्वयोः ७३ तेएवद्वंद्वेद्वाभ्यामाह अनुविंदइति ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० द्वंद्वंद्वयोर्द्वयोर्युद्धं ८१
८२ । ८३ । ८४ । ८५विपरीतंअतीतक्रमम् ८६ । ८७ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ ॥ राजन्निति । निर्मर्यादंअपेतव्यवहारं प्रयुद्धानियुद्धं

श्रुतकर्माततःक्रुद्धःकांबोजानांमहारथम् ।। शरैर्बहुभिरानर्च्छद्दारयन्निवसर्वशः ६८ इरावानथसंक्रुद्धःश्रुतायुषमरिंदमम् ॥ प्रत्युद्ययौरणेयत्तोयतरूपंपरंतपः ६९
आर्जुनिस्तस्यसमरेहयान्हत्वामहारथः ॥ ननादबलवन्नादंतत्सैन्यंप्रत्यपूरयत् ७० श्रुतायुस्तुततःक्रुद्धःफाल्गुनेःसमरेहयान् ॥ निजघानगदाग्रेणततोयुद्ध
मवर्तत ७१ विंदानुविंदावावंत्यौकुंतिभोजंमहारथम् ॥ ससेनंससुतंवीरंसंससज्जतुराहवे ७२ तत्राद्भुतमपश्यामतयोर्घोरंपराक्रमम् । अयुध्येतांस्थिरौभूत्वा
महत्यासेनयासह ७३ अनुविंदस्तुगदयाकुंतिभोजमताडयत् ॥ कुंतिभोजश्चतंतूर्णंशरव्रातैरवाकिरत् ७४ कुंतिभोजसुतश्चापिविंदंविव्याधसायकैः ॥ सचतं
प्रतिविव्याधतदद्भुतमिवाभवत् ७५ केकयाभ्रातरःपंचगांधारान्पंचमारिष ॥ ससैन्यास्तेससैन्यांश्चयोधयामासुराहवे ७६ वीरबाहुश्चतेपुत्रोवैराटिंरथसत्तमम् ॥
उत्तरंयोधयामासविव्याधनिशितैःशरैः ७७ उत्तरश्चापितंवीरंविव्याधनिशितैःशरैः ॥ चेदिराट्समरेराजन्नुलूकंसमभिद्रवत् ७८ तथैवशरवर्षेणउलूकंसमविद्ध्यत ॥
उलूकश्चापितंबाणैर्निशितैर्लोमवाहिभिः ७९ तयोर्युद्धंसमभवद्घोररूपंविशांपते ॥ दारयेतांसुसंक्रुद्धावन्योन्यमपराजितौ ८० एवंद्वंद्वसहस्राणिरथवारणवाजि
नाम् ॥ पदातीनांचसमरेतवतेषांचसंकुले ८१ मुहूर्तमिवतद्युद्धमासीन्मधुरदर्शनम् ॥ ततउन्मत्तवद्राजन्नप्राज्ञायतकिंचन ८२ गजोगजेनसमरेरथिनंचरथी
ययौ ॥ अश्वोऽश्वंसमभिप्रायात्पदातिश्चपदातिनम् ८३ ततोयुद्धंसुदुर्धर्षंव्याकुलंसमपद्यत ॥ शूराणांसमरेतत्रसमासाद्येतरेतरम् ८४ तत्रदेवर्षयःसिद्धाश्चा
रणाश्चसमागताः ॥ प्रैक्षंततद्रणंघोरंदेवासुरसमंभुवि ८५ ततोदंतिसहस्राणिरथानांचापिमारिष ॥ अश्वौघाःपुरुषौघाश्चविपरीतंसमाययुः ८६ तत्रतत्रप्रदृश्यं
तेरथवारणपत्तयः ॥ सादिनश्चनरव्याघ्रयुध्यमानामुहुर्मुहुः ८७ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मव० द्वंद्वयुद्धेपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥
संजयउवाच ॥ राजन्शतसहस्राणितत्रतत्रपदातिनाम् ॥ निर्मर्यादंप्रयुद्धानितत्तेवक्ष्यामिभारत १ नपुत्रःपितरंजज्ञेपितावापुत्रमौरसम् ॥ नभ्राताभ्रातरंतत्र
स्वस्रीयंनचमातुलः २ नमातुलंचस्वस्रीयोनसखायंसखातथा ॥ आविष्टाइवयुध्यंतेपांडवाःकुरुभिःसह ३ रथानीकंनरव्याघ्राःकेचिदभ्यपतन्रथैः ॥ अभज्यं
तयुगैरेवयुगानिभरतर्षभ ४ रथेषाश्चरथेषाभिःकूबरारथकूबरैः ॥ संगतैःसहिताःकेचित्परस्परजिघांसवः ५ नशेकुश्चलितुंकेचित्सन्निपत्यरथारथैः ॥ प्र
भिन्नास्तुमहाकायाःसन्निपत्यगजागजैः ६ बहुधाऽदारयन्क्रुद्धाविषाणैरितरेतरम् ॥ सतोरणपताकैश्चवारणावरवारणैः ७

कृतवंति १ जज्ञेज्ञातवान् तत्रकाले स्वस्रीयोभागिनेयः २ आविष्टाइवभूतादिनागृहीताइव ३ युगानिअश्वस्कंधार्पितानिदारूणि ४ रथेषारथदंडः कूबरोयुगकीलः संगतैःसंमुखागतैः सहितामि
लिताः ५ संनिपत्यमिलित्वा प्रभिन्नाश्चोतन्मदाः ६ विषाणैर्दन्तैः तोरणानिचतुःस्तंभमंडपाकारस्यगजपल्याणस्य 'अंबारी' इतिभाषयाप्रसिद्धस्यद्वाराणि पताकाश्चतत्रैवस्तंभशेखरस्थाः ७

८ अभिनीताःसुशिक्षिताः अप्रभिन्नाःअनुद्भिन्नमदाः संमुखाभिमुखाःअन्योन्यसंमुखाइत्यर्थः ९ । १० प्रणीताःप्रयुक्ताः ऋष्टयोहस्तक्षेप्याःक्षुद्रभल्लाः विंध्याटव्यांकर्कांडीतिप्रसिद्धाः तोमरादीर्घदंडाभल्लाः नारा
चामहाशल्याविस्तीर्णफलकाःशराः ११ । १२ परश्वधैःकुठारैः १३ भिंदिपालैःपरशवैःमहाराष्ट्राणां'गोफण'इतिप्रसिद्धैः परिघैर्दण्डैः निस्त्रिंशैःखड्गैः १४ द्रवमाणाधावंतः १५ । १६ अवक्षिप्तावधूतानां अधोमुखं
पातितानां परेषांमर्मसुपततामसीनामितिसंबंधः १७ रुग्णस्तीव्राघातार्तः भिन्नोनिकृत्तांगः अवभिन्नःक्षतांगः १८ प्रेतानांनारकाणां १९ हयैःकरणभूतैः चामरापीडाश्चामरकलापास्तद्धारिभिः अतएव

अभिसृत्यमहाराजवेगवद्भिर्महागजैः ॥ दंतैरभिहतास्तत्रचुकुशुःपरमातुराः ८ अभिनीताश्वशिक्षाभिस्तोत्रांकुशसमाहताः ॥ अप्रभिन्नाःप्रभिन्नानांसंमुखाभिमु
खाययुः ९ प्रभिन्नैरपिसंसक्ताःकेचित्तत्रमहागजाः ॥ क्रौंचवन्निनदंकृत्वादुद्रुवुःसर्वतोदिशम् १० सम्यक्प्रणीतानागाश्वप्रभिन्नकरटामुखाः ॥ ऋष्टितोमरनाराचै
र्निर्विद्धावरवारणाः ११ प्रणेदुर्भिन्नमर्माणोनिपेतुश्चगतासवः ॥ प्राद्रवंतदिशःकेचिन्नदंतोभैरवान्रवान् १२ गजानांपादरक्षास्तुव्यूढोरस्काःप्रहारिणः ॥ ऋष्टि
भिश्चधनुर्भिश्चविमलैश्चपरश्वधैः १३ गदाभिर्मुसलैश्चैवभिंदिपालैःसतोमरैः ॥ आयसैःपरिघैश्चैवनिस्त्रिंशैर्विमलैःशितैः १४ प्रगृहीतैःसुसंरब्धाद्रवमाणास्तत
स्ततः ॥ व्यदृश्यंतमहाराजपरस्परजिघांसवः १५ राजमानाश्चनिस्त्रिंशाःसंसिक्तानरशोणितैः ॥ प्रत्यदृश्यंतशूराणामन्योन्यमभिधावताम् १६ अवक्षिप्तावधूता
नामसीनांवीरबाहुभिः ॥ संजज्ञेतुमुलःशब्दःपततांपरमर्मसु १७ गदामुसलरुग्णानांभिन्नानांचवरासिभिः ॥ दंतिदंतावभिन्नानांमृदितानांचदंतिभिः १८ तत्र
तत्रनरौघाणांक्रोशतामितरेतरम् ॥ शुश्रुवुर्दारुणावाचःप्रेतानामिवभारत १९ हयैरपिहयारोहाश्चामरापीडधारिभिः ॥ हंसैरिवमहावेगैरन्योन्यमभिविद्रुताः २०
तैर्विमुक्तामहाप्रासाजांबूनदविभूषणाः ॥ आशुगाविमलास्तीक्ष्णाःसंपेतुर्भुजगोपमाः २१ अश्वैरग्र्यजवैःकेचिदाप्लुत्यमहतोरथान् ॥ शिरांस्याददिरेवीरारथिनाम
श्वसादिनः २२ बहूनपिहयारोहान्भल्लैःसन्नतपर्वभिः ॥ रथीजघानसंप्राप्यबाणगोचरमागतान् २३ नवमेघप्रतीकाशाश्चाक्षिप्यतुरगान्गजाः ॥ पादैरेवविमृद्नंति
मत्ताःकनकभूषणाः २४ पाट्यमानेषुकुंभेषुपार्श्वेष्वपिचवारणाः ॥ प्रासैर्विनिहताःकेचिद्विनेदुःपरमातुराः २५ साश्वारोहान्हयान्कांश्चिदुन्मथ्यवरवारणाः ॥ सह
साचिक्षिपुस्तत्रसंकुलेभैरवेसति २६ साश्वारोहान्विषाणाग्रैरुत्क्षिप्यतुरगान्गजाः ॥ रथौघानभिमृद्नन्तःसध्वजानभिचक्रमुः २७ पुंस्त्वादतिमदत्वाच्चकेचित्तत्रमहाग
जाः ॥ साश्वारोहान्हयान्जघ्नुःकरैःसचरणैस्तथा २८ अश्वारोहैश्चसमरेहस्तिसादिभिरेवच ॥ प्रतिमानेषुगात्रेषुपार्श्वेष्वभिचवारणान् ॥ आशुगाविमलास्ती
क्ष्णाःसंपेतुर्भुजगोपमाः २९ नराश्वकायान्निर्भिद्यलौहानिकवचानिच ॥ निपेतुर्विमलाःशक्त्योवीरबाहुभिरर्पिताः ३०

हंसैरिवअभिविद्रुताःसंमुखमुपागताः २० प्रासाहस्तक्षेप्याभल्लाःसैंतीतिप्रसिद्धाः कुंताइत्यपरे आशुगाःशीघ्रगाः २१ अग्र्यजवैरुत्तमवेगैः २२ भल्लैर्दीर्घफलकैर्बाणैः २३ । २४ । २५ सहसाबलेन अतर्कितंवा
सतिविद्यमाने २६ अभिचक्रमुःअभितोबभ्रमुः २७ पुंस्त्वाद्वीर्यवत्त्वात् अतिमदत्वादुद्भिन्नमदत्वात् २८ प्रतिमानेषुललाटेषु गात्रेषुअंगेषु वारणानभिगजानामभितः षष्ठ्यर्थेद्वितीया । आशुगाबाणाः अश्वा
रोहादिभिःप्रक्षिप्ताइतिशेषः २९ शक्त्यःशक्तयः कृत्स्नालोहदंडास्तएवमहोल्काप्रतिमाइत्युत्तरेणसंबंधः ३०

द्वीपीचित्रव्याघ्रः ३१ विकोशैः प्रयोगकाले । 'अभीतस्याभिमुख्येनसर्पणंस्यादभिप्लुतम् । तदेवस्यादभिक्रुद्धमोष्ठदंशादिसंयुतं । वामपक्षाश्रितंयानमेकपार्श्वविदारितम्' ३२ चर्मप्रहारवारणं 'ढाल' इतिप्रसिद्धं
भाषायां । आक्षिप्याकृष्य ३३ सर्वशब्दगाः सर्वेषामाक्षेप्तॄणांशब्दमनुगच्छंतितेतथा शंकुभिःकीलैःकंटकदंडादिगतैः ३४ । ३५ व्याक्रोशंतव्याक्रोशंकृतवंतः बंधुभिःसखिभिः ३६ भग्नसक्थाभग्नोरवः ३७

महोल्काप्रतिमाघोरास्तत्रतत्रविशांपते ॥ द्वीपिचर्मावनद्धैश्चव्याघ्रचर्मच्छदैरपि ३१ विकोशैर्विमलैःखड्गैरभिजग्मुःपरान्रणे ॥ अभिप्लुतमभिक्रुद्धमेकपार्श्वावदारि
तम् ३२ विदर्शयंतःसंपेतुःखड्गचर्मपरश्वधैः ॥ केचिदाक्षिप्यकरिणःसाश्वानपिरथान्करैः ३३ विकर्षंतोदिशःसर्वाःसंपेतुःसर्वशब्दगाः ॥ शंकुभिर्दारिताःकेचित्
संभिन्नाश्चपरश्वधैः ३४ हस्तिभिर्मृदिताःकेचित्क्षुण्णाश्चान्येतुरंगमैः ॥ रथनेमिनिकृत्ताश्चनिकृत्ताश्चपरश्वधैः ३५ व्याक्रोशंतनराराजंस्तत्रतत्रस्मबांधवान् ॥ पुत्रान
न्येपितॄनन्येभ्रातॄंश्चसहबंधुभिः ३६ मातुलान्भागिनेयांश्चपरानपिचसंयुगे ॥ विकीर्णांत्राःसुबहवोभग्नसक्थाश्चभारत ३७ बाहुभिश्चापरेछिन्नैःपार्श्वेषुचविदारिताः ॥
क्रंदन्तःसमदृश्यन्ततृषिताजीवितेप्सवः ३८ तृषापरिगताःकेचिदल्पसत्वाविशांपते ॥ भूमौनिपतिताःसंख्येमृगयांचक्रिरेजलम् ३९ रुधिरौघपरिक्लिन्नाःक्लिश्यमाना
श्चभारत ॥ व्यनिंदन्भृशमात्मानंतवपुत्रांश्चसंगतान् ४० अपरेक्षत्रियाःशूराःकृतवैराःपरस्परम् ॥ नैवशस्त्रंविमुंचंतिनैवक्रंदंतिमारिष ४१ तर्जयंतिचसंहृष्टास्तत्रत
त्रपरस्परम् ॥ आदश्यदशनैश्चापिक्रोधात्स्वरदनच्छदम् ४२ भ्रुकुटीकुटिलैर्वक्त्रैःप्रेक्षंतिचपरस्परम् ॥ अपरेक्लिश्यमानास्तुशरार्ताव्रणपीडिताः ४३ निष्कूजाःसमपद्यंत
दृढसत्वामहाबलाः ॥ अन्येचविरथाःशूरारथमन्यस्यसंयुगे ४४ प्रार्थयानानिपतिताःसंक्षुण्णावरवारणैः ॥ अशोभंतमहाराजसपुष्पाइवकिंशुकाः ४५ संबभूवुरने
केषुबहवोभैरवस्वनाः ॥ वर्तमानेमहाभीमेतस्मिन्वीरवरक्षये ४६ निजघानपितापुत्रंपुत्रश्चपितरंरणे ॥ स्वस्रीयोमातुलंचापिस्वस्रीयंचापिमातुलः ४७ सखासखायं
चतथासंबंधीबांधवंतथा ॥ एवंयुयुधिरेतत्रकुरवःपांडवैःसह ४८ वर्त्तमानेतथातस्मिन्निर्मर्यादेभयानके ॥ भीष्ममासाद्यपार्थानांवाहिनीसमकंपत ४९ केतुनापंच
तारेणतालेनभरतर्षभ ॥ राजतेनमहाबाहुरुच्छ्रितेनमहारथे ॥ बभौभीष्मस्तदाराजंश्चंद्रमाइवमेरुणा ५० ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मव० संकुलयुद्धे षट्च
त्वारिंशोध्यायः ॥ ४६ ॥ संजयउवाच ॥ गतपूर्वाह्णभूयिष्ठेतस्मिन्नहनिदारुणे ॥ वर्तमानेतथारौद्रेमहावीरवरक्षये १ दुर्मुखःकृतवर्माचकृपःशल्योविविंशतिः ॥
भीष्मंजुगुपुरासाद्यतवपुत्रेणचोदिताः २ एतैरतिरथैर्गुप्तःपंचभिर्भरतर्षभः ॥ पांडवानामनीकानिविजगाहेमहारथः ३

३८ तृषापिपासया अल्पसत्वाधैर्यवर्जिताः मृगयांचक्रिरेयाचंते ३९ । ४० । ४१ रदनच्छदमोष्ठं ४२ । ४३ निष्कूजानिःशब्दाः रथमन्यस्यगंतुंप्रार्थयानामध्येमार्गेनिपतिताइतियोज्यं ४४ । ४५ । ४६
४७ । ४८ । ४९ केतुनेतिसार्धः । अत्रचंद्रकेत्वोर्मेरुसरथभीष्मयोश्चोपमोपमेयभावः भीष्मस्यरुक्मरथत्वात् ५० ॥ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥
गतेति । गतोऽतीतःपूर्वाण्हस्यभूयिष्ठोभागोयस्मिन्नहनि १ । २ । ३

४ । ५ नृत्यतोनृत्यमिवकुर्वतः ६ पिशंगैःपिंगलैः ७ कर्णिकारेणकर्णिकारद्रुमोपमेन ८ अनुरथैःपार्ष्णिगोपादिभिः ९ । १० पूर्णायतविसृष्टेनआकर्णाकृष्टत्यक्तेन प्रणिहितेनप्रेरितेन ११ । १२ कार्तस्वरं

चेदिकाशिकरूषेषुपंचालेषुचभारत ॥ भीष्मस्यबहुधातालश्चलत्केतुरदृश्यत ४ सशिरांसिरणेऽरीणांरथांश्चसयुगध्वजान् ॥ निचकर्तमहावेगैर्भल्लैःसन्नतपर्वभिः ५
नृत्यतोरथमार्गेषुभीष्मस्यभरतर्षभ ॥ भृशमार्तस्वरंचक्रुर्नागामर्मणिताडिताः ६ अभिमन्युःसुसंक्रुद्धःपिशंगैस्तुरगोत्तमैः ॥ संयुक्तंरथमास्थायप्रायाद्भीष्मरथंप्रति ७
जांबूनदविचित्रेणकर्णिकारेणकेतुना ॥ अभ्यवर्ततभीष्मंचतांश्चैवरथसत्तमान् ८ सतालकेतोस्तीक्ष्णेनकेतुमाहत्यपत्रिणा ॥ भीष्मेणयुयुधेवीरस्तस्यचानुरथैःसह ९
कृतवर्माणमेकेनशल्यंपंचभिराशुगैः ॥ विद्ध्वानवभिरानर्च्छच्छिताग्रैःप्रपितामहम् १० पूर्णायतविसृष्टेनसम्यक्प्रणिहितेनच ॥ ध्वजमेकेनविव्याधजांबूनदपरिष्कृ
तम् ११ दुर्मुखस्यतुभल्लेनसर्वावरणभेदिना ॥ जहारसारथेःकायाच्छिरःसन्नतपर्वणा १२ धनुश्चिच्छेदभल्लेनकार्तस्वरविभूषितम् ॥ कृपस्यनिशिताग्रेणतांश्चतीक्ष्ण
मुखैःशरैः १३ जघानपरमक्रुद्धोनृत्यन्निवमहारथः ॥ तस्यलाघवमुद्वीक्ष्यतुतुषुर्देवताअपि १४ लब्धलक्षतयाकार्ष्णेःसर्वेभीष्ममुखारथाः ॥ सत्ववंतममन्यंतसाक्षादि
वधनंजयम् १५ तस्यलाघवमार्गस्थमलातसदृशप्रभम् ॥ दिशःपर्यपतच्चापंगांडीवमिवघोषवत् १६ तमासाद्यमहावेगैर्भीष्मोनवभिराशुगैः ॥ विव्याधसमरेतूर्णमा
र्जुनिंपरवीरहा १७ ध्वजंचास्यत्रिभिर्भल्लैश्चिच्छेदपरमौजसः ॥ सारथिंचत्रिभिर्बाणैराजघानयतव्रतः १८ तथैवकृतवर्माचकृपःशल्यश्चमारिषः ॥ विध्वानाकंपयत्का
र्ष्णिमैनाकमिवपर्वतम् १९ सतैःपरिवृतःशूरोधार्तराष्ट्रैर्महारथैः ॥ ववर्षशरवर्षाणिकार्ष्णिःपंचरथान्प्रति २० ततस्तेषांसहस्राणिसंवार्यशरवृष्टिभिः ॥ ननादबलवान्
कार्ष्णिर्भीष्मायविसृजन्शरान् २१ तत्रास्यसुमहद्राजन्बाह्वोर्बलमदृश्यत ॥ यतमानस्यसमरेभीष्ममर्दयतःशरैः २२ पराक्रांतस्यतस्यैवभीष्मोऽपिप्राहिणोच्छरान् ॥
सतांश्चिच्छेदसमरेभीष्मचापच्युतान्शरान् २३ ततोध्वजममोघेषुर्भीष्मस्यनवभिःशरैः ॥ चिच्छेदसमरेवीरस्ततउच्चुकुशुर्जनाः २४ सराजतोमहास्कंधस्तालोहेमविभू
षितः ॥ सौभद्रविशिखैश्छिन्नःपपातभुविभारत २५ तंतुसौभद्रविशिखैःपातितंभरतर्षभ ॥ दृष्ट्वाभीमोननादोच्चैःसौभद्रमभिहर्षयन् २६ अथभीष्मोमहास्त्राणिदिव्या
निसुबहूनिच ॥ प्रादुश्चक्रेमहारौद्रेरणेतस्मिन्महाबलः २७ ततःशरसहस्रेणसौभद्रंप्रपितामहः ॥ अवाकिरदमेयात्मातदद्भुतमिवाभवत् २८ ततोदशमहेष्वासाःपांड
वानांमहारथाः ॥ रक्षार्थमभ्यधावंतसौभद्रंत्वरितारथैः २९ विराटःसहपुत्रेणधृष्टद्युम्नश्चपार्षतः ॥ भीमश्चकेकयाश्चैवसात्यकिश्चविशांपते ३० तेषांजवेनापततांभीष्मः
शांतनवोरणे ॥ पांचाल्यंत्रिभिरानर्च्छत्सात्यकिंनवभिःशरैः ३१ पूर्णायतविसृष्टेनक्षुरेणनिशितेनच ॥ ध्वजमेकेनचिच्छेदभीमसेनस्यपत्रिणा ३२

सुवर्णं तान्सर्वान् १३ । १४ कार्ष्णेःअभिमन्योः सत्ववंतंबलवंतं १५ अलातसदृशप्रभंभ्राम्यमाणोल्मुकसमंमंडलाकारमित्यर्थः १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६
२७ । २८ । २९ पुत्रेणोत्तरेण ३० । ३१ । ३२

केसरीसिंहः ३३ । ३४ प्रगृहीताग्रहस्तेनकुंडलीकृतशुंडाग्रेण ३५ तस्यवेगमितिसंबंधः रथेरथोपरि ३६ तस्यशल्यस्य बृहतःपुष्टान् साधुवाहिनःसम्यगूहनशीलान् ३७ । ३८ तमःमोहं प्रमुक्तंहस्ताद्गलितमंकुशा

जांबूनदमयःश्रीमान्केसरीसनरोत्तम ॥ पपातभीमसेनस्यभीष्मेणमथितोरथात् ३३ ततोभीमस्त्रिभिर्विद्ध्वाभीष्मंशांतनवंरणे ॥ कृपमेकेनविव्याधकृतवर्माणमष्टभिः
३४ प्रगृहीताग्रहस्तेनवैराटिरपिदंतिना ॥ अभ्यद्रवतराजानंमद्राधिपतिमुत्तरः ३५ तस्यवारणराजस्यजवेनापततोरथे ॥ शल्योनिवारयामासवेगमप्रतिमंशरैः ३६
तस्यक्रुद्धःसनागेन्द्रोबृहतःसाधुवाहिनः ॥ पदायुगमधिष्ठायजघानचतुरोहयान् ३७ सहताश्वेरथेतिष्ठन्मद्राधिपतिसायसीम् ॥ उत्तरांतकरींशक्तिंचिक्षेपभुजगोपमाम्
३८ तयाभिन्नतनुत्राणःप्रविश्यविपुलंतमः ॥ सपपातगजस्कंधात्प्रमुक्तांकुशतोमरः ३९ असिमादायशल्योऽपिअवप्लुत्यरथोत्तमात् ॥ तस्यवारणराजस्यचिच्छेदाथ
महाकरम् ४० भिन्नमर्मांशरशतैश्छिन्नहस्तःसवारणः ॥ भीममार्तस्वरंकृत्वापपातचममारच ४१ एतदीदृशकंकृत्वामद्रराजोनराधिप ॥ आरुरोहरथंतूर्णंभास्वरंकृत
वर्मणः ४२ उत्तरंनिहतंदृष्ट्वावैराटिर्भ्रातरंतदा ॥ कृतवर्मणाचसहितंदृष्ट्वाशल्यमवस्थितम् ४३ श्वेतःक्रोधात्प्रजज्वालहविषाहव्यवाडिव ॥ सविस्फार्यमहच्चापंशक्रचापो
पमंबली ४४ अभ्यधावज्जिघांसन्वैशल्यंमद्राधिपंबली ॥ महतारथवंशेनसमंतात्परिवारितः ४५ मुंचन्बाणमयंवर्षंप्रायाच्छल्यरथंप्रति ॥ तमापतंतंसंप्रेक्ष्यमत्तवार
णविक्रमम् ४६ तावकानांरथाःसप्तसमंतात्पर्यवारयन् ॥ मद्रराजमभीप्संतोमृत्योर्दंष्ट्रांतरंगतम् ४७ बृहद्बलश्चकौसल्योजयत्सेनश्चमागधः ॥ तथारुक्मरथोराजन्
शल्यपुत्रःप्रतापवान् ४८ विंदानुविंदावावंत्यौकांबोजश्चसुदक्षिणः ॥ बृहत्क्षत्रस्यदायादःसैन्धवश्चजयद्रथः ४९ नानावर्णविचित्राणिधनूंषिचमहात्मनाम् ॥ विस्फा
रितानिदृश्यंतेतोयदेष्विवविद्युतः ५० तेतुबाणमयंवर्षंश्वेतमूर्धन्यपातयन् ॥ निदाघांतेऽनिलोद्भूतामेघाइवनगेजलम् ५१ ततःक्रुद्धोमहेष्वासःसप्तभल्लैःसुतेजनैः ॥
धनूंषितेषामाच्छिद्यममर्दपृतनापतिः ५२ निकृत्तान्येवतानिस्मसमदृश्यंतभारत ॥ ततस्तेतुनिमेषार्धात्प्रत्यपद्यन्धनूंषिच ५३ सप्तचैवपृषत्कांश्चश्वेतस्योपर्यपातयन् ॥
ततःपुनरमेयात्माभल्लैःसप्तभिराशुगैः ॥ निचकर्तमहाबाहुस्तेषांचापानिधन्विनाम् ५४ तेनिकृत्तमहाचापास्त्वरमाणामहारथाः ॥ रथशक्तीःपरामृश्यविनेदुर्भैरवान्
रवान् ५५ अन्वयुर्भरतश्रेष्ठसप्तश्वेतरथंप्रति ॥ ततस्ताज्ज्वलिताःसप्तमहेंद्राशनिनिःस्वनाः ५६ अप्राप्ताःसप्तभिर्भल्लैश्चिच्छेदपरमास्त्रवित् ॥ ततःसमादायशरं
सर्वकायविदारणम् ५७ प्राहिणोद्भरतश्रेष्ठश्वेतोरुक्मरथंप्रति ॥ तस्यदेहेनिपतितोबाणोवज्रातिगोमहान् ५८ ततोरुक्मरथोराजन्सायकेनदृढाहतः ॥ निषसादरथो
पस्थेकश्मलंचाविशन्महत् ५९ तंविसंज्ञंविमनसंत्वरमाणस्तुसारथिः ॥ अपोवाहनसंभ्रांतःसर्वलोकस्यपश्यतः ६० ततोऽन्यान्षट्समादायश्वेतोहेमविभूषितान् ॥
तेषांषण्णांमहाबाहुर्ध्वजशीर्षाण्यपातयत् ६१

दिकंयस्य ३९ । ४० । ४१ । ४२ हतंशक्तिप्रहारेण वैराटिःशंखः ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१

६२ । ६३ । ६४ । ६५ । ६६ । ६७ ॥ इतिश्री० नीलकंठीये भारतभावदीपे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

हयांश्वतेषांनिर्भिद्यसारथींश्चपरंतप ॥ शरैश्वेतान्समाकीर्यप्रायाच्छल्यरथंप्रति ६२ ततोहलहलाशब्दस्तवसैन्येषुभारत ॥ दृष्ट्वासेनापतिंतूर्णंयांतंशल्यरथं
प्रति ६३ ततोभीष्मंपुरस्कृत्यतवपुत्रोमहाबलः ॥ वृतस्तुसर्वसैन्येनप्रायाच्छ्वेतरथंप्रति ६४ मृत्योरास्यमनुप्राप्तंमद्रराजममोचयत् ॥ ततोयुद्धंसमभवत्तुमुलं
लोमहर्षणम् ६५ तावकानांपरेषांचव्यतिषक्तरथद्विपम् ॥ सौभद्रेभीमसेनेचसात्यकौचमहारथे ६६ कैकेयेचविराटेचधृष्टद्युम्नेचपार्षते ॥ एतेषुनरसिंहेषुचेदिम
त्स्येषुचैवह ॥ ववर्षशरवर्षाणिकुरुवृद्धःपितामहः ६७ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मव० श्वेतयुद्धेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ ॥
॥ धृतराष्ट्रउवाच ॥ एवंश्वेतेमहेष्वासेप्राप्तेशल्यरथंप्रति ॥ कुरवःपांडवेयाश्वकिमकुर्वतसंजय १ भीष्मःशांतनवःकिंवातन्ममाचक्ष्वपृच्छतः ॥ संजयउवाच ॥
राजन्शतसहस्राणिततःक्षत्रियपुंगवाः २ श्वेतंसेनापतिंशूरंपुरस्कृत्यमहारथाः ॥ राज्ञोबलंदर्शयंतस्तवपुत्रस्यभारत ३ शिखंडिनंपुरस्कृत्यत्रातुमैच्छन्महा
रथाः ॥ अभ्यवर्तंतभीष्मस्यरथंहेमपरिष्कृतम् ४ जिघांसंतंयुधांश्रेष्ठंतदाऽऽसीत्तुमुलंमहत् ॥ तत्तेऽहंसंप्रवक्ष्यामिमहावैशसमच्युत ५ तावकानांपरेषांचयथा
युद्धमवर्तत ॥ तत्राकरोद्रथोपस्थान्शून्यान्शांतनवोबहून् ६ तत्राद्भुतंमहच्चक्रेशरैरार्छद्रथोत्तमान् ॥ समावृणोच्छरैरर्कमर्कतुल्यप्रतापवान् ७ नुदन्समंतात्सम
रेरविरुद्यन्यथातमः ॥ तेनाजौप्रेषिताराजन्शराःशतसहस्रशः ८ क्षत्रियांतकराःसंख्येमहावेगामहाबलाः ॥ शिरांसिपातयामासुर्वीराणांशतशोरणे ९ गजान्कं
टकसन्नाहान्वज्रेणेवशिलोच्चयान् ॥ रथारथेषुसंसक्ताव्यदृश्यंतविशांपते १० एकेरथंपर्यवहंस्तुरगाःसतुरंगमम् ॥ युवानंनिहतंवीरंलंबमानंसकार्मुकम् ११
उदीर्णाश्चहयाराजन्वहंतस्तत्रतत्रह ॥ बद्धखड्गनिषंगाश्चविध्वस्तशिरसोहताः १२ शतशःपतिताभूमौवीरशय्यासुशेरते ॥ परस्परेणधावंतःपतिताःपुनरुत्थिताः
१३ उत्थायचप्रधावंतोद्वंद्वयुद्धमवाप्नुवन् ॥ पीडिताःपुनरन्योन्यंलुठंतोरणमूर्धनि १४ सचापाःसनिषंगाश्चजातरूपपरिष्कृताः ॥ विस्रब्धहतवीराश्चशतशः
परिपीडिताः १५ तेनतेनाभ्यधावंतविसृजंतश्चभारत ॥ मत्तोगजःपर्यवर्तद्धयांश्चहतसादिनः १६ सरथारथिनश्चापिविमृद्नंतःसमंततः ॥ स्यंदनादपतत्कश्चिन्नि
हतोऽन्येनसायकैः १७ हतसारथिरप्युच्चैःपपातकाष्ठवद्रथः ॥ युध्यमानस्यसंग्रामेव्यूढेरजसिचोत्थिते १८ धनुःकूजितविज्ञानंतत्रासीत्प्रतियुद्ध्यतः ॥ गात्र
स्पर्शेनयोधानांव्यज्ञास्तपरिपंथिनम् १९ युद्ध्यमानंशरैराजन्सिंजिनीध्वजिनीरवात् ॥ अन्योन्यंवीरसंशब्दोनाश्रूयतभटैःकृतः २० शब्दायमानेसंग्रामेपटहे
कर्णदारिणि ॥ युध्यमानस्यसंग्रामेकुर्वतःपौरुषंस्वकम् २१ नाश्रौषंनामगोत्राणिकीर्तनंचपरस्परम् ॥ भीष्मचापच्युतैर्बाणैरार्तानांयुद्धतांमृधे २२ परस्परे
षांवीराणांमनांसिसमकंपयन् ॥ तस्मिन्नत्याकुलेयुद्धेदारुणेलोमहर्षणे २३ पितापुत्रंचसमरेनाभिजानातिकश्चन ॥ चक्रेभग्नेयुगेच्छिन्नेएकधुर्येहयेहतः २४

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

आक्षिप्तःस्यंदनाद्वीरःससारथिरजिह्मगैः ॥ एवंचसमरेसर्वेवीराश्चविरथीकृताः २५ तेनतेनस्मदृश्यंतेधावमानाःसमंततः ॥ गजोहतःशिरश्छिन्नंमर्मभिन्नंहयोह
तः २६ अहतःकोऽपिनैवासीद्भीष्मेनिघ्नतिशात्रवान् ॥ श्वेतःकुरूणामकरोत्क्षयंतस्मिन्महाहवे २७ राजपुत्रान्रथोदारानवधीच्छतसंघशः ॥ चिच्छेदरथि
नांबाणैःशिरांसिभरतर्षभ २८ सांगदाबाहवश्चैवधनूंषिचसमंततः ॥ रथेषांरथचक्राणितूणीराणियुगानिच २९ छत्राणिचमहार्हाणिपताकाश्चविशांपते ॥ हयौघाश्च
रथौघाश्चनरौघाश्चैवभारत ३० वारणाःशतशश्चैवहताःश्वेतेनभारत ॥ वयंश्वेतभयाद्भीताविहायरथसत्तमम् ३१ अपयातास्तथापश्चाद्विभुंषश्यामधृष्णवः ॥ शर
पातमतिक्रम्यकुरवःकुरुनंदन ३२ भीष्मंशांतनवंयुद्धेस्थिताःपश्यामसर्वशः ॥ अदीनोदीनसमयेभीष्मोऽस्माकंमहाहवे ३३ एकस्तस्थौनरव्याघ्रोगिरिर्मेरुरिवा
चलः ॥ आददानइवप्राणान्सविताशिशिरात्यये ३४ गभस्तिभिरिवादित्यस्तस्थौशरमरीचिमान् ॥ समुमोचमहेष्वासःशरसंघाननेकशः ३५ निघ्नन्नमित्रान्
समरेवज्रपाणिरिवासुरान् ॥ तेवध्यमानाभीष्मेणप्रजहुस्तंमहाबलम् ३६ स्वयूथादिवतेयूथान्मुक्तंभूमिपुदारुणम् ॥ तमेवमुपलक्ष्यैकोहृष्टःपुष्टःपरंतप ३७
दुर्योधनप्रियेयुक्तःपांडवान्परिशोचयन् ॥ *जीवितंदुस्त्यजंत्यक्त्वाभयंचसुमहाहवे ३८ पातयामाससैन्यानिपांडवानांविशांपते ॥ प्रहरंतमनीकानिपितादेव
व्रतस्तव ३९ दृष्ट्वासेनापतिंभीष्मस्त्वरितःश्वेतमभ्ययात् ॥ सभीष्मंशरजालेनमहतासमवाकिरत् ४० श्वेतंचापितथाभीष्मःशरौघैःसमवाकिरत् ॥ तौवृषा
विवनर्दन्तौमत्ताविवमहाद्विपौ ४१ व्याघ्राविवसुसंरब्धावन्योन्यमभिजघ्नतुः ॥ अस्त्रैरस्त्राणिसंवार्यततस्तौपुरुषर्षभौ ४२ भीष्मःश्वेतश्चयुयुधेपरस्परवधैषिणौ ॥
एकाह्नानिर्दहेद्भीष्मःपांडवानामनीकिनीम् ४३ शरैःपरमसंक्रुद्धोयदिश्वेतोनपालयेत् ॥ पितामहंततोदृष्ट्वाश्वेतेनविमुखीकृतम् ४४ प्रहर्षंपांडवाजग्मुःपुत्रस्तेवि
मनाभवत् ॥ ततोदुर्योधनःक्रुद्धःपार्थिवैःपरिवारितः ४५ ससैन्यःपांडवानीकमभ्यद्रवतसंयुगे ॥ दुर्मुखःकृतवर्माचकृपःशल्योविशांपतिः ४६ भीष्मंजुगुपुरा
साद्यतवपुत्रेणनोदिताः ॥ दृष्ट्वातुपार्थिवैःसर्वैर्दुर्योधनपुरोगमैः ४७ पांडवानामनीकानिवध्यमानानिसंयुगे ॥ श्वेतोगांगेयमुत्सृज्यतवपुत्रस्यवाहिनीम् ४८
नाशयामासवेगेनवायुर्वृक्षानिवौजसा ॥ द्रावयित्वाचमूंराजन्वैराटिःक्रोधमूर्च्छितः ४९ आपतत्सहसाभूयोयत्रभीष्मोव्यवस्थितः ॥ तौतत्रोपगतौराजन्शरदी
प्तौमहाबलौ ५० अयुध्येतांमहात्मानौयथोभौवृत्रवासवौ ॥ अन्योन्यंतुमहाराजपरस्परवधैषिणौ ५१ निगृह्यकार्मुकंश्वेतोभीष्मंविव्याधसप्तभिः ॥ पराक्रमं
ततस्तस्यपराक्रम्यपराक्रमी ५२ तरसावारयामासमत्तोमत्तमिवद्विपम् ॥ श्वेतःशांतनवंभूयःशरैःसन्नतपर्वभिः ५३ विव्याधपंचविंशत्यातदद्भुतमिवाभवत् ॥ 
तंप्रत्यविध्यद्दशभिर्भीष्मःशांतनवस्तदा ५४

सविद्धस्तेनबलवान्नाकंपतयथाऽचलः ।। वैराटिःसमरेक्रुद्धोभृशमायम्यकार्मुकम् ५५ आजघानततोभीष्मंश्वेतःक्षत्रियनंदनः ।। संप्रहस्यततःश्वेतःसृक्किणीपरिसंलि
हन् ५६ धनुश्चिच्छेदभीष्मस्यनवभिर्दशधाशरैः ।। संधायविशिखंचैवशरंलोमप्रवाहिनम् ५७ उन्ममाथततस्तालंध्वजशीर्षमहात्मनः ।। केतुंनिपतितंदृष्ट्वाभीष्मस्य
तनयास्तव ५८ हतंभीष्मममन्यंतश्वेतस्यवशमागतम् ।। पांडवाश्चापिसंहृष्टादध्मुःशंखान्मुदायुताः ५९ भीष्मस्यपतितंकेतुंदृष्ट्वातालंमहात्मनः ।। ततोदुर्योधनःक्रो
धात्स्वमनीकमनोदयत् ६० यत्ताभीष्मंपरीप्सध्वंरक्षमाणाःसमंततः ।। मानःप्रपश्यमानानांश्वेतान्मृत्युमवाप्स्यति ६१ भीष्मःशांतनवःशूरस्तथासत्यंब्रवीमिवः ।।
राज्ञस्तुवचनंश्रुत्वात्वरमाणामहारथाः ६२ बलेनचतुरंगेणगांगेयमन्वपालयन् ।। बाल्हीकःकृतवर्माचशलःशल्यश्चभारत ६३ जलसंधोविकर्णश्चचित्रसेनोविविंशतिः ।।
त्वरमाणास्त्वराकालेपरिवार्यसमन्ततः ६४ शस्त्रवृष्टिंसुतुमुलांश्वेतस्योपर्यपातयन् ।। तान्क्रुद्धोनिशितैर्बाणैस्त्वरमाणोमहारथः ६५ अवारयदमेयात्मादर्शयन्पाणि
लाघवम् ।। सनिवार्यतुतान्सर्वान्केसरीकुंजरानिव ६६ महताशरवर्षेणभीष्मस्यधनुराच्छिनत् ।। ततोऽन्यद्धनुरादायभीष्मःशांतनवोयुधि ६७ श्वेतंविव्याधराजेन्द्र
कंकपत्रैःशितैःशरैः ।। ततःसेनापतिःक्रुद्धोभीष्मंबहुभिरायसैः ६८ विव्याधसमरेराजन्सर्वलोकस्यपश्यतः ।। ततःप्रव्यथितोराजाभीष्मंदृष्ट्वानिवारितम् ६९ प्रवी
रंसर्वलोकस्यश्वेतेनयुधिवैतदा ।। निष्ठानकश्चसुमहांस्तवसैन्यस्यचाभवत् ७० तंवीरंवारितंदृष्ट्वाश्वेतेनशरविक्षतम् ।। हतंश्वेतेनमन्यंतेश्वेतस्यवशमागतम् ७१ ततः
क्रोधवशंप्राप्तःपितादेवव्रतस्तव ।। ध्वजमुन्मथितंदृष्ट्वातांचसेनांनिवारिताम् ७२ श्वेतंप्रतिमहाराजव्यसृजत्सायकान्बहून् ।। तानावार्यरणेश्वेतोभीष्मस्यरथिनांवरः
७३ धनुश्चिच्छेदभल्लेनपुनरेवपितुस्तव ।। उत्सृज्यकार्मुकंराजन्गांगेयःक्रोधमूर्च्छितः ७४ अन्यत्कार्मुकमादायविपुलंबलवत्तरम् ।। तत्रसंधायविपुलान्भल्लान्सप्त
शिलाशितान् ७५ चतुर्भिश्चजघानाश्वान्श्वेतस्यपृतनापतेः ।। ध्वजंद्वाभ्यांतुचिच्छेदसप्तमेनचसारथेः ७६ शिरश्चिच्छेदभल्लेनसंक्रुद्धोऽलघुविक्रमः ।। हताश्वसूता
त्सरथादवप्लुत्यमहाबलः ७७ आमर्षवशमापन्नोव्याकुलःसमपद्यत ।। विरथंरथिनांश्रेष्ठंश्वेतंदृष्ट्वापितामहः ७८ ताडयामासनिशितैःशरसंघैःसमंततः ।। सताड्यमानः
समरेभीष्मचापच्युतैःशरैः ७९ स्वरथेधनुरुत्सृज्यशक्तिंजग्राहकांचनीम् ।। ततःशक्तिंरणेश्वेतोजग्राहोग्रांमहाभयाम् ८० कालदंडोपमांघोरांमृत्योर्जिह्वामिवश्वसन् ।।
अब्रवीच्चतदाश्वेतोभीष्मंशांतनवंरणे ८१ तिष्ठेदानींसुसंरब्धःपश्यमांपुरुषोभव ।। एवमुक्त्वामहेष्वासोभीष्मंयुधिपराक्रमी ८२ ततःशक्तिममेयात्माचिक्षेपभुजगोप
माम् ।। पांडवार्थेपराक्रांतस्तवानर्थंचिकीर्षुकः ८३ हाहाकारोमहानासीत्पुत्राणांतेविशांपते ।। दृष्ट्वाशक्तिंमहाघोरांमृत्योर्दण्डसमप्रभाम् ८४

॥ ८१ ॥ श्वेतस्यकरनिर्मुक्तांनिर्मुक्तोरगसन्निभाम् ॥ अपतत्सहसाराजन्महोल्केवनभस्तलात् ८५ ज्वलंतीमंतरिक्षेतांज्वालाभिरिवसंवृताम् ॥ असंभ्रांतस्तदाराजन्पितादेवव्रत
स्तव ८६ अष्टभिर्नवभिर्भीष्मःशक्तिंचिच्छेदपत्रिभिः ॥ उत्कृष्टहेमविकृतांनिकृतांनिशितैःशरैः ८७ उच्चुक्रुशुस्ततःसर्वेतावकाभरतर्षभ ॥ शक्तिंविनिहतांदृष्ट्वावैराटिः
क्रोधमूर्च्छितः ८८ कालोपहतचेतास्तुकर्तव्यंनाभ्यजानत ॥ क्रोधसंमूर्च्छितोराजन्वैराटिःप्रहसन्निव ८९ गदांजग्राहसंहृष्टोभीष्मस्यनिधनंप्रति ॥ क्रोधेनरक्तन
यनोदंडपाणिरिवांतकः ९० भीष्मंसमभिदुद्रावजलौघइवपर्वतम् ॥ तस्यवेगमसंवार्यंमत्वाभीष्मःप्रतापवान् ९१ प्रहारविप्रमोक्षार्थंसहसाधरणींगतः ॥ श्वेतःक्रोधस
माविष्टोभ्रामयित्वातुतांगदाम् ९२ रथेभीष्मस्यचिक्षेपयथादेवोधनेश्वरः ॥ तयाभीष्मनिपातिन्यासरथोभस्मसात्कृतः ९३ सध्वजःसहसूतेनसाश्वःसयुगबंधुरः ॥
विरथंरथिनांश्रेष्ठंभीष्मंदृष्ट्वारथोत्तमाः ९४ अभ्यधावंतसहिताःशल्यप्रभृतयोरथाः ॥ ततोऽन्यंरथमास्थायधनुर्विस्फार्यदुर्मनाः ९५ शनकैरभ्ययाच्छ्वेतंगांगेयःप्रहस
न्निव ॥ एतस्मिन्नंतरेभीष्मःशुश्रावविपुलांगिरम् ९६ आकाशादीरितांदिव्यामात्मनोहितसंभवाम् ॥ भीष्मभीष्ममहाबाहोशीघ्रंयत्नंकुरुष्ववै ९७ एषह्यस्यजयेकालो
निर्दिष्टोविश्वयोनिना ॥ एतच्छ्रुत्वातुवचनंदेवदूतेनभाषितम् ९८ संप्रहृष्टमनाभूत्वावधेतस्यमनोदधे ॥ विरथंरथिनांश्रेष्ठंश्वेतंदृष्ट्वापदातिनम् ९९ सहितास्त्वभ्यवर्त्त
तपरीप्संतोमहारथाः ॥ सात्यकिर्भीमसेनश्चधृष्टद्युम्नश्चपार्षतः १०० कैकेयोधृष्टकेतुश्चअभिमन्युश्चवीर्यवान् ॥ एतानापततःसर्वान्द्रोणशल्यकृपैःसह १ अवारयद
मेयात्मावारिवेगानिवाचलः ॥ सनिरुद्धेषुसर्वेषुपांडवेषुमहात्मसु २ श्वेतःखड्गमथाकृष्यभीष्मस्यधनुराच्छिनत् ॥ तदपास्यधनुश्छिन्नंत्वरमाणःपितामहः ३ देवदू
तवचःश्रुत्वावधेतस्यमनोदधे ॥ ततःप्रचरमाणस्तुपितादेवव्रतस्तव ४ अन्यत्कार्मुकमादायत्वरमाणोमहारथः ॥ क्षणेनसज्यमकरोच्छक्रचापसमप्रभम् ५ पितातेभर
तश्रेष्ठश्वेतंदृष्ट्वामहारथैः ॥ वृतंतंमनुजव्याघ्रैर्भीमसेनपुरोगमैः ६ अभ्यवर्ततगांगेयःश्वेतंसेनापतिंद्रुतम् ॥ आपतंतंततोभीष्मोभीमसेनंप्रतापवान् ७ आजघ्नेविशिखैः
षष्ट्यासेनान्यंसमहारथः ॥ अभिमन्युंचसमरेपितादेवव्रतस्तव ८ आजघ्नेभरतश्रेष्ठस्त्रिभिःसन्नतपर्वभिः ॥ सात्यकिंचशतेनाजौभरतानांपितामहः ९ धृष्टद्युम्नंचविं
शत्याकैकेयंचापिपंचभिः ॥ तांश्चसर्वान्महेष्वासान्पितादेवव्रतस्तव ११० वारयित्वाशरैर्घोरैःश्वेतमेवाभिदुद्रुवे ॥ ततःशरंमृत्युसमंभारसाधनमुत्तमम् ११ विकृ
ष्यबलवान्भीष्मःसमाधत्तदुरासदम् ॥ ब्रह्मास्त्रेणसुसंयुक्तंतंशरंलोमवाहिनम् १२ ददृशुर्देवगंधर्वाःपिशाचोरगराक्षसाः ॥ सतस्यकवचंभित्वाहृदयंचामितौजसः १३
जगामधरणींबाणोमहाशनिरिवज्वलन् ॥ अस्तंगच्छन्यथादित्यःप्रभामादायसत्वरः १४ एवंजीवितमादायश्वेतदेहाज्जगामह ॥ तंभीष्मेणनरव्याघ्रंतथावि ॥ ८१ ॥
निहतंयुधि ११५

१५५

१६ । १७ । १८ । १९ । २० । १२१ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेअष्टाचत्वारिंशोध्यायः ॥ ४८ ॥ श्वेतइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

प्रपतंतमपश्यामगिरेःशृंगमिवच्युतम् ॥ अशोचन्पांडवास्तत्रक्षत्रियाश्चमहारथाः १६ प्रहृष्टाश्चसुतास्तुभ्यंकुरवश्चापिसर्वशः ॥ ततोदुःशासनोराजन्श्वेतंदृ
ष्ट्वानिपातितम् १७ वादित्रनिनदैर्घोरैर्नृत्यतिस्मसमन्ततः ॥ तस्मिन्हतेमहेष्वासेभीष्मेणाहवशोभिना १८ प्रावेपंतमहेष्वासाःशिखंडिप्रमुखारथाः ॥ ततोधनं
जयोराजन्वार्ष्णेयश्चापिसर्वशः १९ अवहारंशनैश्चक्रुर्निहतेवाहिनीपतौ ॥ ततोऽवहारःसैन्यानांतवतेषांचभारत २० तावकानांपरेषांचनर्दतांचमुहुर्मुहुः ॥ पा
र्थाविमनसोभूत्वान्यवर्ततमहारथाः ॥ चिंतयंतोवधंघोरंद्वैरथेनपरंतपाः १२१ ॥ इतिश्रीम० भीष्मपर्वणिभीष्मव० श्वेतवधेअष्टाचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ धृतराष्ट्रउवाच ॥ श्वेतेसेनापतौतातसंग्रामेनिहतेपरैः ॥ किमकुर्वन्महेष्वासाःपंचालाःपांडवैःसह १ सेनापतिंसमाकर्ण्यश्वेतंयुधिनिपातितम् ॥ तदर्थंय
ततांचापिपरेषांप्रपलायिनाम् २ मनःप्रीणातिमेवाक्यंजयंसंजयशृण्वतः ॥ प्रत्युपायंचिन्तयंतःसज्जनाःप्रस्रवंतिमे ३ सहिवीरोऽनुरक्तश्चवृद्धःकुरुपतिस्तदा ॥
कृतंवैरंसदातेनपितुःपुत्रेणधीमता ४ तस्योद्वेगभयाच्चापिसंश्रितःपांडवान्पुरा ॥ सर्वंबलंपरित्यज्यदुर्गंसंश्रित्यतिष्ठति ५ पांडवानांप्रतापेनदुर्गंदेशंनिवेश्यच ॥
सपत्नान्सततंबाधन्नार्यवृत्तिमनुष्ठितः ६ आश्चर्यंवैसदातेषांपुराराज्ञांसुदुर्मतिः ॥ ततोयुधिष्ठिरेभक्तःकथंसंजयसूदितः ७ प्रक्षिप्तःसंमतःक्षुद्रःपुत्रोमेपुरुषाधमः ॥
नयुद्धंरोचयेद्भीष्मोनचाचार्यःकथंचन ८ नकृपोनचगांधारीनाहंसंजयरोचये ॥ नवासुदेवोवार्ष्णेयोधर्मराजश्चपांडवः ९ नभीमोनार्जुनश्चैवनयमौपुरुषर्षभौ ॥
वार्यमाणोमयानित्यंगांधार्याविदुरेणच १० जामदग्न्येनरामेणव्यासेनचमहात्मना ॥ दुर्योधनोयुध्यमानोनित्यमेवहिसंजय ११ कर्णस्यमतमास्थायसौबल
स्यचपापकृत् ॥ दुःशासनस्यचतथापांडवानन्वचिंतयत् १२ तस्याहंव्यसनंघोरंमन्येप्राप्तंतुसंजय ॥ श्वेतस्यचविनाशेनभीष्मस्यविजयेनच १३ संक्रुद्धःकृष्णस
हितःपार्थःकिमकरोद्युधि ॥ अर्जुनाद्धिभयंभूयस्तन्मेताताननशाम्यति १४ सहिशूरश्चकौन्तेयःक्षिप्रकारीधनंजयः ॥ मन्येशरैःशरीराणिशत्रूणांप्रमथिष्यति १५ ऐ
न्द्रिमिंद्रानुजसमंमहेन्द्रसदृशंबले ॥ अमोघक्रोधसंकल्पंदृष्ट्वावःकिमभून्मनः १६ तथैववेदविच्छूरोज्वलनार्कसमद्युतिः ॥ इंद्रास्त्रविदमेयात्माप्रपतन्समितिंजयः १७
वज्रसंस्पर्शरूपाणामस्त्राणांचप्रयोजकः ॥ सखड्गाक्षेपहस्तस्तुघोषंचक्रेमहारथः १८ ससंजयमहाप्राज्ञोद्रुपदस्यात्मजोबली ॥धृष्टद्युम्नःकिमकरोच्छ्वेतेयुधिनिपातिते १९
पुराचैवापराधेनवधेनचचमूपतेः ॥ मन्येमनःप्रजज्वालपांडवानांमहात्मनाम् २० तेषांक्रोधंचिन्तयंस्तुअहःसुचनिशासुच ॥ नशांतिमधिगच्छामिदुर्योधनकृते
नहि ॥ कथंचाभून्महायुद्धंसर्वमाचक्ष्वसंजय २१ ॥ संजयउवाच ॥ शृणुराजन्स्थिरोभूत्वातवापनयनोमहान् ॥ नचदुर्योधनेदोषमिममाधातुमर्हसि २२

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२

गतोदकेसेतुबंधोयादृक्ताद्दृङ्गतिस्तव ॥ संदीप्तेभवनेयद्वत्कूपस्यखननंतथा २३ गतपूर्वाह्णभूयिष्ठेतस्मिन्नहनिदारुणे ॥ तावकानांपरेषांचपुनर्युद्धमवर्तत २४
श्वेतंतुनिहतंदृष्ट्वाविराटस्यचमूपतिम् ॥ कृतवर्मणाचसहितंदृष्ट्वाशल्यमवस्थितम् २५ शंखःक्रोधात्प्रजज्वालहविषाहव्यवाडिव ॥ सविस्फार्यमहच्चापंशक्रचा
पोपमंबली २६ अभ्यधावज्जिघांसन्वैशल्यंमद्राधिपंयुधि ॥ महतारथसंघेनसमंतात्परिरक्षितः २७ सृजन्बाणमयंवर्षंप्रायाच्छल्यरथंप्रति ॥ तमापतंतंसंप्रे
क्ष्यमत्तवारणविक्रमम् २८ तावकानांरथाःसप्तसमंतात्पर्यवारयन् ॥ मद्रराजंपरीप्संतोमृत्योर्दंष्ट्रांतरंगतम् २९ बृहद्बलश्चकौसल्योजयत्सेनश्चमागधः ॥ तथा
रुक्मरथोराजन्पुत्रःशल्यस्यमानितः ३० विंदानुविंदावावंत्यौकांबोजश्चसुदक्षिणः ॥ बृहत्क्षत्रस्यदायादःसैन्धवश्चजयद्रथः ३१ नानाधातुविचित्राणिकार्मुकाणि
महात्मनाम् ॥ विस्फारितान्यदृश्यंततोदयेष्विवविद्युतः ३२ तेतुबाणमयंवर्षंशंखमूर्ध्निन्यपातयन् ॥ निदाघांतेऽनिलोद्भूतामेघाइवनगेजलम् ३३ ततःक्रुद्धो
महेष्वासःसप्तभल्लैःसुतेजनैः ॥ धनूंषितेषामाच्छिद्यननर्दपृतनापतिः ३४ ततोभीष्मोमहाबाहुर्विनद्यजलदोयथा ॥ तालमात्रंधनुर्गृह्यशंखमभ्यद्रवद्रणे ३५
तमुद्यंतमुदीक्ष्याथमहेष्वासंमहाबलम् ॥ संत्रस्तापांडवीसेनावातवेगहतेवनौः ३६ ततोऽर्जुनःसंत्वरितःशंखस्यासीत्पुरःसरः ॥ भीष्माद्रक्ष्योऽयमद्येतिततो
युद्धमवर्तत ३७ हाहाकारोमहानासीद्योधानांयुधियुध्यताम् ॥ तेजस्तेजसिसंपृक्तमित्येवंविस्मयंययुः ३८ अथशल्योगदापाणिरवतीर्यमहारथात् ॥ शंख
स्यचतुरोवाहानहनद्भरतर्षभ ३९ सहताश्वाद्रथात्तूर्णंखड्गमादायविद्रुतः ॥ बीभत्सोश्चरथंप्राप्यपुनःशांतिमविंदत ४० ततोभीष्मरथात्तूर्णमुत्पतंतिपतत्रिणः ॥
यैरंतरिक्षंभूमिश्चसर्वतःसमवस्तृता ४१ पंचालानथमत्स्यांश्चकेकयांश्चप्रभद्रकान् ॥ भीष्मःप्रहरतांश्रेष्ठःपातयामासपत्रिभिः ४२ उत्सृज्यसमरेराजन्पांडवं
सव्यसाचिनम् ॥ अभ्यद्रवतपांचाल्यंद्रुपदंसेनयावृतम् ४३ प्रियंसंबंधिनंराजन्शरानवकिरन्बहून् ॥ अग्निनेवप्रदग्धानिवनानिशिशिरात्यये ४४ शरद
ग्धान्यदृश्यंतसैन्यानिद्रुपदस्यह ॥ अत्यतिष्ठद्रणेभीष्मोविधूमइवपावकः ४५ मध्यंदिनेयथाऽऽदित्यंतपंतमिवतेजसा ॥ नशेकुःपांडवेयस्ययोधाभीष्मंनि
रीक्षितुम् ४६ वीक्षांचक्रुःसमंतात्तेपांडवाभयपीडिताः ॥ त्रातारंनाध्यगच्छंतगावःशीतार्दिताइव ४७ सातुयौधिष्ठिरीसेनागांगेयशरपीडिता ॥ सिंहेनेव
विनिर्भिन्नाशुक्लागौरिवगोपतेः ४८ हतेविप्रद्रुतेसैन्येनिरुत्साहेविमर्दिते ॥ हाहाकारोमहानासीत्पांडुसैन्येषुभारत ४९ ततोभीष्मःशांतनवोनित्यंमंडलका
र्मुकः ॥ मुमोचबाणान्दीप्ताग्रानहीनाशीविषानिव ५० शरैरेकायनींकुर्वन्दिशःसर्वायतव्रतः ॥ जघानपांडवरथानादिश्यादिश्यभारत ५१ ततःसैन्येषुभग्नेषु
मथितेषुचसर्वशः ॥ प्राप्तेचास्तंदिनकरेनप्राज्ञायतकिंचन ५२



एकायनीकुर्वन्एकमार्गाःकुर्वन् ५१ । ५२

५३ ॥ इतिभीष्मपर्वणि नीलकंठीयेभारतभावदीपे एकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ कृतेऽवहारेइति । १ । २ । ३ । कक्षंतृणं ४ । ५ । ६ । ७ अप्लवेउडुपशून्ये ८ । ९ । १० । ११ । १२

भीष्मंचसमुदीर्यंतंदृष्ट्वापार्थोमहाहवे ॥ अवहारमकुर्वंतसैन्यानांभरतर्षभ ५३ ॥ इतिश्रीम० भीष्मप० भीष्मव० शंखयुद्धेप्रथमदिवसावहारेएकोनपंचाशत्तमोऽध्यायः
॥ ४९ ॥ ॥ संजयउवाच ॥ कृतेऽवहारेसैन्यानांप्रथमेभरतर्षभ ॥ भीष्मेचयुद्धसंरब्धेहृष्टेदुर्योधनेतथा १ धर्मराजस्ततस्तूर्णमभिगम्यजनार्दनम् ॥ भ्रातृभिःसहितः
सर्वैःसर्वैश्चैवजनेश्वरैः २ शुचापरमयायुक्तश्चिंतयानःपराजयम् ॥ वार्ष्णेयमब्रवीद्राजन्दृष्ट्वाभीष्मस्यविक्रमम् ३ कृष्णपश्यमहेष्वासंभीष्मंभीमपराक्रमम् ॥ शरैर्दहंतं
सैन्यंमेग्रीष्मेकक्षमिवानलम् ४ कथमेनंमहात्मानंशक्ष्यामःप्रतिवीक्षितुम् ॥ लेलिह्यमानंसैन्यंमेहविष्मंतमिवानलम् ५ एतंहिपुरुषव्याघ्रंधनुष्मंतंमहाबलम् ॥ दृष्ट्वा
विप्रद्रुतंसैन्यंसमरेमार्गणाहतम् ६ शक्योजेतुंयमःक्रुद्धोवज्रपाणिश्चसंयुगे ॥ वरुणःपाशभृद्वापिकुबेरोवागदाधरः ७ नतुभीष्मोमहातेजाःशक्योजेतुंमहाबलः ॥ सो
ऽहमेवंगतेमग्नोभीष्मागाधजलेऽप्लवे ८ आत्मनोबुद्धिदौर्बल्याद्भीष्ममासाद्यकेशव ॥ वनंयास्यामिवार्ष्णेयश्रेयोमेतत्रजीवितुम् ९ नत्वेतान्पृथिवीपालान्दातुंभीष्मा
यमृत्यवे ॥ क्षपयिष्यतिसेनांमेकृष्णभीष्मोमहास्त्रवित् १० यथाऽनलंप्रज्वलितंपतंगाःसमभिद्रुताः ॥ विनाशायोपगच्छंतितथामेसैनिकोजनः ११ क्षयंनीतोस्मि
वार्ष्णेयराज्यहेतोःपराक्रमी ॥ भ्रातरश्चैवमेवीराःकर्शिताःशरपीडिताः १२ मत्कृतेभ्रातृहार्देनराज्याद्भ्रष्टास्तथासुखात् ॥ जीवितंबहुमन्येऽहंजीवितंह्यद्यदुर्लभम् १३
जीवितस्यचशेषेणतपस्तप्स्यामिदुश्चरम् ॥ नघातयिष्यामिरणेमित्राणीमानिकेशव १४ रथान्मेबहुसाहस्रान्दिव्यैरस्त्रैर्महाबलः ॥ घातयत्यनिशंभीष्मःप्रवराणांप्र
हारिणाम् १५ किंनुकृत्वाहितंमेस्याद्ब्रूहिमाधवमाचिरम् ॥ मध्यस्थमिवपश्यामिसमरेसव्यसाचिनम् १६ एकोभीमःपरंशक्त्यायुध्यत्येवमहाभुजः ॥ केवलंबाहुवीर्ये
णक्षत्रधर्ममनुस्मरन् १७ गदयावीरघातिन्यायथोत्साहंमहामनाः ॥ करोत्यसुकरंकर्मरथाश्वनरदंतिषु १८ नालमेषक्षयंकर्तुंपरसैन्यस्यमारिष ॥ आर्जवेनैवयुद्धेनवी
रवर्षशतैरपि १९ एकोऽस्त्रवित्सखातेऽयंसोऽप्यस्मान्समुपेक्षते ॥ निर्दह्यमानान्भीष्मेणद्रोणेनचमहात्मना २० दिव्यान्यस्त्राणिभीष्मस्यद्रोणस्यचमहात्मनः ॥
धक्ष्यंतिक्षत्रियान्सर्वान्प्रयुक्तानिपुनःपुनः २१ कृष्णभीष्मःसुसंरब्धःसहितःसर्वपार्थिवैः ॥ क्षपयिष्यतिनोनूनंयादृशोऽस्यपराक्रमः २२ सत्वंपश्यमहाभागयोगे
श्वरमहारथम् ॥ भीष्मंयःशमयेत्संख्येदावाग्निंजलदोयथा २३ तवप्रसादाद्गोविंदपांडवानिहतद्विषः ॥ स्वराज्यमनुसंप्राप्तामोदिष्यंतेसबांधवाः २४ एवमुक्त्वाततः
पार्थोध्यायन्नास्तेमहामनाः ॥ चिरमंतर्मनाभूत्वाशोकोपहतचेतनः ॥ शोकार्तंतमथोज्ञात्वादुःखोपहतचेतसम् २५ अब्रवीत्तत्रगोविंदोहर्षयन्सर्वपांडवान् ॥ माशुचो
भरतश्रेष्ठनत्वंशोचितुमर्हसि २६ यस्यतेभ्रातरःशूराःसर्वलोकेषुधन्विनः ॥ अहंचप्रियकृद्राजन्सात्यकिश्चमहायशाः २७

१३ । १४ । १५ । १६ । १७ । १८ आर्जवेनअकुटिलेन दिव्यास्त्रमायाहीनेन १९ । २० । २१ । २२ । २३ । २४ अंतर्मनाःविमनाः २५ । २६ । २७

२८ । २९ निधनंनिधनहेतुः ३० । ३१ भाषितमुक्तं ३२ मद्वंमम ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । आकाशगइवपक्षीव ४४ रथचर्यासुरथवर्त्मसु ४५ परमोपेतः

विराटद्रुपदौचेभौधृष्टद्युम्नश्चपार्षतः ॥ तथैवसबलाश्चेमेराजानोराजसत्तम २८ त्वत्प्रसादंप्रतीक्षंतेत्वद्भक्ताश्चविशांपते ॥ एषतेपार्षतोनित्यंहितकामःप्रियेरतः २९
सैनापत्यमनुप्राप्तोधृष्टद्युम्नोमहाबलः ॥ शिखंडीचमहाबाहोभीष्मस्यनिधनंकिल ३० एतच्छ्रुत्वाततोधर्मोधृष्टद्युम्नंमहारथम् ॥ अब्रवीत्समितौतस्यांवासुदेवस्यशृण्वतः
३१ धृष्टद्युम्ननिबोधेदंयत्त्वांवक्ष्यामिमारिष ॥ नातिक्रम्यंभवेत्तच्चवचनंममभाषितम् ३२ भवान्सेनापतिर्मह्यंवासुदेवेनसंमितः ॥ कार्तिकेयोयथानित्यंदेवानामभ
वत्पुरा ३३ तथात्वमपिपांडूनांसेनानीःपुरुषर्षभ ॥ सत्वंपुरुषशार्दूलविक्रम्यजहिकौरवान् ३४ अहंचतेऽनुयास्यामिभीमःकृष्णश्चमारिष ॥ माद्रीपुत्रौचसहितौद्रौ
पदेयाश्चदंशिताः ३५ येचान्येपृथिवीपालाःप्रधानाःपुरुषर्षभ ॥ ततउद्धर्षयन्सर्वान्धृष्टद्युम्नोऽभ्यभाषत ३६ अहंद्रोणांतकःपार्थविहितःशंभुनापुरा ॥ रणेभीष्मंकृ
पंद्रोणंतथाशल्यंजयद्रथम् ३७ सर्वानद्यरणेदृप्तान्प्रतियोत्स्यामिपार्थिव ॥ अथोत्क्रुष्टंमहेष्वासैःपांडवैर्युद्धदुर्मदैः ३८ समुद्यतेपार्थिवेन्द्रेपार्षतेशत्रुसूदने ॥ तमब्रवी
त्ततःपार्थःपार्षतंपृतनापतिम् ३९ व्यूहःक्रौंचारुणोनामसर्वशत्रुनिबर्हणः ॥ यंबृहस्पतिरिंद्रायतदादेवासुरेऽब्रवीत् ४० तंयथावत्प्रतिव्यूहंपरानीकविनाशनम् ॥
अदृष्टपूर्वंराजानःपश्यंतुकुरुभिःसह ४१ यथोक्तःसनृदेवेनविष्णुर्वज्रभृतायथा ॥ प्रभातेसर्वसैन्यानामग्रेचक्रेधनंजयम् ४२ आदित्यपथगःकेतुस्तस्याद्भुतमनोरमः ॥
शासनात्पुरुहूतस्यनिर्मितोविश्वकर्मणा ४३ इंद्रायुधसवर्णाभिःपताकाभिरलंकृतः ॥ आकाशगइवाकाशेगंधर्वनगरोपमः ४४ नृत्यमानइवाभातिरथचर्यासुमारिष ॥
तेनरत्नवतापार्थःसचगांडीवधन्वना ४५ बभूवपरमोपेतःसुमेरुरिवभानुना ॥ शिरोऽभूद्द्रुपदोराजामहत्यासेनयावृतः ४६ कुंतिभोजश्चचैद्यश्चचक्षुर्भ्यांतौजनेश्वरौ ॥ दा
शार्णकाःप्रभद्राश्चदाशेरकगणैःसह ४७ अनूपकाःकिराताश्चग्रीवायांभरतर्षभ ॥ पटच्चरैश्चपौण्ड्रैश्चराजन्पौरवकैस्तथा ४८ निषादैःसहितश्चापिपृष्ठमासीद्युधिष्ठिरः ॥
पक्षौतुभीमसेनश्चधृष्टद्युम्नश्चपार्षतः ४९ द्रौपदेयाभिमन्युश्चसात्यकिश्चमहारथः ॥ पिशाचादारदाश्चैवपुंड्राःकुंडीविषैःसह ५० मारुताधेनुकाश्चैवतंगणाःपरतं
गणाः ॥ वाल्हिकास्तित्तिराश्चैवचोलाःपांड्याश्चभारत ५१ एतेजनपदाराजन्दक्षिणंपक्षमाश्रिताः ॥ अग्निवेशास्तुहुंडाश्चमालवादानभारयः ५२ शबराउद्भसाश्चैवव
त्साश्चसहनाकुलैः ॥ नकुलःसहदेवश्चवामंपक्षंसमाश्रिताः ५३ रथानामयुतंपक्षौशिरस्तुनियुतंतथा ॥ पृष्ठमर्बुदमेवासीत्सहस्राणिचविंशतिः ५४ ग्रीवायांनियुतंचा
पिसहस्राणिचसप्ततिः ॥ पक्षकोटिप्रपक्षेषुपक्षांतेषुचवारणाः ५५ जग्मुःपरिवृताराजंश्चलंतइवपर्वताः ॥ जघनंपालयामासविराटःसहकेकयैः ५६ काशिराजश्चशै
ब्यश्चरथानामयुतैस्त्रिभिः ॥ एवमेनंमहाव्यूहंव्यूह्यभारतपांडवाः ५७

पराउत्कृष्टाचासौमालक्ष्मीश्चेतिपरमातयाउपेतः ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७

५८ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥ ॥ क्रौंचमिति १ । २ । ३ । ४ । ५

सूर्योदयंतइच्छंतःस्थितायुद्धायदंशिताः ॥ तेषामादित्यवर्णानिविमलानिमहांतिच ॥ श्वेतच्छत्राण्यशोभंतवारणेषुरथेषुच ५८ ॥ इतिश्रीमहाभारतेभीष्मप
र्वणिभीष्मव० क्रौंचव्यूहनिर्माणेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ॥ संजयउवाच ॥ क्रौंचंदृष्ट्वाततोव्यूहमभेद्यंतनयस्तव ॥ रक्ष्यमाणंमहाघोरंपार्थे
नामिततेजसा १ आचार्यमुपसंगम्यकृपंशल्यंचपार्थिव ॥ सौमदत्तिंविकर्णंचसोऽश्वत्थामानमेवच २ दुःशासनादीन्भ्रातॄंश्चसर्वानेवचभारत ॥ अन्यांश्चसुबहू
न्शूरान्युद्धासनमुपागतान् ३ प्राहेदंवचनंकालेहर्षयंस्तनयस्तव ॥ नानाशस्त्रप्रहरणाःसर्वेयुद्धविशारदाः ४ एकैकशःसमर्थाहियूयंसर्वेमहारथाः ॥ पांडुपुत्रा
न्रणेहंतुंससैन्यान्किमुसंहताः ५ अपर्याप्तंतदस्माकंबलंभीष्माभिरक्षितम् ॥ पर्याप्तमिदमेतेषांबलंभीमाभिरक्षितम् ६ संस्थानाःशूरसेनाश्चवेत्रिकाःकुकुरास्त
था ॥ आरोचकास्त्रिगर्ताश्चमद्रकायवनास्तथा ७ शत्रुंजयेनसहितास्तथादुःशासनेनच ॥ विकर्णेनचवीरेणतथानंदोपनंदकैः ८ चित्रसेनेनसहिताःसहिताः
पारिभद्रकैः ॥ भीष्ममेवाभिरक्षंतुसहसैन्यपुरस्कृताः ९ ततोभीष्मश्चद्रोणश्चतवपुत्राश्चमारिष ॥ अव्यूहंतमहाव्यूहंपांडूनांप्रतिबाधकम् १० भीष्मःसैन्येनम
हतासमंतात्परिवारितः ॥ ययौप्रकर्षन्महतींवाहिनींसुरराडिव ११ तमन्वयान्महेष्वासोभारद्वाजःप्रतापवान् ॥ कुंतलैश्चदशार्णैश्चमागधैश्चविशांपते १२ विंद
भैर्मेकलैश्चैवकर्णप्रावरणैरपि ॥ सहिताःसर्वसैन्येनभीष्ममाहवशोभिनम् १३ गांधाराःसिंधुसौवीराःशिबयोऽथवसातयः ॥ शकुनिश्चस्वसैन्येनभारद्वाजमपालयत्
१४ ततोदुर्योधनोराजासहितःसर्वसोदरैः ॥ अश्वातकैर्विकर्णैश्चतथाचांबष्ठकोसलैः १५ दरदैश्चशकैश्चैवतथाक्षुद्रकमालवैः ॥ अभ्यरक्षतसंहृष्टःसौबलेयस्यवाहि
नीम् १६ भूरिश्रवाःशलःशल्योभगदत्तश्चमारिष ॥ विंदानुविंदावावंत्यौवामंपार्श्वमपालयन् १७ सौमदत्तिःसुशर्माचकांबोजश्चसुदक्षिणः ॥ श्रुतायुश्चाच्युतायुश्च
दक्षिणंपक्षमास्थिताः १८ अश्वत्थामाकृपश्चैवकृतवर्माचसात्वतः ॥ महत्यासेनयासार्धंसेनापृष्ठेव्यवस्थिताः १९ पृष्ठगोपास्तुतस्यासन्नानादेश्याजनेश्वराः ॥
केतुमान्वसुदानश्चपुत्रःकाश्यस्यचाभिभूः २० ततस्तेतावकाःसर्वेहृष्टायुद्धायभारत ॥ दध्मुःशंखान्मुदायुक्ताःसिंहनादांस्तथोन्नदन् २१ तेषांश्रुत्वातुहृष्टानांवृ
द्धःकुरुपितामहः ॥ सिंहनादंविनद्योच्चैःशंखंदध्मौप्रतापवान् २२ ततःशंखाश्चभेर्यश्चपेश्यश्चविविधाःपरैः ॥ आनकाश्चाभ्यहन्यंतसशब्दस्तुमुलोऽभवत् २३ ततः
श्वेतैर्हयैर्युक्तेमहतिस्यंदनेस्थितौ ॥ प्रदध्मतुःशंखवरौहेमरत्नपरिष्कृतौ २४ पांचजन्यंहृषीकेशोदेवदत्तंधनंजयः ॥ पौंड्रंदध्मौमहाशंखंभीमकर्मावृकोदरः २५ अ
नंतविजयंराजाकुंतीपुत्रोयुधिष्ठिरः ॥ नकुलःसहदेवश्चसुघोषमणिपुष्पकौ २६ काशिराजश्चशैब्यश्चशिखंडीचमहारथः ॥ धृष्टद्युम्नोविराटश्चसात्यकिश्चमहारथः २७

 अपर्याप्तमपरिमेयं ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ अभिभवत्यभिभूःक्विप् २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे एकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ ॥ ॥ एवमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । व्यतिकरोमेलकः समा



पांचाल्याश्चमहेष्वासाद्रौपद्याःपंचचात्मजाः ॥ सर्वेदध्मुर्महाशंखान्सिंहनादांश्चनेदिरे २८ सघोषःसुमहांस्तत्रवीरैस्तैःसमुदीरितः ॥ नभश्चपृथिवींचैवतुमुलो
व्यनुनादयत् २९ एवमेतेमहाराजप्रहृष्टाःकुरुपांडवाः ॥ पुनर्युद्धायसंजग्मुस्तापयानाःपरस्परम् ३० ॥ इतिश्रीम० भी० भी० कौरवव्यूहरचनायांएकपं
चाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ धृतराष्ट्रउवाच ॥ एवंव्यूढेष्वनीकेषुमामकेष्वितरेषुच ॥ कथंप्रहरतांश्रेष्ठाःसंप्रहारंप्रचक्रिरे १ ॥ संजयउवाच ॥ समं
व्यूढेष्वनीकेषुसन्नद्धरुचिरध्वजम् ॥ अपारमिवसंदृश्यसागरप्रतिमंबलम् २ तेषांमध्येस्थितोराजन्पुत्रोदुर्योधनस्तव ॥ अब्रवीत्तावकान्सर्वान्युद्धध्वमिति
दंशिताः ३ तेमनःक्रूरमाधायसमभित्यक्तजीविताः ॥ पांडवानभ्यवर्ततसर्वएवोच्छ्रितध्वजाः ४ ततोयुद्धंसमभवत्तुमुलंलोमहर्षणम् ॥ तावकानांपरेषांचव्यति
षक्तरथद्विपम् ५ मुक्तास्तुरथिभिर्बाणारुक्मपुंखाःसुतेजसः ॥ सन्निपेतुरकुंठाग्रानागेषुचहयेषुच ६ तथाप्रवृत्तेसंग्रामेधनुरुद्यम्यदंशितः ॥ अभिपत्यमहाबा
हुर्भीष्मोभीमपराक्रमः ७ सौभद्रेभीमसेनेचसात्यकौचमहारथे ॥ कैकेयेचविराटेचधृष्टद्युम्नेचपार्षते ८ एतेषुनरवीरेषुचेदिमत्स्येषुचाभिभूः ॥ ववर्षशरवर्षाणि
वृद्धःकुरुपितामहः ९ अभिद्यततोव्यूहस्तस्मिन्वीरसमागमे ॥ सर्वेषामेवसैन्यानामासीद्व्यतिकरोमहान् १० सादिनोध्वजिनश्चैवहतप्रवरवाजिनः ॥ विप्रद्रुत
रथानीकाःसमपद्यंतपांडवाः ११ अर्जुनस्तुनरव्याघ्रोदृष्ट्वाभीष्मंमहारथम् ॥ वार्ष्णेयमब्रवीत्क्रुद्धोयाहियत्रपितामहः १२ एषभीष्मःसुसंक्रुद्धोवार्ष्णेयममवाहि
नीम् ॥ नाशयिष्यतिसुव्यक्तंदुर्योधनहितेरतः १३ एषद्रोणःकृपःशल्योविकर्णश्चजनार्दन ॥ धार्तराष्ट्राश्चसहितादुर्योधनपुरोगमाः १४ पंचालान्निहनिष्यंतिरक्षि
तादृढधन्वना ॥ सोऽहंभीष्मंवधिष्यामिसैन्यहेतोर्जनार्दन १५ तमब्रवीद्वासुदेवोयत्तोभवधनंजय ॥ एषत्वांप्रापयिष्यामिपितामहरथंप्रति १६ एवमुक्त्वाततः
शौरीरथंतंलोकविश्रुतम् ॥ प्रापयामासभीष्मस्यरथंप्रतिजनेश्वर १७ चलद्बहुपताकेनबलाकावर्णवाजिना ॥ समुच्छ्रितमहाभीमनदद्वानरकेतुना १८ मह
तामेघनादेनरथेनामिततेजसा ॥ विनिघ्नन्कौरवानीकंशूरसेनांश्चपांडवः १९ प्रायाच्छरणदःशीघ्रंसुहृदांहर्षवर्धनः ॥ तमापतंतंवेगेनप्रभिन्नमिववारणम् २०
त्रासयंतंरणेशूरान्मर्दयंतंचसायकैः ॥ सैंधवप्रमुखैर्गुप्तःप्राच्यसौवीरकेकयैः २१ सहसाप्रत्युदीयायभीष्मःशांतनवोऽर्जुनम् ॥ कोहिगांडीवधन्वानमन्यःकुरुपि
तामहात् २२ द्रोणवैकर्तनाभ्यांवारथीसंयातुमर्हति ॥ ततोभीष्मोमहाराजसर्वलोकमहारथः २३ अर्जुनंसप्तसप्तत्यानाराचानांसमाचिनोत् ॥ द्रोणश्चपंच
विंशत्याकृपःपंचाशताशरैः २४ दुर्योधनश्चतुःषष्ट्याशल्यश्चनवभिःशरैः ॥ सैंधवोनवभिश्चैवशकुनिश्चापिपंचभिः २५

गमइत्यर्थः १० । ११ । १२ । १३ । १४ दृढधन्वनाभीष्मेण १५ यत्तःयत्नवान् १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५

विकर्णोदशभिर्भल्लैराजन्विव्याधपांडवम् ॥ सतैर्विद्धोमहेष्वासःसमंतान्निशितैःशरैः २६ नविव्यथेमहाबाहुर्भिद्यमानइवाचलः ॥ सभीष्मंपंचविंशत्याकृपंचनव
भिःशरैः २७ द्रोणंषष्ट्यानरव्याघ्रोविकर्णंचत्रिभिःशरैः ॥ शल्यंचैवत्रिभिर्बाणैराजानंचैवपंचभिः २८ प्रत्यविध्यदमेयात्माकिरीटीभरतर्षभ ॥ तंसात्यकिर्वि
राटश्चधृष्टद्युम्नश्चपार्षतः २९ द्रौपदेयाऽभिमन्युश्चपरिवव्रुर्धनंजयम् ॥ ततोद्रोणंमहेष्वासंगांगेयस्यप्रियेरतम् ३० अभ्यवर्ततपांचाल्यःसंयुक्तःसहसोमकैः ॥ भी
ष्मस्तुरथिनांश्रेष्ठोराजन्विव्याधपांडवम् ३१ अशीत्यानिशितैर्बाणैस्ततोऽक्रोशंततावकाः ॥ तेषांतुनिनदंश्रुत्वासहितानांप्रहृष्टवत् ३२ प्रविवेशततोमध्यंनर
सिंहःप्रतापवान् ॥ तेषांमहारथानांसमध्यंप्राप्यधनंजयः ३३ चिक्रीडधनुषाराजँल्लक्षंकृत्वामहारथान् ॥ ततोदुर्योधनोराजाभीष्ममाहजनेश्वरः ३४ पीड्यमानंस्वकंसै
न्यंदृष्ट्वापार्थेनसंयुगे ॥ एषपांडुसुतस्तातकृष्णेनसहितोबली ३५ यततांसर्वसैन्यानांमूलंनःपरिकृंतति ॥ त्वयिजीवतिगांगेयद्रोणेचरथिनांवरे ३६ त्वत्कृतेचैवकर्णो
ऽपिन्यस्तशस्त्रोविशांपते ॥ नयुध्यतिरणेपार्थंहितकामःसदामम ३७ सतथाकुरुगांगेययथाहन्येतफाल्गुनः ॥ एवमुक्तस्ततोराजन्पितादेवव्रतस्तव ३८ धिक्क्षात्रं
धर्ममित्युक्त्वाप्रायात्पार्थरथंप्रति ॥ उभौश्वेतहयौराजन्संसक्तौप्रेक्ष्यपार्थिवाः ३९ सिंहनादान्भृशंचक्रुःशंखान्दध्मुश्चमारिष ॥ द्रौणिर्दुर्योधनश्चैवविकर्णश्चतवात्मजः
४० परिवार्यरणेभीष्मंस्थितायुद्धायमारिष ॥ तथैवपांडवाःसर्वेपरिवार्यधनंजयम् ४१ स्थितायुद्धायमहतेततोयुद्धमवर्तत ॥ गांगेयस्तुरणेपार्थमानर्च्छन्नवभिःशरैः
४२ तमर्जुनःप्रत्यविध्यद्दशभिर्मर्मभेदिभिः ॥ ततःशरसहस्रेणसुप्रयुक्तेनपांडवः ४३ अर्जुनःसमरश्लाघीभीष्मस्यावारयद्दिशः ॥ शरजालंततस्तत्तुशरजालेनमा
रिष ४४ वारयामासपार्थस्यभीष्मःशांतनवस्तदा ॥ उभौपरमसंहृष्टावुभौयुद्धाभिनंदिनौ ४५ निर्विशेषमयुध्येतांकृतप्रतिकृतैषिणौ ॥ भीष्मचापविमुक्तानिशरजाला
निसंघशः ४६ शीर्यमाणान्यदृश्यंतभिन्नान्यर्जुनसायकैः ॥ तथैवार्जुनमुक्तानिशरजालानिसर्वशः ४७ गांगेयशरनुन्नानिप्रापतंतमहीतले ॥ अर्जुनःपंचविंशत्याभी
ष्ममार्च्छच्छितैःशरैः ४८ भीष्मोऽपिसमरेपार्थंविव्याधनिशितैःशरैः ॥ अन्योन्यस्यहयान्विध्वाध्वजौचसुमहाबलौ ४९ रथेषांरथचक्रेचचिक्रीडतुररिंदमौ ॥ ततः
क्रुद्धोमहाराजभीष्मःप्रहरतांवरः ५० वासुदेवंत्रिभिर्बाणैराजघानस्तनांतरे ॥ भीष्मचापच्युतैस्तैस्तुनिर्विद्धोमधुसूदनः ५१ विरराजरणेराजन्सपुष्पइवकिंशुकः ॥
ततोऽर्जुनोभृशंक्रुद्धोनिर्विद्धंप्रेक्ष्यमाधवम् ५२ सारथिंकुरुवृद्धस्यनिर्बिभेदशितैःशरैः ॥ यतमानौतुतौवीरावन्योन्यस्यवधंप्रति ५३ नशक्तौतांतदाऽन्योन्यमभिसं
धातुमाहवे ॥ तौमंडलानिचित्राणिगतप्रत्यागतानिच ५४ अदर्शयेतांबहुधासूतसामर्थ्यलाघवात् ॥ अंतरंचप्रहारेषुतर्कयंतौपरस्परम् ५५

५१ । ५२ । ५३ । ५४ अंतरंछिद्रं तर्कयंतौचिंतयंतौ ५५

अंतरमार्गस्थौछिद्रान्वेषणपरौ ५६ । ५७ । ५८ चिन्हंध्वजः ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । आलोकात्‌आसंसारस्थितेः ६८ । ६९ । ७० । ७१ । ७२

तयोःशंखनिनादेनरथनेमिस्वने
राजन्नंतरमार्गस्थौस्थितावास्तांमुहुर्मुहुः उभौसिंहरवोन्मिश्रंशंखशब्दंचचक्रतुः ५६ तथैवचापनिर्घोषंचक्रतुस्तौमहारथौ ॥ चिन्हमात्रेणभीष्मंतुप्रजज्ञुस्तत्र
नच ५७ दारितासहसाभूमिश्चकंपेचननादच ॥ नोभयोरंतरंकश्चिद्ददृशेभरतर्षभ ५८ बलिनौयुद्धदुर्धर्षावन्योन्यसदृशावुभौ ॥ नतयोर्विवरंकश्चिद्रणेपश्यति
कौरवाः ५९ तथापांडुसुताःपार्थंचिह्नमात्रेणजज्ञिरे ॥ तयोर्नृवरयोर्दृष्ट्वाताद्दशंतंपराक्रमम् ६० विस्मयंसर्वभूतानिजग्मुर्भारतसंयुगे ॥ तत्रदेवाःसगंधर्वाश्चारणाश्च
भारत ६१ धर्मेस्थितस्यहियथानकश्चिद्वृजिनंक्वचित् ॥ उभौचशरजालेनतावदृश्यौबभूवतुः ६२ प्रकाशौचपुनस्तूर्णंबभूवतुरुभौरणे ॥ आश्चर्यभूतंलोकेषुयुद्धमेत
र्षिभिःसह ६३ अन्योन्यंप्रत्यभाषंततयोर्दृष्ट्वापराक्रमम् ॥ नशक्यौयुधिसंरब्धौजेतुमेतौकथंचन ६४ सदेवासुरगंधर्वैर्लोकैरपिमहारथौ ॥ तथैवपांडवंयु
न्महाद्भुतम् ६५ नैतादृशानियुद्धानिभविष्यंतिकथंचन ॥ नहिशक्योरणेजेतुंभीष्मःपार्थेनधीमता ६६ सधनुःसरथःसाश्वःप्रवपन्सायकान्रणे ॥ गांगेयार्जुनयोः
द्धेदेवैरपिदुरासदम् ६७ नविजेतुंरणेभीष्मउत्सहेतधनुर्धरम् ॥ आलोकादपियुद्धंहिसममेतद्भविष्यति ६८ इतिस्मवाचोऽश्रूयंतप्रोच्चरंत्यस्ततस्ततः ॥ शितधारैस्तथाखड्गैर्विमलैश्चपरश्वधैः ॥
संख्येस्तवयुक्ताविशांपते ६९ त्वदीयास्तुतदायोधाःपांडवेयाश्चभारत ॥ अन्योन्यंसमरेजघ्नुस्तयोस्तत्रपराक्रमे ७० द्रोणपांचाल्ययोराजन्महानासीत्समा
शरैरन्यैश्चबहुभिःशस्त्रैर्नानाविधैरपि ७१ उभयोःसेनयोःशूरान्यकृंततपरस्परम् ॥ वर्तमानेतथाघोरेतस्मिन्युद्धेसुदारुणे ॥ कथंद्रोणोमहेष्वासःपांचाल्यश्चापिपार्षतः ॥
गमः ७२ ॥ इ० म० भीष्मप० भीष्मव० भीष्मार्जुनयुद्धेद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ धृतराष्ट्रउवाच ॥ भीष्मोहिसमरेक्रुद्धोहन्याल्लोकांश्चराचरान् ॥
उभौसमीयतुर्यत्तौतन्ममाचक्ष्वसंजय १ दिष्टमेवपरंमन्येपौरुषादितिमेमतिः ॥ यत्रशांतनवोभीष्मोनातरद्युधिपांडवम् २ द्रोणस्तुनिशितैर्बाणै
सकथंपांडवंयुद्धेनातरत्संजयौजसा ३ ॥ संजयउवाच ॥ शृणुराजन्स्थिरोभूत्वायुद्धमेतत्सुदारुणम् ॥ नशक्याःपांडवाजेतुंदेवैरपिसवासवैः ४ धृष्टद्युम्नस्ततोद्रो
धृष्टद्युम्नमविध्यत ॥ सारथिंचास्यभल्लेनरथनीडादपातयत् ५ तथाऽस्यचतुरोवाहांश्चतुर्भिःसायकोत्तमैः ॥ पीडयामाससंक्रुद्धोधृष्टद्युम्नस्यमारिष ६ आददेचशरं
णंनवत्यानिशितैःशरैः ॥ विव्याधप्रहसन्वीरस्तिष्ठतिष्ठेतिचाब्रवीत् ७ ततःपुनरमेयात्माभारद्वाजःप्रतापवान् ॥ शरैःप्रच्छादयामासधृष्टद्युम्नममर्षणम् ८ तत्राद्भुतम
घोरंपार्षतांतचिकीर्षया ॥ शक्राशनिसमस्पर्शंकालदंडमिवापरम् ९ हाहाकारोमहानासीत्सर्वसैन्येषुभारत ॥ तमिषुंसंधितंदृष्ट्वाभारद्वाजेनसंयुगे १०
पश्यामधृष्टद्युम्नस्यपौरुषम् ॥ यदेकःसमरेवीरस्तस्थौगिरिरिवाचलः ११

॥ इति भीष्मपर्वणि नीलकंठीये भारतभावदीपे द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ कथमिति १ । २ नातरत्‌नलंघितवान्‌ ३ । ४ नीडात्‌स्थानात्‌ ५ । ६ । ७ । ८ । ९ । १० । ११

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ व्यंसयामाससंसक्ताऽपियथानभवतितथावंचयतिस्म २० । २१ पीतान्पायितजलान् २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

तंचदीप्तंशरंघोरमायांतंमृत्युमात्मनः ॥ चिच्छेदशरवृष्टिंचभारद्वाजेमुमोचह १२ ततउच्चुक्रुशुःसर्वेपंचालाःपांडवैःसह ॥ धृष्टद्युम्नेनतत्कर्मकृतंदृष्ट्वासुदुष्करम् १३
ततःशक्तिंमहावेगांस्वर्णवैदूर्यभूषिताम् ॥ द्रोणस्यनिधनाकांक्षीचिक्षेपसपराक्रमी १४ तामापतंतींसहसाशक्तिंकनकभूषिताम् ॥ त्रिधाचिच्छेदसमरेभारद्वाजोहस
न्निव १५ शक्तिंविनिहतांदृष्ट्वाधृष्टद्युम्नःप्रतापवान् ॥ ववर्षशरवर्षाणिद्रोणंप्रतिजनेश्वर १६ शरवर्षंततस्तत्तुसन्निवार्यमहायशाः ॥ द्रोणोद्रुपदपुत्रस्यमध्येचिच्छेदकार्मु
कम् १७ सच्छिन्नधन्वासमरेगदांगुर्वींमहायशाः ॥ द्रोणायप्रेषयामासगिरिसारमयींबली १८ सागदावेगवन्मुक्ताप्रायाद्द्रोणजिघांसया ॥ तत्राद्भुतमपश्यामभारद्वाज
स्यपौरुषम् १९ लाघवाद्व्यंसयामासगदांहेमविभूषिताम् ॥ व्यंसयित्वागदांतांचप्रेषयामासपार्षतम् २० भल्लान्सुनिशितान्पीतान्रुक्मपुंखान्सुदारुणान् ॥ तेतस्य
कवचंभित्त्वापपुःशोणितमाहवे २१ अथान्यद्धनुरादायधृष्टद्युम्नोमहारथः ॥ द्रोणंयुधिपराक्रम्यशरैर्विव्याधपंचभिः २२ रुधिराक्तौततस्तौतुशुशुभातेनरर्षभौ ॥ वसं
तसमयेराजन्पुष्पिताविवकिंशुकौ २३ अमर्षितस्ततोराजन्पराक्रम्यचमूमुखे ॥ द्रोणोद्रुपदपुत्रस्यपुनश्चिच्छेदकार्मुकम् २४ अथैनंछिन्नधन्वानंशरैःसन्नतपर्वभिः ॥
अभ्यवर्षदमेयात्मावृष्ट्यामेघइवाचलम् २५ सारथिंचास्यभल्लेनरथनीडादपातयत् ॥ अथास्यचतुरोवाहांश्चतुर्भिर्निशितैःशरैः २६ पातयामाससमरेसिंहनादंननाद
च ॥ ततोऽपरेणभल्लेनहस्तावापमथाच्छिनत् २७ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ गदापाणिरवारोहत्ख्यापयन्पौरुषंमहत् २८ तामस्यविशिखैस्तूर्णं
पातयामासभारत ॥ रथादनवरूढस्यतदद्भुतमिवाभवत् २९ ततःसविपुलंचर्मशतचंद्रंचभानुमत् ॥ खड्गंचविपुलंदिव्यंप्रगृह्यसुभुजोबली ३० अभिदुद्राववेगेनद्रोणस्य
वधकांक्षया ॥ आमिषार्थीयथासिंहोवनेमत्तमिवद्विपम् ३१ तत्राद्भुतमपश्यामभारद्वाजस्यपौरुषम् ॥ लाघवंचास्त्रयोगंचबलंबाह्वोश्चभारत ३२ यदेनंशरवर्षेणवार
यामासपार्षतम् ॥ नशशाकततोगंतुंबलवानपिसंयुगे ३३ निवारितस्तुद्रोणेनधृष्टद्युम्नोमहारथः ॥ न्यवारयच्छरौघांस्तांश्चर्मणाकृतहस्तवत् ३४ ततोभीमोमहा
बाहुःसहसाऽभ्यपतद्बली ॥ साहाय्यकारीसमरेपार्षतस्यमहात्मनः ३५ सद्रोणंनिशितैर्बाणैराजन्विव्याधसप्तभिः ॥ पार्षतंचरथंतूर्णंस्वकमारोहयत्तदा ३६ ततो
दुर्योधनोराजन्भानुमंतमचोदयत् ॥ सैन्येनमहतायुक्तंभारद्वाजस्यरक्षणे ३७ ततःसामहतीसेनाकलिंगानांजनेश्वर ॥ भीममभ्युद्ययौतूर्णंतवपुत्रस्यशासनात् ३८
पांचाल्यमथसंत्यज्यद्रोणोऽपिरथिनांवरः ॥ विराटद्रुपदौवृद्धौवारयामाससंयुगे ३९ धृष्टद्युम्नोऽपिसमरेधर्मराजानमभ्ययात् ॥ ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणम् ४०

३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४०

४१ ॥ इ०भी०नी०भा०त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ तथेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२

कलिंगानांचसमरेभीमस्यचमहात्मनः ॥ जगतःप्रक्षयकरंघोररूपंभयावहम् ४१ ॥ इतिश्रीमहाभारतेभी०भीष्मव०धृष्टद्युम्नद्रोणयुद्धेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥
धृतराष्ट्रउवाच ॥ तथाप्रतिसमादिष्टःकालिंगोवाहिनीपतिः ॥ कथमद्भुतकर्माणंभीमसेनंमहाबलम् १ चरंतंगदयावीरंदंडहस्तमिवांतकम् ॥ योधयामाससमरेका
लिंगःसहसेनया २ संजयउवाच ॥ पुत्रेणतवराजेन्द्रसतथोक्तोमहाबलः ॥ महत्यासेनयागुप्तःप्रायाद्भीमरथंप्रति ३ तामापतंतींमहतींकलिंगानांमहाचमूम् ॥ रथाश्व
नागकलिलांप्रगृहीतमहायुधाम् ४ भीमसेनःकलिंगानामार्च्छद्भारतवाहिनीम् ॥ केतुमंतंचनैषादिमायांतंसहचेदिभिः ५ ततःश्रुतायुःसंक्रुद्धोराज्ञाकेतुमतासह ॥
आससादरणेभीमंव्यूढानीकेषुचेदिषु ६ रथैरनेकसाहस्रैःकलिंगानांनराधिप ॥ अयुतेनगजानांचनिषादैःसहकेतुमान् ७ भीमसेनंरणेराजन्समंतात्पर्यवारयत् ॥ चेदि
मत्स्यकरूषाश्वभीमसेनपदानुगाः ८ अभ्यधावन्तसमरेनिषादान्सहराजभिः ॥ ततःप्रववृतेयुद्धंघोररूपंभयावहम् ९ नप्राजानंतयोधाःस्वान्परस्परजिघांसया ॥ घोर
मासीत्ततोयुद्धंभीमस्यसहसापरैः १० यथेंद्रस्यमहाराजमहत्यादैत्यसेनया ॥ तस्यसैन्यस्यसंग्रामेयुध्यमानस्यभारत ११ बभूवसुमहान्शब्दःसागरस्येवगर्जतः ॥
अन्योन्यंस्मतदायोधाविकर्षंतोविशांपते १२ महींचक्रुश्चितांसर्वांशशलोहितसन्निभाम् ॥ योधांश्चस्वान्परान्वापिनाऽभ्यजानन्जिघांसया १३ स्वानप्याददतेस्वा
श्वशूराःपरमदुर्जयाः ॥ विमर्दःसुमहानासीदल्पानांबहुभिःसह १४ कलिंगैःसहचेदीनांनिषादैश्चविशांपते ॥ कृत्वापुरुषकारंतुयथाशक्तिमहाबलाः १५ भीमसेनंप
रित्यज्यसंन्यवर्ततचेदयः ॥ सर्वैःकलिंगैरासन्नःसन्निवृत्तेषुचेदिषु १६ स्वबाहुबलमास्थायसंन्यवर्ततपांडवः ॥ नचचालरथोपस्थाद्भीमसेनोमहाबलः १७ शितैरवा
किरद्बाणैःकलिंगानांवरूथिनीम् ॥ कालिंगस्तुमहेष्वासःपुत्रश्चास्यमहारथः १८ शक्रदेवइतिख्यातोजघ्नतुःपांडवंशरैः ॥ ततोभीमोमहाबाहुर्विधुन्वन्रुचिरंधनुः
१९ योधयामासकालिंगंस्वबाहुबलमाश्रितः ॥ शक्रदेवस्तुसमरेविसृजन्सायकान्बहून् २० अश्वान्जघानसमरेभीमसेनस्यसायकैः ॥ तंदृष्ट्वाविरथंतत्रभीमसेनम
रिंदमम् २१ शक्रदेवोऽभिदुद्रावशरैरवकिरन्शितैः ॥ भीमस्योपरिराजेंद्रशक्रदेवोमहाबलः २२ ववर्षशरवर्षाणितपांतेजलदोयथा ॥ हताश्वेतुरथेतिष्ठन्भीमसेनोम
हाबलः २३ शक्रदेवायचिक्षेपसर्वशैक्यायसींगदाम् ॥ सतयानिहतोराजन्कालिंगतनयोरथात् २४ विरथःसहसूतेनजगामधरणीतलम् ॥ हतमात्मसुतंदृष्ट्वाक
लिंगानांजनाधिपः २५ रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः ॥ ततोभीमोमहावेगांत्यक्त्वागुर्वीमहागदाम् २६ निस्त्रिंशमाददेघोरंचिकीर्षुःकर्मदारुणम् ॥ चर्म
चाप्रतिमंराजन्नार्षभंपुरुषर्षभ २७ नक्षत्रैरर्धचंद्रैश्चशातकुंभमयैश्चितम् ॥ कालिंगस्तुततःक्रुद्धोधनुर्ज्यामवमृज्यच २८ प्रगृह्यचशरंघोरमेकंसर्पविषोपमम् ॥ प्राहिणो
द्भीमसेनायवधाकांक्षीजनेश्वरः २९

२३ । २४ । २५ । २६ । २७ । २८ । २९

३० । ३१ । ३२ । ३३ भानुमंतंकलिंगात्मजं ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । अंतरायुधिनंगजारूढयोधं ४० । ४१ । ४२ । आविद्धंभ्रामितं ४३ । ४४ । ४५ । ४६ कालांतकयमोपमःप्रलय

तमापतंतंवेगेनप्रेरितंनिशितंशरम् ॥ भीमसेनोद्विधाराजंश्चिच्छेदविपुलासिना ३० उदक्रोशच्चसंहृष्टस्त्रासयानोवरूथिनीम् ॥ कालिंगोऽथततःक्रुद्धोभीमसेनायसंयुगे
३१ तोमरान्प्राहिणोच्छीघ्रंचतुर्दशशिलाशितान् ॥ तानप्राप्तान्महाबाहुःखगतानेवपांडवः ३२ चिच्छेदसहसाराजन्नसंभ्रांतोवरासिना ॥ निकृत्त्यतुरणेभीमस्तोम
रान्वैचतुर्दश ३३ भानुमंतंततोभीमःप्राद्रवत्पुरुषर्षभः ॥ भानुमांस्तुततोभीमंशरवर्षेणछादयन् ३४ ननादबलवन्नादंनादयानोनभस्तलम् ॥ नचतंममृषेभीमःसिंहना
दंमहाहवे ३५ ततःशब्देनमहताविननादमहास्वनः ॥ तेननादेनवित्रस्ताकलिंगानांवरूथिनी ३६ नभीमंसमरेमेनेमानुषंभरतर्षभ ॥ ततोभीमोमहाबाहुर्नर्दित्वावि
पुलंस्वनम् ३७ सासिर्वेगवदाप्लुत्यदंताभ्यांवारणोत्तमम् ॥ आरुरोहततोमध्यंनागराजस्यमारिष ३८ ततोमुमोचकालिंगःशक्तिंतामकरोद्द्विधा ॥ खड्गेनपृथुनामध्ये
भानुमंतमथाच्छिनत् ३९ सोऽन्तरायुधिनंहत्वाराजपुत्रमरिंदमः ॥ गुरुंभारसहंस्कंधेनागस्यासिमपातयत् ४० छिन्नस्कंधःसविनदन्पपातगजयूथपः ॥ आरुग्णः
सिंधुवेगेनसानुमानिवपर्वतः ४१ ततस्तस्मादवप्लुत्यगजाद्भारतभारतः ॥ खड्गपाणिरदीनात्मातस्थौभूमौसुदंशितः ४२ सचचारबहून्मार्गानभितःपातयन्गजान् ॥
अग्निचक्रमिवाविद्धंसर्वतःप्रत्यदृश्यत ४३ अश्ववृंदेषुनागेषुरथानीकेषुचाभिभूः ॥ पदातीनांचसंघेषुविनिघ्नन्शोणितोक्षितः ४४ श्येनवद्व्यचरद्भीमोरणेऽरिषुबलो
त्कटः ॥ छिंदंस्तेषांशरीराणिशिरांसिचमहाबलः ४५ खड्गेनशितधारेणसंयुगेगजयोधिनाम् ॥ पदातिरेकःसंक्रुद्धःशत्रूणांभयवर्धनः ४६ संमोहयामाससतान्कालां
तकयमोपमः ॥ मूढाश्चतेतमेवाजौविनदंतःसमाद्रवन् ४७ सासिमुत्तमवेगेनविचरंतंमहारणे ॥ निकृत्त्यरथिनांचाजौरथेषाश्चयुगानिच ४८ जघानरथिनश्चापिबल
वान्रिपुमर्दनः ॥ भीमसेनश्चरन्मार्गान्सुबहून्प्रत्यदृश्यत ४९ भ्रांतमाविद्धमुद्भ्रांतमाप्लुतंप्रसृतंप्लुतम् ॥ संपातंसमुदीर्णंचदर्शयामासपांडवः ५० केचिदग्रासिना
छिन्नाःपांडवेनमहात्मना ॥ विनेदुर्भिन्नमर्माणोनिपेतुश्चगतासवः ५१ छिन्नदंताग्रहस्ताश्चभिन्नकुंभास्तथापरे ॥ वियोधाःस्वान्यनीकानिजघ्नुर्भारतवारणाः ५२ निपे
तुरुर्व्यांचतथाविनदंतोमहारवान् ॥ छिन्नांश्चतोमरान्राजन्महामात्रशिरांसिच ५३ परिस्तोमान्विचित्रांश्चकक्ष्याश्चकनकोज्ज्वलाः ॥ ग्रैवेयाण्यथशक्तीश्चपताकाः
कणपांस्तथा ५४ तूणीरानथयंत्राणिविचित्राणिधनूंषिच ॥ भिंदिपालानिशुभ्राणितोत्राणिचांकुशैःसह ५५ घंटाश्चविविधाराजन्हेमगर्भान्त्सरूनपि ॥ पततः
पातितांश्चैवपश्यामःसहसादिभिः ५६

कालीननाशकयमतुल्यः ४७ । ४८ । ४९ भ्रांतमित्यादि । भ्रांतंमंडलाकृति तदेववक्रमोपेतमाविद्धं भ्रांतमेवोन्नतिसहितमुद्भ्रांतं आप्लुतंकेवलमुत्प्लवनं प्रसृतंसर्वासुदिक्षुप्रसरणं प्लुतमेकस्यांदिशि संपातंवेगं समुदी
र्णंसर्वान्प्रतिसमुद्यमं ५० । ५१ । ५२ तोमरान्बाणविशेषान् महामात्रोहस्तिपकः ५३ कणपान्मुद्गरान् ५४ यंत्राणिसारिप्रभृतीनि तोत्राणिकर्णमूलतोदनानि ५५ । ५६

गात्रावरैर्गात्रैःपूर्वकायैः अवरैरधःकायैः 'द्वौपूर्वपश्चाज्जंघादिदेशौगात्रावरौक्रमात्' इतिकोशः ५७। ५८ खलीनानिअश्वस्यनिवेश्यानि 'कडिआळी' इतिप्रसिद्धानि कक्ष्यागजमध्यबंधनं ५९ आस्तरणा

छिन्नगात्रावरकैर्निहतैश्चापिवारणैः ॥ आसीद्भूमिःसमास्तीर्णापतितैर्भूधरैरिव ५७ विमृद्यैवंमहानागान्ममर्दान्यान्महाबलः ॥ अश्वारोहवरांश्चैवपातयामाससंयुगे
५८ तद्घोरमभवद्युद्धंतस्यतेषांचभारत ॥ खलीनान्यथयोक्त्राणिकक्ष्याश्चकनकोज्ज्वलाः ५९ परिस्तोमाश्चप्रासाश्चऋष्टयश्चमहाधनाः ॥ कवचान्यथचर्माणिचित्रा
ण्यास्तरणानिच ६० तत्रतत्रापविद्धानिव्यदृश्यंतमहाहवे ॥ प्रासैर्यंत्रैर्विचित्रैश्चशस्त्रैश्चविमलैस्तथा ६१ सचक्रेवसुधांकीर्णांशबलैःकुसुमैरिव ॥ आप्लुत्यरथिनःकां
श्चित्परामृश्यमहाबलः ६२ पातयामासखड्गेनसध्वजानपिपांडवः ॥ मुहुरुत्पततोदिक्षुधावतश्चयशस्विनः ६३ मार्गांश्चचरतश्चित्रान्व्यस्मयंतरणेजनाः ॥ सजघानप
दाकांश्चिद्व्याक्षिप्यान्यानपोथयत् ६४ खड्गेनान्यांश्चचिच्छेदनादेनान्यांश्चभीषयन् ॥ ऊरुवेगेनचाप्यन्यान्पातयामासभूतले ६५ अपरेचैनमालोक्यभयात्पंचत्व
मागताः ॥ एवंसाबहुलासेनाकलिंगानांतरस्विनाम् ६६ परिवार्यरणेभीष्मंभीमसेनमुपाद्रवत् ॥ ततःकालिंगसैन्यानांप्रमुखेभरतर्षभ ६७ श्रुतायुषमभिप्रेक्ष्यभीम
सेनःसमभ्ययात् ॥ तमायांतमभिप्रेक्ष्यकालिंगोनवभिःशरैः ६८ भीमसेनममेयात्माप्रत्यविध्यत्स्तनांतरे ॥ कालिंगबाणाभिहतस्तोत्रार्दितइवद्विपः ६९ भीमसेनः
प्रजज्वालक्रोधेनाग्निरिवेंधितः ॥ अथाशोकःसमादायरथंहेमपरिष्कृतम् ७० भीमंसंपादयामासरथेनरथसारथिः ॥ तमारुह्यरथंतूर्णंकौंतेयःशत्रुसूदनः ७१ कालिंग
मभिदुद्रावतिष्ठतिष्ठेतिचाब्रवीत् ॥ ततःश्रुतायुर्बलवान्भीमायनिशितान्शरान् ७२ प्रेषयामाससंक्रुद्धोदर्शयन्पाणिलाघवम् ॥ सकार्मुकवरोत्सृष्टैर्नवभिर्निशितैःशरैः
७३ समाहतोमहाराजकालिंगेनमहात्मना ॥ संचुक्रुशेभृशंभीमोदंडाहतइवोरगः ७४ क्रुद्धश्चचापमायम्यबलवद्बलिनांवरः ॥ कालिंगमवधीत्पार्थोभीमःसप्तभिरा
यसैः ७५ क्षुराभ्यांचक्ररक्षौचकालिंगस्यमहाबलौ ॥ सत्यदेवंचसत्यंचप्राहिणोद्यमसादनम् ७६ ततःपुनरमेयात्मानाराचैर्निशितैस्त्रिभिः ॥ केतुमंतंरणेभीमोऽगमय
द्यमसादनम् ७७ ततःकलिंगाःसंन्नद्धाभीमसेनममर्षणम् ॥ अनीकैर्बहुसाहस्रैःक्षत्रियाःसमवारयन् ७८ ततःशक्तिगदाखड्गतोमरर्ष्टिपरश्वधैः ॥ कलिंगाश्चततोराजन्
भीमसेनमवाकिरन् ७९ सन्निवार्यसतांघोरांशरवृष्टिंसमुत्थिताम् ॥ गदामादायतरसासन्निपत्यमहाबलः ८० भीमःसप्तशतान्वीराननयद्यमसादनम् ॥ पुनश्चैवद्विसा
हस्रान्कलिंगानरिमर्दनः ८१ प्राहिणोन्मृत्युलोकायतदद्भुतमिवाभवत् ॥ एवंसतान्यनीकानिकलिंगानांपुनःपुनः ८२ बिभेदसमरेतूर्णंप्रेक्ष्यभीष्मंमहारथम् ॥
हतारोहाश्चमातंगाःपांडवेनकृतारणे ८३ विप्रजग्मुरनीकेषुमेघावातहताइव ॥ मृद्नंतःस्वान्यनीकानिविनदंतःशरातुराः ८४ ततोभीमोमहाबाहुःखड्गहस्तोमहाभुजः ॥ ॥ ८७ ॥
संप्रहृष्टोमहाघोषंशंखंप्राध्मापयद्बली ८५

निपर्याच्छादनानि ६० अपविद्धानिपतितानि ६१।६२।६३।६४।६५।६६।६७।६८।६९ अशोकोविशोकः ७०।७१।७२।७३।७४।७५।७६।७७।७८।७९।८०
८१।८२।८३।८४।८५

८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ पारावताश्वस्यमर्कटतिंदुकसमानवर्णाश्वस्य । 'पारावतःकलरवेशैलेमर्कटतिंदुके' इतिविश्वः ९८ । ९९ १००

सर्वकालिंगसैन्यानांमनांसिसमकंपयत् ॥ मोहश्चापिकलिंगानामाविवेशपरंतप ८६ प्राकंपंतचसैन्यानिवाहनानिचसर्वशः ॥ भीमेनसमरेराजन्गजेंद्रेणेवसर्वशः ८७
मार्गान्बहून्विचरताधावताचततस्ततः ॥ मुहुरुत्पतताचैवसंमोहःसमपद्यत ८८ भीमसेनभयत्रस्तंसैन्यंचसमकंपत ॥ क्षोभ्यमाणमसंबाधंग्राहेणेवमहत्सरः ८९
त्रासितेषुचसर्वेषुभीमेनाद्भुतकर्मणा ॥ पुनरावर्तमानेषुविद्रवत्सुचसंवशः ९० सर्वकालिंगयोधेषुपांडूनांध्वजिनीपतिः ॥ अब्रवीत्स्वान्यनीकानियुध्यध्वमितिपा
र्षतः ९१ सेनापतिवचःश्रुत्वाशिखंडिप्रमुखागणाः ॥ भीममेवाभ्यवर्ततरथानीकैःप्रहारिभिः ९२ धर्मराजश्चतान्सर्वानुपजग्राहपांडवः ॥ महतामेघवर्णेनना
गानीकेनपृष्ठतः ९३ एवंसंचोद्यसर्वाणिस्वान्यनीकानिपार्षतः ॥ भीमसेनस्यजग्राहपार्ष्णिंसत्पुरुषैर्वृतः ९४ नहिपंचालराजस्यलोकेकश्चनविद्यते ॥ भीमसात्यक
योरन्यःप्राणेभ्यःप्रियकृत्तमः ९५ सोऽपश्यच्चकलिंगेषुचरंतमरिसूदनः ॥ भीमसेनंमहाबाहुंपार्षतःपरवीरहा ९६ ननर्दबहुधाराजन्हृष्टश्चासीत्परंतपः ॥ शंखंद
ध्मौचसमरेसिंहनादंननादच ९७ सचपारावताश्वस्यरथेहेमपरिष्कृते ॥ कोविदारध्वजंदृष्ट्वाभीमसेनःसमाश्वसत् ९८ धृष्टद्युम्नस्तुतंदृष्ट्वाकलिंगैःसमभिद्रुतम् ॥ भीम
सेनममेयात्मात्राणायाजौसमभ्ययात् ९९ तौदूरात्सात्यकिर्दृष्ट्वाधृष्टद्युम्नवृकोदरौ ॥ कलिंगान्समरेवीरौयोधयेतांमनस्विनौ १०० सतत्रगत्वाशैनेयोजवेनजय
तांवरः ॥ पार्थपार्षतयोःपार्ष्णिंजग्राहपुरुषर्षभः १०१ सकृत्वादारुणंकर्मप्रगृहीतशरासनः ॥ आस्थितोरौद्रमात्मानंकलिंगानन्ववैक्षत २ कलिंगप्रभवांचैव
मांसशोणितकर्दमां ॥ रुधिरस्यंदिनींतत्रभीमःप्रावर्तयन्नदीम् ३ अन्तरेणकलिंगानांपांडवानांचवाहिनीम् ॥ तांसंततारदुस्तारांभीमसेनोमहाबलः ४ भीमसेनं
तथादृष्ट्वाप्राक्रोशंस्तावकान्नृप ॥ कालोऽयंभीमरूपेणकलिंगैःसहयुध्यते ५ ततःशांतनवोभीष्मःश्रुत्वातंनिनदंरणे ॥ अभ्ययात्त्वरितोभीमंव्यूढानीकःसमन्ततः ६
तंसात्यकिर्भीमसेनोधृष्टद्युम्नश्चपार्षतः ॥ अभ्यद्रवंतभीष्मस्यरथंहेमपरिष्कृतम् ७ परिवार्यतुतेसर्वेगांगेयंतरसारणे ॥ त्रिभिस्त्रिभिःशरैर्घोरैर्भीष्ममानर्च्छुरोजसा ८
प्रत्यविध्यततान्सर्वान्पितादेवव्रतस्तव ॥ यतमानान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ९ ततःशरसहस्रेणसन्निवार्यमहारथान् ॥ हयान्कांचनसन्नाहान्भीमस्य
न्यहनच्छरैः ११० हताश्वेसरथेतिष्ठन्भीमसेनःप्रतापवान् ॥ शक्तिंचिक्षेपतरसागांगेयस्यरथंप्रति ११ अप्राप्तामथतांशक्तिंपितादेवव्रतस्तव ॥ त्रिधाचिच्छे
दसमरेसापृथिव्यामशीर्यत १२ ततःशैक्यायसींगुर्वींप्रगृह्यबलवान्गदाम् ॥ भीमसेनस्ततस्तूर्णंपुप्लुवेमनुजर्षभ १३ सात्यकोऽपिततस्तूर्णंभीमस्यप्रियका
म्यया ॥ गांगेयसारथिंतूर्णंपातयामाससायकैः १४ भीष्मस्तुनिहतेतस्मिन्सारथौरथिनांवरः ॥ वातायमानैस्तैरश्वैरपनीतोरणाजिरात् ११५

१ । २ । ३ । ४ । ५ । ६ । ७ आनर्च्छुःआच्छादितवंतः ८ । ९ । १० । ११ १२ । १३ । १४ वातायमानैःइतस्ततोधावद्भिः ११५

११६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे चतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ गतेति १ । २ । ३ । ४

भीमसेनस्ततोराजन्नपयातेमहाव्रते ॥ प्रजज्वालयथावह्निर्दहन्कक्षमिवैधितः ११६ सहत्वासर्वकालिंगान्सेनामध्येव्यतिष्ठत ॥ नैनमभ्युत्सहन्केचित्तावकाभरत
र्षभ १७ धृष्टद्युम्नस्तमारोप्यस्वरथेरथिनांवरः ॥ पश्यतांसर्वसैन्यानामपोवाहयशस्विनम् १८ संपूज्यमानःपांचाल्यैर्मत्स्यैश्चभरतर्षभ ॥ धृष्टद्युम्नंपरिष्वज्यसमेयादथ
सात्यकिम् १९ अथाब्रवीद्भीमसेनंसात्यकिःसत्वविक्रमः ॥ प्रहर्षयन्यदुव्याघ्रोधृष्टद्युम्नस्यपश्यतः १२० दिष्ट्याकलिंगराजश्चराजपुत्रश्चकेतुमान् ॥ शक्रदेवश्चकालिं
गःकलिंगाश्चमृधेहताः २१ स्वबाहुबलवीर्येणनागाश्वरथसंकुलः ॥ महापुरुषभूयिष्ठोधीरयोधनिषेवितः २२ महाव्यूहःकलिंगानामेकेनमृदितस्त्वया ॥ एवमुक्त्वा
शिनेर्नप्तादीर्घबाहुररिंदम २३ रथाद्रथमभिद्रुत्यपर्यष्वजतपांडवम् ॥ ततःस्वरथमास्थायपुनरेवमहारथः ॥ तावकानवधीत्क्रुद्धोभीमस्यबलमादधत् १२४ ॥ इतिश्री
महाभारतेभीष्मपर्वणिभीष्मवध० द्वितीययुद्धदिवसेकलिंगराजवधेचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ संजयउवाच ॥ गतपूर्वाह्णभूयिष्ठेतस्मिन्नहनिभारत ॥
रथनागाश्वपत्तीनांसादिनांचमहाक्षये १ द्रोणपुत्रेणशल्येनकृपेणचमहात्मना ॥ समसज्जतपांचाल्यस्त्रिभिरेतैर्महारथैः २ सलोकविदितानश्वान्निजघानमहाबलः ॥
द्रौणेःपांचालदायादःशितैर्दशभिराशुगैः ३ ततःशल्यरथंतूर्णमास्थायहतवाहनः ॥ द्रौणिःपांचालदायादमभ्यवर्षदथेषुभिः ४ धृष्टद्युम्नंतुसंयुक्तंद्रौणिनावीक्ष्यभारत ॥
सौभद्रोऽभ्यपतत्तूर्णंविकिरन्निशितान्शरान् ५ सशल्यंपंचविंशत्याकृपंचनवभिःशरैः ॥ अश्वत्थामानमष्टाभिर्विव्याधपुरुषर्षभः ६ आर्जुनिंतुततस्तूर्णंद्रौणिर्विव्या
धपत्रिणा ॥ शल्योऽथदशभिश्चैवकृपश्चनिशितैस्त्रिभिः ७ लक्ष्मणस्तवपौत्रस्तुसौभद्रंसमवस्थितम् ॥ अभ्यवर्ततसंहृष्टस्ततोयुद्धमवर्तत ८ दौर्योधनिःसुसंक्रुद्धः
सौभद्रंपरवीरहा ॥ विव्याधसमरेराजंस्तदद्भुतमिवाभवत् ९ अभिमन्युःसुसंक्रुद्धोभ्रातरंभरतर्षभ ॥ शरैःपंचाशतैराजन्क्षिप्रहस्तोऽभ्यविध्यत १० लक्ष्मणोऽपिपुन
स्तस्यधनुश्चिच्छेदपत्रिणा ॥ मुष्टिदेशेमहाराजततस्तेचुक्रुशुर्जनाः ११ तद्विहायधनुश्छिन्नंसौभद्रःपरवीरहा ॥ अन्यदादत्तवांश्चित्रंकार्मुकंवेगवत्तरम् १२ तौतत्रसमरे
युक्तौकृतप्रतिकृतैषिणौ ॥ अन्योन्यंविशिखैस्तीक्ष्णैर्जघ्नतुःपुरुषर्षभौ १३ ततोदुर्योधनोराजादृष्ट्वापुत्रंमहारथम् ॥ पीडितंतवपौत्रेणप्रायात्तत्रप्रजेश्वरः १४ सन्निवृत्ते
तवसुतेसर्वएवजनाधिपाः ॥ आर्जुनिंरथवंशेनसमंतात्पर्यवारयन् १५ सतैःपरिवृतःशूरैःशूरोयुधिसुदुर्जयैः ॥ नस्मप्रव्यथतेराजन्कृष्णतुल्यपराक्रमः १६ सौभद्रमथ
संसक्तंदृष्ट्वातत्रधनंजयः ॥ अभिदुद्राववेगेनत्रातुकामःस्वमात्मजम् १७ ततःसरथनागाश्वाभीष्मद्रोणपुरोगमाः ॥ अभ्यवर्ततराजानःसहिताःसव्यसाचिनम् १८ उद्धूतं
सहसाभौमंनागाश्वरथपत्तिभिः ॥ दिवाकररथंप्राप्यरजस्तीव्रमदृश्यत १९ तानिनागसहस्राणिभूमिपालशतानिच ॥ तस्यबाणपथंप्राप्यनाभ्यवर्ततसर्वशः २०

५ । ६ । ७ । ८ । ९ । १० ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । यथाकुर्याद्धनंजयःधनंजयोऽग्निरर्जुनोवासयथाकुर्यादित्यसाधारण्योक्तिः ३७ । ३८

प्रणेदुःसर्वभूतानिबभूवुस्तिमिरादिशः ॥ कुरूणांचानयस्तीव्रःसमदृश्यतदारुणः २१ नाप्यंतरिक्षंनदिशोनभूमिर्नचभास्करः ॥ प्रजज्ञेभरतश्रेष्ठशस्त्रसंघैःकिरी
टिनः २२ सादितारथनागाश्वहताश्वारथिनोरणे ॥ विप्रद्रुतरथाःकेचिद्दृश्यंतेरथयूथपाः २३ विरथारथिनश्चान्येधावमानाःसमंततः ॥ तत्रतत्रैवदृश्यंतेसा
युधाःसांगदैर्भुजैः २४ हयारोहाहयांस्त्यक्त्वागजारोहाश्चदंतिनः ॥ अर्जुनस्यभयाद्राजन्समंताद्विप्रदुद्रुवुः २५ रथेभ्यश्चगजेभ्यश्चहयेभ्यश्चनराधिपाः ॥ प
तिताःपात्यमानाश्चदृश्यंतेऽर्जुनसायकैः २६ सगदानुद्यतान्बाहून्सखड्गांश्चविशांपते ॥ सप्रासांश्चसतूणीरान्सशरान्सशरासनान् २७ सांकुशान्सपताकांश्चतत्र
तत्रार्जुनोनृणाम् ॥ निचकर्तशरैरुग्रैरौद्रंवपुरधारयत् २८ परिघाणांप्रदीप्तानांमुद्गराणांचमारिष ॥ प्रासानांभिंदिपालानांनिस्त्रिंशानांचसंयुगे २९ परश्वधानांती
क्ष्णानांतोमराणांचभारत ॥ वर्मणांचापविद्धानांकांचनानांचभूमिप ३० ध्वजानांचर्मणांचैवव्यजनानांचसर्वशः ॥ छत्राणांहेमदंडानांतोमराणांचभारत ३१
प्रतोदानांचयोक्त्राणांकशानांचैवमारिष ॥ राशयःस्मात्रदृश्यंतेविनिकीर्णारणक्षितौ ३२ नासीत्तत्रपुमान्कश्चित्तवसैन्यस्यभारत ॥ योऽर्जुनंसमरेशूरंप्रत्युद्या
यात्कथंचन ३३ योयोहिसमरेपार्थंप्रत्युद्यातिविशांपते ॥ ससंख्येविशिखैस्तीक्ष्णैःपरलोकायनीयते ३४ तेषुविद्रवमाणेषुतवयोधेषुसर्वशः ॥ अर्जुनोवासुदे
वश्चदध्मतुर्वारिजोत्तमौ ३५ तत्प्रभग्नंबलंदृष्ट्वापितादेवव्रतस्तव ॥ अब्रवीत्समरेशूरंभारद्वाजंस्मयन्निव ३६ एषपांडुसुतोवीरःकृष्णेनसहितोबली ॥ तथाकरोति
सैन्यानियथाकुर्याद्धनंजयः ३७ नह्येषसमरेशक्योविजेतुंहिकथंचन ॥ यथाऽस्यदृश्यतेरूपंकालांतकयमोपमम् ३८ ननिवर्तयितुंचापिशक्येयंमहतीचमूः ॥
अन्योन्यप्रेक्षयापश्यद्रवतीयंवरूथिनी ३९ एषचास्तंगिरिश्रेष्ठंभानुमान्प्रतिपद्यते ॥ चक्षूंषिसर्वलोकस्यसंहरन्निवसर्वथा ४० तत्रावहारंसंप्राप्तंमन्येऽहंपुरुषर्ष
भ ॥ श्रांताभीताश्चनोयोधानयोत्स्यंतिकथंचन ४१ एवमुक्त्वाततोभीष्मोद्रोणमाचार्यसत्तमम् ॥ अवहारमथोचक्रेतावकानांमहारथः ४२ ततोवहारःसैन्या
नांतवतेषांचभारत ॥ अस्तंगच्छतिसूर्येऽभूत्संध्याकालेचवर्तति ४३ ॥ इति श्रीम० भीष्म० भीष्मवधप० द्वितीययुद्धदिवसावहारेपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥
॥ संजयउवाच ॥ प्रभातायांचशर्वर्यांभीष्मःशांतनवस्तदा ॥ अनीकान्यनुसंयानेव्यादिदेशाथभारत १ गारुडंचमहाव्यूहंचक्रेशांतनवस्तदा ॥ पुत्राणांते
जयाकांक्षीभीष्मःकुरुपितामहः २ गरुडस्यस्वयंतुंडेपितादेवव्रतस्तव ॥ चक्षुषीचभरद्वाजःकृतवर्माचसात्वतः ३ अश्वत्थामाकृपश्चैवशीर्षमास्तांयशस्विनौ ॥
त्रैगर्तैरथकैकेयैर्वाटधानैश्चसंयुगे ४ भूरिश्रवाःशलःशल्योभगदत्तश्चमारिष ॥ मद्रकःसिंधुसौवीरास्तथापांचनदाश्चये ५

अन्योन्यप्रेक्षयापरस्परभंगदर्शनेन ३९ । ४० । ४१ । ४२ वर्ततिवर्तमाने ४३ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ प्रभातायामिति १ । २ । ३ । ४ । ५

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिभीष्मपर्वणि नीलकंठीयेभारतभावदीपे षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥

जयद्रथेनसहिताग्रीवायांसन्निवेशिताः ॥ पृष्ठेदुर्योधनोराजासोदर्यैःसानुगैर्वृतः ६ विन्दानुविन्दावावंत्यौकांबोजश्चशकैःसह ॥ पुच्छमासन्महाराजशूरसेनाश्चसर्वशः
७ मागधाश्चकलिंगाश्चदासेरकगणैःसह ॥ दक्षिणंपक्षमासाद्यस्थिताव्यूहस्यदंशिताः ८ कारूषाश्चविकुंजाश्चमुंडाःकुंडीवृषास्तथा ॥ बृहद्बलेनसहितावामं
पार्श्वमवस्थिताः ९ व्यूढंदृष्ट्वातुतत्सैन्यंसव्यसाचीपरंतपः ॥ धृष्टद्युम्नेनसहितःप्रत्यव्यूहतसंयुगे १० अर्धचंद्रेणव्यूहेनव्यूहंतमतिदारुणम् ॥ दक्षिणंशृंगमा
स्थायभीमसेनोव्यरोचत ११ नानाशस्त्रौघसंपन्नैर्नानादेश्यैर्नृपैर्वृतः ॥ तदन्वेवविराटश्चद्रुपदश्चमहारथः १२ तदनंतरमेवासीन्नीलोनीलायुधैःसह ॥ नीलाद
नंतरश्चैवधृष्टकेतुर्महाबलः १३ चेदिकाशिकरूषैश्चपौरवैरपिसंवृतः ॥ धृष्टद्युम्नःशिखंडीचपंचालाश्चप्रभद्रकाः १४ मध्येसैन्यस्यमहतःस्थितायुद्धायभारत ॥
तत्रैवधर्मराजोऽपिगजानीकेनसंवृतः १५ ततस्तुसात्यकीराजन्द्रौपद्याःपंचचात्मजाः ॥ अभिमन्युस्ततःशूरइरावांश्चततःपरम् १६ भैमसेनिस्ततोराजन्के
कयाश्चमहारथाः ॥ ततोऽभूद्द्विपदांश्रेष्ठोवामंपार्श्वमुपाश्रितः १७ सर्वस्यजगतोगोप्तागोप्तायस्यजनार्दनः ॥ एवमेतंमहाव्यूहंप्रत्यव्यूहंतपांडवाः १८ वधार्थं
तवपुत्राणांतत्पक्षंयेचसंगताः ॥ ततःप्रववृतेयुद्धंव्यतिषक्तरथद्विपम् १९ तावकानांपरेषांचनिघ्नतामितरेतरम् ॥ हयौघाश्चरथौघाश्चतत्रतत्रविशांपते २० संप
तंतोव्यदृश्यंतनिघ्नंतस्तेपरस्परम् ॥ धावतांचरथौघानांनिघ्नतांचपृथक्पृथक् २१ बभूवतुमुलःशब्दोविमिश्रोदुंदुभिस्वनैः ॥ दिवस्पृङ्नरवीराणांनिघ्नतामितरेतरम् ॥
संप्रहारेसुतुमुलेतवतेषांचभारत २२ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणितृतीयेयुद्धदिवसेपरस्परव्यूहरचनायांषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥
संजयउवाच ॥ ततोव्यूढेष्वनीकेषुतावकेषुपरेषुच ॥ धनंजयोरथानीकमवधीत्तवभारत १ शरैरतिरथोयुद्धेदारयन्रथयूथपान् ॥ तेवध्यमानाःपार्थेनकालेनेवयुग
क्षये २ धार्तराष्ट्रारणेयत्नात्पांडवान्प्रत्ययोधयन् ॥ प्रार्थयानायशोदीप्तंमृत्युंकृत्वानिवर्तनम् ३ एकाग्रमनसोभूत्वापांडवानांवरूथिनीम् ॥ बभंजुर्बहुशोराजंस्ते
चासज्जंतसंयुगे ४ द्रवद्भिरथभग्नैश्चपरिवर्तद्भिरेवच ॥ पांडवैःकौरवेयैश्चनप्राज्ञायतकिंचन ५ उदतिष्ठद्रजोभौमंछादयानंदिवाकरम् ॥ नदिशःप्रदिशोवापितत्रह
न्युःकथंनराः ६ अनुमानेनसंज्ञाभिर्नामगोत्रैश्चसंयुगे ॥ वर्त्ततेचतथायुद्धंतत्रतत्रविशांपते ७ नव्यूहोभिद्यतेतत्रकौरवाणांकथंचन ॥ रक्षितःसत्यसंधेनभा
रद्वाजेनसंयुगे ८ तथैवपांडवानांचरक्षितःसव्यसाचिना ॥ नाभिद्यतमहाव्यूहोभीमेनचसुरक्षितः ९ सेनाग्रादपिनिष्पत्यप्रायुध्यंस्तत्रमानवाः ॥ उभयोः
सेनयोराजन्व्यतिषक्तरथद्विपाः १० हयारोहैर्हयारोहाःपात्यंतेस्ममहाहवे ॥ ऋष्टिभिर्विमलाभिश्चप्रासैरपिचसंयुगे ११

॥ ततइति १ । २ मृत्युंकृत्वानिवर्तनंमृत्युरेवनिवर्तनहेतुर्नान्यइत्यर्थः ३ । ४ । ५ । ६ । अनुमानेनध्वजादिचिन्हेनं संज्ञाभिःसंकेतैश्च ७ । ८ । ९ । १० । ११

रथीरथिनमासाद्यशरैःकनकभूषणैः ॥ पातयामाससमरेतस्मिन्नतिभयंकरे १२ गजारोहागजारोहान्नाराचशरतोमरैः ॥ संसक्तान्पातयामासुस्तवतेषांचसर्वशः १३
कश्चिदुत्पत्यसमरेवरवारणमास्थितः ॥ केशपक्षेपरामृश्यजहारसमरेशिरः १४ अन्येद्विरददंताग्रनिर्भिन्नहृदयारणे ॥ वेमुश्चरुधिरंवीरानिःश्वसंतःसमंततः १५ कश्चि
त्करिविषाणस्थोवीरोरणविशारदः ॥ प्रावेपच्छक्तिनिर्भिन्नोगजशिक्षास्त्रवेदिना १६ पत्तिसंघारणेपत्तीन्भिंदिपालपरश्वधैः ॥ न्यपातयंतसंहृष्टाःपरस्परकृतागसः १७
रथीचसमरेराजन्नासाद्यगजयूथपम् ॥ सगजंपातयामासगजीचरथिनांवरम् १८ रथिनंचहयारोहःप्रासेनभरतर्षभ ॥ पातयामाससमरेरथीचहयसादिनम् १९ पदाती
रथिनंसंख्येरथीचापिपदातिनम् ॥ न्यपातयच्छितैःशस्त्रैःसेनयोरुभयोरपि २० गजारोहाहयारोहान्पातयांचक्रिरेतदा ॥ हयारोहागजस्थांश्चतदद्भुतमिवाभवत् २१
गजारोहवरैश्चापितत्रतत्रपदातयः ॥ पातिताःसमदृश्यंततेश्चापिगजयोधिनः २२ पत्तिसंघाहयारोहैःसादिसंघाश्चपत्तिभिः ॥ पात्यमानाव्यदृश्यंतशतशोऽथसहस्रशः
२३ ध्वजैस्तत्रापविद्धैश्चकार्मुकैस्तोमरैस्तथा ॥ प्रासैस्तथागदाभिश्चपरिघैःकंपनैस्तथा २४ शक्तिभिःकवचैश्चित्रैःकणपैरंकुशैरपि ॥ निस्त्रिंशैर्विमलैश्चापिस्वर्णपुंखैः
शरैस्तथा २५ परिस्तोमैःकुथाभिश्चकंबलैश्चमहाधनैः ॥ भूर्भातिभरतश्रेष्ठस्रग्दामैरिवचित्रिता २६ नराश्वकायैःपतितैर्दंतिभिश्चमहाहवे ॥ अगम्यरूपापृथिवीमांस
शोणितकर्दमा २७ प्रशशामरजोभौमंव्युक्षितंरणशोणितैः ॥ दिशश्चविमलाःसर्वाःसंबभूवुर्जनेश्वर २८ उत्थितान्यगणेयानिकबंधानिसमंततः ॥ चिन्हभूतानिज
गतोविनाशार्थायभारत २९ तस्मिन्युद्धेमहारौद्रेवर्तमानेसुदारुणे ॥ प्रत्यदृश्यंतरथिनोधावमानाःसमंततः ३० ततोभीष्मश्चद्रोणश्चसैंधवश्चजयद्रथः ॥ पुरुमित्रो
जयोभोजःशल्यश्चापिससौबलः ३१ एतेसमरदुर्धर्षाःसिंहतुल्यपराक्रमाः ॥ पांडवानामनीकानिबभंजुःस्मपुनःपुनः ३२ तथैवभीमसेनोऽपिराक्षसश्चघटोत्कचः ॥
सात्यकिश्चेकितानश्चद्रौपदेयाश्चभारत ३३ तावकांस्तवपुत्रांश्चसहितान्सर्वराजभिः ॥ द्रावयामासुराजौतेत्रिदशादानवानिव ३४ तथातेसमरेऽन्योन्यंनिघ्नन्तःक्षत्रिय
र्षभाः ॥ रक्तोक्षितावोररूपाविरेजुर्दानवाइव ३५ विनिर्जित्यरिपून्वीराःसेनयोरुभयोरपि ॥ व्यदृश्यंतमहामात्राग्रहाइवनभस्तले ३६ ततोरथसहस्रेणपुत्रोदुर्योधन
स्तव ॥ अभ्ययात्पांडवंयुद्धेराक्षसंचघटोत्कचम् ३७ तथैवपांडवाःसर्वेमहत्यासेनयासह ॥ द्रोणभीष्मौरणेयत्तौप्रत्युद्ययुररिंदमौ ३८ किरीटीचययौक्रुद्धःसमंतात्पा
र्थिवोत्तमान् ॥ आर्जुनिःसात्यकिश्चैवययतुःसौबलंबलम् ३९ ततःप्रववृतेभूयःसंग्रामोलोमहर्षणः ॥ तावकानांपरेषांचसमरेविजयैषिणाम् ४० ॥ इतिश्रीमहाभार
तभीष्मपर्वणिभीष्मवधपर्वणितृतीयेयुद्धदिवसेसंकुलयुद्धेसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥

 अनेनस्रजांबाहुल्यंदैर्घ्यंचप्रदर्शितं २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ महामात्राःप्रधानाः ३६ । ३७ । ३८ । ३९ । ४० ॥ इतिभी०नी०भा० सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥

ततस्तेइति १ कोष्ठकीकृत्यवेष्टयित्वा २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

॥ संजयउवाच ॥ ततस्तेपार्थिवाःक्रुद्धाःफाल्गुनंवीक्ष्यसंयुगे ॥ रथैरनेकसाहस्रैःसमंतात्पर्यवारयन् १ अथैनंरथवृंदेनकोष्ठकीकृत्यभारत ॥ शरैःसुबहुसाहस्रैःसमंता
दभ्यवारयन् २ शक्तीश्चविमलास्तीक्ष्णागदाश्चपरिघैःसह ॥ प्रासान्परश्वधांश्चैवमुद्गरान्मुसलानपि ३ चिक्षिपुःसमरेक्रुद्धाःफाल्गुनस्यरथंप्रति ॥ शस्त्राणामथतांवृ
ष्टिंशलभानामिवायतिम् ४ रुरोधसर्वतःपार्थःशरैःकनकभूषणैः ॥ तत्रतल्लाघवंदृष्ट्वाबीभत्सोरतिमानुषम् ५ देवदानवगंधर्वाःपिशाचोरगराक्षसाः ॥ साधुसाध्वितिराजेंद्र
फाल्गुनंप्रत्यपूजयन् ६ सात्यकिश्चाभिमन्युश्चमहत्यासेनयावृतौ ॥ गांधारान्समरेशूरान्जग्मतुःसहसौबलान् ७ तत्रसौबलकाःक्रुद्धावार्ष्णेयस्यरथोत्तमम् ॥ तिल
शश्चिच्छिदुःक्रोधाच्छस्त्रैर्नानाविधैर्युधि ८ सात्यकिस्तुरथंत्यक्त्वावर्तमानेभयावहे ॥ अभिमन्योरथंतूर्णमारुरोहपरंतपः ९ तावेकरथसंयुक्तौसौबलेयस्यवाहिनीम् ॥
व्यधमेतांशितैस्तूर्णंशरैःसन्नतपर्वभिः १० द्रोणभीष्मौरणेयत्तौधर्मराजस्यवाहिनीम् ॥ नाशयेतांशरैस्तीक्ष्णैःकंकपत्रपरिच्छदैः ११ ततोधर्मसुतोराजामाद्रीपुत्रौच
पांडवौ ॥ मिषतांसर्वसैन्यानांद्रोणानीकमुपाद्रवन् १२ तत्रासीत्सुमहद्युद्धंतुमुलंलोमहर्षणम् ॥ यथादेवासुरंयुद्धंपूर्वमासीत्सुदारुणम् १३ कुर्वाणौसुमहत्कर्मभीमसेन
घटोत्कचौ ॥ दुर्योधनस्ततोऽभ्येत्यतावुभावप्यवारयत् १४ तत्राद्भुतमपश्यामहैडिंबस्यपराक्रमम् ॥ अतीत्यपितरंयुद्धेयदयुध्यतभारत १५ भीमसेनस्तुसंक्रुद्धोदुर्यो
धनममर्षणम् ॥ हृद्यविध्यत्पृषत्केनप्रहसन्निवपांडवः १६ ततोदुर्योधनोराजाप्रहारवरपीडितः ॥ निषसादरथोपस्थेकश्मलंचजगामह १७ तंविसंज्ञंविदित्वातुत्वरमाणो
ऽस्यसारथिः ॥ अपोवाहरणाद्राजंस्ततःसैन्यमभज्यत १८ ततस्तांकौरवींसेनांद्रवमाणांसमंततः ॥ निघ्नन्भीमःशरैस्तीक्ष्णैरनुवव्राजपृष्ठतः १९ पार्षतश्चरथश्रेष्ठोधर्म
पुत्रश्चपांडवः ॥ द्रोणस्यपश्यतःसैन्यंगांगेयस्यचपश्यतः २० जघ्नतुर्विशिखैस्तीक्ष्णैःपरानीकविनाशनैः ॥ द्रवमाणंतुतत्सैन्यंतवपुत्रस्यसंयुगे २१ नाशक्नुतांवारयितुं
भीष्मद्रोणौमहारथौ ॥ वार्यमाणंचभीष्मेणद्रोणेनचमहात्मना २२ विद्रवत्येवतत्सैन्यंपश्यतोर्द्रोणभीष्मयोः ॥ ततोरथसहस्रेषुविद्रवत्सुततस्ततः २३ तावास्थितावेक
रथंसौभद्रशिनिपुंगवौ ॥ सौबलींसमरेसेनांशातयेतांसमंततः २४ शुशुभातेतदातौतुशैनेयकुरुपुंगवौ ॥ अमावास्यांगतौयद्वत्सोमसूर्यौनभस्तले २५ अर्जुनस्तुततःक्रु
द्धस्तवसैन्यंविशांपते ॥ ववर्षशरवर्षेणधाराभिरिवतोयदः २६ वध्यमानंततस्तत्रशरैःपार्थस्यसंयुगे ॥ दुद्रावकौरवंसैन्यंविषादभयकंपितम् २७ द्रवतस्तान्समालक्ष्यभी
ष्मद्रोणौमहारथौ ॥ न्यवारयेतांसंरब्धौदुर्योधनहितैषिणौ २८ ततोदुर्योधनोराजासमाश्वस्यविशांपते ॥ न्यवर्तयततत्सैन्यंद्रवमाणंसमंततः २९ यत्रयत्रसुतस्तुभ्यंयं
यंपश्यतिभारत ॥ तत्रतत्रन्यवर्ततक्षत्रियाणांमहारथाः ३० तान्निवृत्तान्समीक्ष्यैवततोऽन्येऽपीतरेजनाः ॥ अन्योन्यस्पर्धयाराजन्लज्जयाचावतस्थिरे ३१

२५ । २६ । २७ । २८ । २९ । ३० । ३१

पुनरावर्ततांतेषांवेगआसीद्विशांपते ॥ पूर्यतःसागरस्येवचंद्रस्योदयनंप्रति ३२ सन्निवृत्तांस्ततस्तांस्तुदृष्ट्वाराजासुयोधनः ॥ अब्रवीत्त्वरितोगत्वाभीष्मंशांतनवं
वचः ३३ पितामहनिबोधेदंयत्त्वांवक्ष्यामिभारत ॥ नानुरूपमहंमन्येत्वयिजीवतिकौरव ३४ द्रोणेचास्त्रविदांश्रेष्ठेसपुत्रेससुहृज्जने ॥ कृपेचैवमहेष्वासेद्रवतेयद्व
रूथिनी ३५ नपांडवान्प्रतिबलांस्तवमन्येकथंचन ॥ तथाद्रोणस्यसंग्रामेद्रौणेश्चैवकृपस्यच ३६ अनुग्राह्याःपांडुसुतास्तवनूनंपितामह ॥ यथेमांक्षमसेवीरवध्यमानां
वरूथिनीम् ३७ सोऽस्मिवाच्यस्त्वयाराजन्पूर्वमेवसमागमे ॥ नयोत्स्येपांडवान्संख्येनापिपार्षतसात्यकी ३८ श्रुत्वातुवचनंतुभ्यमाचार्यस्यकृपस्यच ॥ कर्णेनस
हितःकृत्यंचिंतयानस्तदैवहि ३९ यदिनाहंपरित्याज्योयुवाभ्यामिहसंयुगे ॥ विक्रमेणानुरूपेणयुध्येतांपुरुषर्षभौ ४० एतच्छ्रुत्वावचोभीष्मःप्रहसन्वैमुहुर्मुहुः ॥
अब्रवीत्तनयंतुभ्यंक्रोधादुद्वृत्यचक्षुषी ४१ बहुशोऽसिमयाराजंस्तथ्यमुक्तोहितंवचः ॥ अजेयाःपांडवायुद्धेदेवैरपिसवासवैः ४२ यत्तुशक्यंमयाकर्तुंवृद्धेनाद्यनृपो
त्तम ॥ करिष्यामियथाशक्तिप्रेक्षेदानींसबांधवः ४३ अद्यपांडुसुतानेकःससैन्यान्सहबंधुभिः ॥ सोऽहंनिवारयिष्यामिसर्वलोकस्यपश्यतः ४४ एवमुक्तेतुभीष्मेण
पुत्रास्तवजनेश्वर ॥ दध्मुःशंखान्मुदायुक्ताभेरीःसंजघ्निरेभृशम् ४५ पांडवाहिततोराजन्श्रुत्वातंनिनदंमहत् ॥ दध्मुःशंखांश्चभेरीश्चमुरजांश्चाप्यनादयन् ४६
॥ ॥ इति श्रीम० भी० भीष्मवधप० तृतीययुद्धदिवसेभीष्मदुर्योधनसंवादेअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥
प्रतिज्ञातेततस्तस्मिन्युद्धेभीष्मेणदारुणे ॥ क्रोधितोममपुत्रेणदुःखितेनविशेषतः १ भीष्मःकिमकरोत्तत्रपांडवेयेषुभारत ॥ पितामहेवापंचालास्तन्ममाच
क्ष्वसंजय २ ॥ संजयउवाच ॥ गतपूर्वाह्णभूयिष्ठेतस्मिन्नहनिभारत ॥ पश्चिमांदिशमास्थायस्थितेचापिदिवाकरे ३ जयंप्राप्तेषुहृष्टेषुपांडवेषुमहात्मसु ॥ सर्वधर्मविशे
षज्ञःपितादेवव्रतस्तव ४ अभ्ययाज्जवनैरश्वैःपांडवानामनीकिनीम् ॥ महत्यासेनयागुप्तस्तवपुत्रैश्चसर्वशः ५ प्रावर्ततततोयुद्धंतुमुलंलोमहर्षणम् ॥ अस्माकंपांडवैः
सार्धमनयात्तवभारत ६ धनुषांकूजतांतत्रतलानांचाभिहन्यताम् ॥ महान्समभवच्छब्दोगिरीणामिवदीर्यताम् ७ तिष्ठस्थितोऽस्मिविद्ध्येनंनिवर्तस्वस्थिरोभव ॥
स्थिरोऽस्मिप्रहरस्वेतिशब्दोऽश्रूयतसर्वशः ८ कांचनेषुतनुत्रेषुकिरीटेषुध्वजेषुच ॥ शिलानामिवशैलेषुपतितानामभूद्ध्वनिः ९ पतितान्युत्तमांगानिबाहवश्चवि
भूषिताः ॥ व्यचेष्टंतमहींप्राप्यशतशोऽथसहस्रशः १० हृतोत्तमांगाःकेचित्तुतथैवोद्यतकार्मुकाः ॥ प्रगृहीतायुधाश्चापितस्थुःपुरुषसत्तमाः ११ प्रावर्ततमहावे
गानदीरुधिरवाहिनी ॥ मातंगांगशिलारौद्रामांससशोणितकर्दमा १२ वराश्वनरनागानांशरीरप्रभवातदा ॥ परलोकार्णवमुखीगृध्रगोमायुमोदिनी १३

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । पिंडितान्एकस्थान् वर्मितान्कवचिनः ३१ । ३२ । ३३ । ३४ । ३५

नदृष्टंनश्रुतंवापियुद्धमेतादृशंनृप ॥ यथातवसुतानांचपांडवानांचभारत १४ नासीद्रथपथस्तत्रयोधैर्युधिनिपातितैः ॥ गजैश्वपतितैर्नीलैर्गिरिशृंगैरिवावृतः १५
विकीर्णैःकवचैश्चित्रैःशिरस्त्राणैश्चमारिष ॥ शुशुभेतद्रणस्थानंशरदीवनभस्तलम् १६ विनिर्भिन्नाःशरैःकेचिदंत्रापीडप्रकर्षिणः ॥ अभीताःसमरेशत्रूनभ्यधावंत
दर्पिताः १७ तातभ्रातःसखेबंधोवयस्यममातुल ॥ मामांपरित्यजेत्यन्येचुक्रुशुःपतितारणे १८ अथाभ्येहित्वमागच्छकिंभीतोऽसिक्वयास्यसि ॥ स्थितोऽहं
समरेमाभैरितिचान्येविचुक्रुशुः १९ तत्रभीष्मःशांतनवोनित्यंमंडलकार्मुकः ॥ मुमोचबाणान्दीप्ताग्रानहीनाशीविषानिव २० शरैरेकायनीकुर्वन्दिशःसर्वायत
व्रतः ॥ जघानपांडवरथानादिश्यभरतर्षभ २१ सनृत्यन्वैरथोपस्थेदर्शयन्पाणिलाघवम् ॥ अलातचक्रवद्राजंस्तत्रतत्रस्मदृश्यते २२ तमेकंसमरेशूरंपांडवाः
सृंजयैःसह ॥ अनेकशतसाहस्रंसमपश्यंतलाघवात् २३ मायाकृतात्मानमिवभीष्मंतत्रस्ममेनिरे ॥ पूर्वस्यांदिशितंदृष्ट्वाप्रतीच्यांददृशुर्जनाः २४ उदीच्यांचैवमा
लोक्यदक्षिणस्यांपुनःप्रभो ॥ एवंससमरेशूरोगांगेयःप्रत्यदृश्यत २५ नचैवंपांडवेयानांकश्चिच्छक्नोतिवीक्षितुम् ॥ विशिखानेवपश्यंतिभीष्मचापच्युतान्बहून् २६
कुर्वाणंसमरेकर्मसूदयानंचवाहिनीम् ॥ व्याक्रोशंतरणेतत्रनराबहुविधाबहु २७ अमानुषेणरूपेणचरंतंपितरंतव ॥ शलभाइवराजानःपतंतिविधिचोदिताः २८
भीष्माग्निमभिसंक्रुद्धंविनाशायसहस्रशः ॥ नहिमोघःशरःकश्चिदासीद्भीष्मस्यसंयुगे २९ नरनागाश्वकायेषुबहुत्वाल्लघुयोधिनः ॥ भिनत्त्येकेनबाणेनसुमुखेन
पतत्रिणा ३० गजकंटकसन्नद्धंवज्रेणेवशिलोच्चयम् ॥ द्वौत्रीनपिगजारोहान्पिंडितान्वर्मितानपि ३१ नाराचेनसुमुक्तेननिजघानपितातव ॥ योयोभीष्मंनरव्या
घ्रमभ्येतियुधिकश्चन ३२ मुहूर्तदृष्टःसमयापतितोभुविदृश्यते ॥ एवंसाधर्मराजस्यवध्यमानामहाचमूः ३३ भीष्मेणातुलवीर्येणव्यशीर्यतसहस्रधा ॥ प्राकंपत
महासेनाशरवर्षेणतापिता ३४ पश्यतोवासुदेवस्यपार्थस्याथशिखंडिनः ॥ यतमानाऽपितेवीराद्रवमाणान्महारथान् ३५ नाशक्नुवन्वारयितुंभीष्मबाणप्रपीडि
तान् ॥ महेंद्रसमवीर्येणवध्यमानामहाचमूः ३६ अभज्यतमहाराजनचद्वौसहधावतः ॥ आविद्धनरनागाश्वंपतितध्वजकूबरम् ३७ अनीकंपांडुपुत्राणांहाहा
भूतमचेतनम् ॥ जघानात्रपितापुत्रंपुत्रश्चपितरंतथा ३८ प्रियंसखायंचाक्रंदेसखादैवबलात्कृतः ॥ विमुच्यकवचान्यन्येपांडुपुत्रस्यसैनिकाः ३९ विमुक्तकेशा
धावंतःप्रत्यदृश्यंतभारत ॥ तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथयूथपम् ४० ददृशेपांडुपुत्रस्यसैन्यमार्तस्वरंतदा ॥ प्रभज्यमानंसैन्यंतुदृष्ट्वायादवनंदनः ४१ उवाचपार्थं
बीभत्सुंनिगृह्यरथमुत्तमम् ॥ अयंसकालःसंप्राप्तःपार्थयस्तेऽभिकांक्षितः ४२ प्रहरस्वनरव्याघ्रनचेन्मोहाद्विमुह्यसे ॥ यत्त्वयाकथितंवीरपुराराज्ञांसमागमे ४३

३६ । ३७ आक्रन्देयुद्धे ३८ । ३९ । ४० । ४१ । ४२ । ४३

भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्यसैनिकान् ॥ सानुबंधान्हनिष्वामियेमांयोत्स्यंतिसंयुगे ४४ इतितत्कुरुकौन्तेयसत्यंवाक्यमरिंदम ॥ बीभत्सोपश्यसैन्यंस्वंभज्यमानं
ततस्ततः ४५ द्रवतश्चमहीपालान्पश्ययौधिष्ठिरेबले ॥ दृष्ट्वाहिभीष्मंसमरेव्यात्ताननमिवांतकम् ४६ भयार्ताःप्रपलायंतेसिंहात्क्षुद्रमृगाइव ॥ एवमुक्तःप्रत्युवाचवासु
देवंधनंजयः ४७ नोदयाश्वान्यतोभीष्मोविगाह्येतद्बलार्णवम् ॥ पातयिष्यामिदुर्धर्षंवृद्धंकुरुपितामहम् ४८ ॥ संजयउवाच ॥ ततोऽश्वान्रजतप्रख्यान्नोदयामासमा
धवः ॥ यतोभीष्मरथोराजन्दुष्प्रेक्ष्योरश्मिवानिव ४९ ततस्तत्पुनरावृत्तंयुधिष्ठिरबलंमहत् ॥ दृष्ट्वापार्थंमहाबाहुंभीष्मायोद्यतमाहवे ५० ततोभीष्मःकुरुश्रेष्ठसिंहवद्वि
नदन्मुहुः ॥ धनंजयरथंशीघ्रंशरवर्षैरवाकिरत् ५१ क्षणेनसरथस्तस्यसहयःसहसारथिः ॥ शरवर्षेणमहतासंछन्नोनप्रकाशते ५२ वासुदेवस्त्वसंभ्रांतोधैर्यमास्थायसत्त्व
वान् ॥ चोदयामासतानश्वान्विचितान्भीष्मसायकैः ५३ ततःपार्थोधनुर्गृह्यदिव्यंजलदनिःस्वनम् ॥ पातयामासभीष्मस्यधनुश्छित्वात्रिभिःशरैः ५४ सच्छिन्नध
न्वाकौरव्यःपुनरन्यन्महद्धनुः ॥ निमिषांतरमात्रेणसज्जंचक्रेपितातव ५५ विचकर्षततोदोर्भ्यांधनुर्जलदनिःस्वनम् ॥ अथास्यतदपिक्रुद्धश्चिच्छेदधनुरर्जुनः ५६
तस्यतत्पूजयामासलाघवंशांतनोःसुतः ॥ साधुपार्थमहाबाहोसाधुभोपांडुनंदन ५७ त्वय्येवैतद्युक्तरूपंमहत्कर्मधनंजय ॥ प्रीतोऽस्मिसुभृशंपुत्रकुरुयुद्धंमयासह ५८
इतिपार्थंप्रशस्याथप्रगृह्यान्यन्महद्धनुः ॥ मुमोचसमरेवीरःशरान्पार्थरथंप्रति ५९ अदर्शयद्वासुदेवोहययानेपरंबलम् ॥ मोघान्कुर्वन्शरांस्तस्यमंडलान्याचरल्लघु ६०
तथाभीष्मस्तुसुदृढंवासुदेवधनंजयौ ॥ विव्याधनिशितैर्बाणैःसर्वगात्रेषुभारत ६१ शुशुभातेनरव्याघ्रौतौभीष्मशरविक्षतौ ॥ गोवृषाविवसंरब्धौविषाणैर्लिखितांकितौ
६२ पुनश्चापिसुसंरब्धःशरैःशतसहस्रशः ॥ कृष्णयोर्युधिसंरब्धोभीष्मोऽथावारयद्दिशः ६३ वार्ष्णेयंचशरैस्तीक्ष्णैःकंपयामासरोषितः ॥ मुहुरभ्यर्दयन्भीष्मःप्रह
स्यस्वनवत्तदा ६४ ततस्तुकृष्णःसमरेदृष्ट्वाभीष्मपराक्रमम् ॥ संप्रेक्ष्यचमहाबाहुःपार्थस्यमृदुयुद्धताम् ६५ भीष्मंचशरवर्षाणिसृजंतमनिशंयुधि ॥ प्रतपंतमिवादि
त्यंमध्यमासाद्यसेनयोः ६६ वरान्वरान्विनिघ्नंतंपांडुपुत्रस्यसैनिकान् ॥ युगांतमिवकुर्वाणंभीष्मंयौधिष्ठिरेबले ६७ अमृष्यमाणोभगवान्केशवःपरवीरहा ॥ अचिं
तयदमेयात्मानास्तियौधिष्ठिरंबलम् ६८ एकाह्नाहिरणेभीष्मोनाशयेद्देवदानवान् ॥ किन्नुपांडुसुतान्युद्धेसबलान्सपदानुगान् ६९ द्रवतेचमहासैन्यंपांडवस्यमहा
त्मनः ॥ एतेचकौरवास्तूर्णंप्रभग्नान्वीक्ष्यसोमकान् ७० प्राद्रवंतिरणेदृष्ट्वाहर्षयंतःपितामहम् ॥ सोऽहंभीष्मंनिहन्म्यद्यपांडवार्थायदंशितः ७१ भारमेतंविनेष्यामि
पांडवानांमहात्मनाम् ॥ अर्जुनोहिशरैस्तीक्ष्णैर्वध्यमानोऽपिसंयुगे ७२

७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ समुदीर्यमाणंवर्धमानप्रयत्नं ८३ । ८४ । ८५ । ८६ अश्विनोरश्विपुत्रयोर्नकुलसहदेवयोः ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५

कर्तव्यंनाभिजानातिरणेभीष्मस्यगौरवात् ॥ तथाचिंतयतस्तस्यभूयएवपितामहः ॥ प्रेषयामाससंक्रुद्धःशरान्पार्थरथंप्रति ७३ तेषांबहुत्वात्तुभृशंशराणांदिशश्चसर्वाः
पिहिताबभूवुः ॥ नचान्तरिक्षंनदिशोनभूमिर्नभास्करोऽदृश्यतरश्मिमाली ७४ ववुश्चवातास्तुमुलाःसधूमादिशश्चसर्वाःक्षुभिताबभूवुः ॥ द्रोणोविकर्णोऽथजयद्रथश्चभू
रिश्रवाःकृतवर्माकृपश्च ७५ श्रुतायुरंबष्ठपतिश्चराजाविंदानुविंदौचसुदक्षिणश्च ॥ प्राच्याश्चसौवीरगणाश्चसर्वेवसातयःक्षुद्रकमालवाश्च ७६ किरीटिनंत्वरमाणाऽभि
सस्रुर्निदेशगाःशांतनवस्यराज्ञः ॥ तंवाजिपादातरथौघजालैरनेकसाहस्रशतैर्ददर्श ७७ किरीटिनंसंपरिवार्यमाणंशिनेर्नप्तावारणयूथपैश्च ॥ ततस्तुदृष्ट्वार्जुनवासुदे
वौपदातिनागाश्वरथैःसमंतात् ७८ अभिद्रुतौशस्त्रभृतांवरिष्ठौशिनिप्रवीरोऽभिससारतूर्णम् ॥ सतान्यनीकानिमहाधनुष्मान्शिनिप्रवीरःसहसाऽभिपत्य ७९ चकारसा
हाय्यमथार्जुनस्यविष्णुर्यथावृत्रनिषूदनस्य ॥ विशीर्णनागाश्वरथध्वजौघंभीष्मेणवित्रासितसर्वयोधम् ८० युधिष्ठिरानीकमभिद्रवंतंप्रोवाचसंदृश्यशिनिप्रवीरः ॥ क्क क्ष
त्रियायास्यथनैषधर्मःसतांपुरस्तात्कथितःपुराणैः ८१ मास्वांप्रतिज्ञांत्यजतप्रवीराःस्वंवीरधर्मंपरिपालयध्वम् ॥ तान्वासवानंतरजोनिशाम्यनरेन्द्रमुख्यान्द्रवतःसमं
तात् ८२ पार्थस्यदृष्ट्वामृदुयुद्धतांचभीष्मंचसंख्येसमुदीर्यमाणम् ॥ अमृष्यमाणःसततोमहात्मायशस्विनंसर्वदशार्हभर्ता ८३ उवाचशैनेयमभिप्रशंसन्दृष्ट्वाकुरूनाप
ततःसमग्रान् ॥ येयांतितेयांतुशिनिप्रवीरयेऽपिस्थिताःसात्वततेऽपियांतु ८४ भीष्मंरथात्पश्यनिपात्यमानंद्रोणंचसंख्येसगणंमयाऽद्य ॥ नमेरथीसात्वतकौरवाणां
क्रुद्धस्यमुच्येतरणेऽद्यकश्चित् ८५ तस्मादहंगृह्यरथांगमुग्रंप्राणंहरिष्यामिमहाव्रतस्य ॥ निहत्यभीष्मंसगणंतथाऽऽजौद्रोणंचशैनेयरथप्रवीरौ ८६ प्रीतिंकरिष्यामिध
नंजयस्यराज्ञश्चभीमस्यतथाऽश्विनोश्च ॥ निहत्यसर्वान्धृतराष्ट्रपुत्रांस्तत्पक्षिणोयेचनरेन्द्रमुख्याः ८७ राज्येनराजानमजातशत्रुंसंपादयिष्याम्यहमद्यहृष्टः ॥ ततःसुना
भंवसुदेवपुत्रःसूर्यप्रभंवज्रसमप्रभावम् ८८ क्षुरांतमुद्यम्यभुजेनचक्रंरथादवप्लुत्यविसृज्यवाहान् ॥ संकंपयन्गांचरणैर्महात्मावेगेनकृष्णःप्रससारभीष्मम् ८९ मदांधमा
जौसमुदीर्णदर्पंसिंहोजिघांसन्निववारणेंद्रम् ॥ सोऽभिद्रवन्भीष्ममनीकमध्येक्रुद्धोमहेंद्रावरजःप्रमाथी ९० व्यालंबिपीतांतपटश्चकाशेघनोयथाखेतडितावनद्धः ॥ सुद
र्शनंचास्यरराजशौरेस्तच्चक्रपद्मंसुभुजोरुनालम् ९१ यथादिपद्मंतरुणार्कवर्णंरराजनारायणनाभिजातम् ॥ तत्कृष्णकोपोदयसूर्यबुद्धंक्षुरांततीक्ष्णाग्रसुजातपत्रम् ९२
तस्यैवदेहोरुसरःप्ररूढंरराजनारायणबाहुनालम् ॥ तमात्तचक्रंप्रणदंतमुच्चैःक्रुद्धंमहेंद्रावरजंसमीक्ष्य ९३ सर्वाणिभूतानिभृशंविनेदुःक्षयंकुरूणामिवचिंतयित्वा ॥ सवासु
देवःप्रगृहीतचक्रःसंवर्तयिष्यन्निवसर्वलोकम् ९४ अभ्युत्पतन्लोकगुरुर्बभासेभूतानिधक्ष्यन्निवधूमकेतुः ॥ तमाद्रवंतंप्रगृहीतचक्रंदृष्ट्वादेवंशांतनवस्तदानीम् ९५

असंभ्रमंतद्विचकर्षदोर्भ्यांमहाधनुर्गांडिवतुल्यघोषम् ॥ उवाचभीष्मस्तमनंतपौरुषंगोविंदमाजावविमूढचेताः ९६ एह्येहिदेवेशजगन्निवासनमोऽस्तुतेमाधवचक्र
पाणे ॥ प्रसह्यमांपातयलोकनाथरथोत्तमात्सर्वशरण्यसंख्ये ९७ त्वयाहतस्यापिममाद्यकृष्णश्रेयःपरस्मिन्निहचैवलोके ॥ संभावितोस्म्यंधकवृष्णिनाथलोकैस्त्रि
भिर्वीरतवाभियानात् ९८ रथादवप्लुत्यततस्त्वरावान्पार्थोऽप्यनुप्लुत्ययदुप्रवीरम् ॥ जग्राहपीनोत्तमलंबबाहुंबाह्वोर्हरिंव्यायतपीनबाहुः ९९ निगृह्यमाणश्चतदाऽऽ
दिदेवोभृशंसरोषःकिलचात्मयोगी ॥ आदायवेगेनजगामविष्णुर्जिष्णुंमहावातइवैकवृक्षम् १०० पार्थस्तुविष्टभ्यबलेनपादौभीष्मांतिकंतूर्णमभिद्रवंतम् ॥ बला
न्निजग्राहहरिंकिरीटीपदेऽथराजन्दशमेकथंचित् १ अवस्थितंचप्रणिपत्यकृष्णंप्रीतोऽर्जुनःकांचनचित्रमाली ॥ उवाचकोपंप्रतिसंहरेतिगतिर्भवान्केशवपांडवा
नाम् २ नहास्यतेकर्मयथाप्रतिज्ञंपुत्रैःशपेकेशवसोदरैश्च ॥ अंतंकरिष्यामियथाकुरूणांत्वयाऽहमिंद्रानुजसंप्रयुक्तः ३ ततःप्रतिज्ञांसमयंचतस्यजनार्दनःप्रीतमनानिश
म्य ॥ स्थितःप्रियेकौरवसत्तमस्यरथंसचक्रःपुनरारुरोह ४ सतानभीषून्पुनराददानःप्रगृह्यशंखंद्विषतांनिहंता ॥ विनादयामासततोदिशश्चसपांचजन्यस्यरवेण
शौरिः ५ व्याविद्धनिष्कांगदकुंडलंतंरजोविकीर्णांचितपद्मनेत्रम् ॥ विशुद्धदंष्ट्रंप्रगृहीतशंखंविचुक्रुशुःप्रेक्ष्यकुरुप्रवीराः ६ मृदंगभेरीपणवप्रणादानेमिस्वनादुंदुभिनिः
स्वनाश्च ॥ ससिंहनादाश्चबभूवुरुग्राःसर्वेष्वनीकेषुततःकुरूणाम् ७ गांडीवघोषःस्तनयित्नुकल्पोजगामपार्थस्यनभोदिशश्च ॥ जग्मुश्चबाणाविमलाःप्रसन्नाःसर्वादिशः
पांडवचापमुक्ताः ८ तंकौरवाणामधिपोजवेनभीष्मेणभूरिश्रवसाचसार्धम् ॥ अभ्युद्ययावुद्यतबाणपाणिःकक्षंदिधक्षन्निवधूमकेतुः ९ अथार्जुनायप्रजिघायभल्लान्भू
रिश्रवाःसप्तसुवर्णपुंखान् ॥ दुर्योधनस्तोमरमुग्रवेगंशल्योगदांशांतनवश्चशक्तिम् ११० ससप्तभिःसप्तशरप्रवेकान्संवार्यभूरिश्रवसाविसृष्टान् ॥ शितेनदुर्योधनबाहुमुक्तं
क्षुरेणतत्तोमरमुन्ममाथ ११ ततःशुभामापततींसशक्तिंविद्युत्प्रभांशांतनवेनमुक्ताम् ॥ गदांचमद्राधिपबाहुमुक्तांद्वाभ्यांशराभ्यांनिचकर्तवीरः १२ ततोभुजाभ्यांब
लवद्विकृष्यचित्रंधनुर्गांडिवमप्रमेयम् ॥ माहेन्द्रमस्त्रंविधिवत्सुघोरंप्रादुश्चकाराद्भुतमंतरिक्षे १३ तेनोत्तमास्त्रेणततोमहात्मासर्वाण्यनीकानिमहाधनुष्मान् ॥ शरौ
घजालैर्विमलाग्निवर्णैर्निवारयामासकिरीटमाली १४ शिलीमुखाःपार्थधनुःप्रमुक्तारथान्ध्वजाग्राणिधनूंषिबाहून् ॥ निकृत्त्यदेहान्विविशुःपरेषांनरेन्द्रनागेन्द्रतुरंग
माणाम् १५ ततोदिशःसोनुऽदिशश्चपार्थःशरैःसुधारैःसमरेवितत्य ॥ गांडीवशब्देनमनांसितेषांकिरीटमालीव्यथयांचकार १६ तस्मिंस्तथाघोरतमेप्रवृत्तेशंखस्व
नादुंदुभिनिःस्वनाश्च ॥ अंतर्हितागांडिवनिःस्वनेनबभूवुरुग्राश्चरथप्रणादाः १७ गांडीवशब्दंतमथोविदित्वाविराटराजप्रमुखाःप्रवीराः ॥ पांचालराजोद्रुपदश्च
वीरस्तंदेशमाजग्मुरदीनसत्त्वाः १८

१९।२०।२१ २२।२३।२४।२५।२६।२७।२८।२९।३०।३१।३२।३३।३४।३५।३६ ३७।३८।१३९॥ इतिभी० नी० भा० एकोनषष्टितमोऽध्यायः॥ ५९॥ व्युष्टामिति। व्युष्टांप्रभातां १

सर्वाणिसैन्यान्नितुतावकानियतोयतोगांडिवजःप्रणादः ॥ ततस्ततःसन्नतिमेवजग्मुर्नतंप्रतीपोऽभिससारकश्चित् १९ तस्मिन्सुघोरेनृपसंप्रहारेहताःप्रवीराःसरथाश्व
सूताः ॥ गजाश्वनाराचनिपाततप्तामहापताकाःशुभरुक्मकक्ष्याः १२० परीतसत्वाःसहसानिपेतुःकिरीटिनाभिन्नतनुत्रकायाः ॥ दृढंहताःपत्रिभिरुग्रवेगैःपार्थेन
भल्लैर्विमलैःशिताग्रैः २१ निकृत्तयंत्रानिहतेंद्रकीलाध्वजामहांतोध्वजिनीमुखेषु ॥ पदातिसंघाश्चरथाश्वसंख्येहयाश्चनागाश्चधनंजयेन २२ बाणाहतास्तूर्णमपेतस
त्वाविष्टभ्यगात्राणिनिपेतुरुर्व्याम् ॥ ऐंद्रेणतेनास्त्रवरेणराजन्महाहवेभिन्नतनुत्रदेहाः २३ ततःशरौघैर्निशितैःकिरीटिनानृदेहशस्त्रक्षतलोहितोदा ॥ नदीसुघोरानरमेदफे
नाप्रवर्तितातत्ररणाजिरेवै २४ वेगेनसाऽतीवपृथुप्रवाहापरेतनागाश्वशरीररोधा ॥ नरेन्द्रमज्जोच्छ्रितमांसपंकाप्रभूतरक्षोगणभूतसेविता २५ शिरःकपालाकुलकेश
शाद्वलाशरीरसंघातसहस्रवाहिनी ॥ विशीर्णनानाकवचोर्मिसंकुलानराश्वनागास्थिनिकृत्तशर्करा २६ श्वकंकशालावृकगृध्रकाकैःक्रव्यादसंघैश्चतरक्षुभिश्च ॥ उपेत
कूलांददृशुर्मनुष्याःक्रूरांमहावैतरणीप्रकाशाम् २७ प्रवर्तितामर्जुनबाणसंघैर्मेदोवसासृक्प्रवहांसुभीमाम् ॥ हतप्रवीरांचतथैवदृष्ट्वासेनांकुरूणामथफाल्गुनेन २८ तेचेदि
पांचालकरूषमत्स्याःपार्थाश्चसर्वेसहिताःप्रणेदुः ॥ जयप्रगल्भाःपुरुषप्रवीराःसंत्रासयंतःकुरुवीरयोधान् २९ हतप्रवीराणिबलानिदृष्ट्वाकिरीटिनाशत्रुभयावहेन॥ वित्रा
स्यसेनांध्वजिनीपतीनांसिंहोमृगाणामिवयूथसंघान् १३० विनेदतुस्तावतिहर्षयुक्तौगांडीवधन्वाचजनार्दनश्च ॥ ततोरविंसंवृतरश्मिजालंदृष्ट्वाभृशंशस्त्रपरिक्षतांगाः
३१ तदैन्द्रमस्त्रंविततंचघोरमसह्यमुद्वीक्ष्ययुगांतकल्पम् ॥ अथापयानंकुरवःसभीष्माःसद्रोणदुर्योधनबाल्हिकाश्च ३२ चक्रुर्निशांसंधिगतांसमीक्ष्यविभावसोर्लोहित
रागयुक्ताम् ॥ अवाप्यकीर्तिंचयशश्चलोकेविजित्यशत्रूंश्चधनंजयोऽपि ३३ ययौनरेन्द्रैःसहसोदरैश्चसमाप्तकर्माशिबिरंनिशायाम् ॥ ततःप्रजज्ञेतुमुलःकुरूणांनिशामुखे
घोरतमःप्रणादः ३४ रणेरथानामयुतंनिहत्यहतागजाःसप्तशतार्जुनेन ॥ प्राच्याश्चसौवीरगणाश्चसर्वेनिपातिताःक्षुद्रकमालवाश्च ३५ महत्कृतंकर्मधनंजयेनकर्तुं
यथानार्हतिकश्चिदन्यः ॥ श्रुतायुरंबष्ठपतिश्चराजातथैवदुर्मर्षणचित्रसेनौ ३६ द्रोणःकृपःसैंधवबाह्लिकौचभूरिश्रवाःशल्यशलौचराजन् ॥ अन्येचयोधाःशतशः
समेताःक्रुद्धेनपार्थेनरणस्यमध्ये ३७ स्वबाहुवीर्येणजिताःसभीष्माःकिरीटिनालोकमहारथेन ॥ इतिब्रुवंतःशिबिराणिजग्मुःसर्वेगणाभारतयेत्वदीयाः ३८ उल्कास
हस्रैश्चसुसंप्रदीप्तैर्विभ्राजमानैश्चतथाप्रदीपैः ॥ किरीटिवित्रासितसर्वयोधाचक्रेनिवेशंध्वजिनीकुरूणाम् १३९ ॥ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० तृती
यदिवसावहारेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ संजयउवाच ॥ ॥ व्युष्टांनिशांभारतभारतानामनीकिनीनांप्रमुखेमहात्मा ॥ ययौसपत्नान्प्रति
जातकोपोवृतःसमग्रेणबलेनभीष्मः १

२ । ३ । ४ । ५ । ६ व्यालोव्यूहविशेषस्तेननानाविधंगूढसारंच ७ । ८ सूपस्करंसुचक्रं सोत्तरवंधुरेषंउत्तरेणाच्छादनेनबंधुरारम्याईषातत्सहितं ९ चतुश्चतुरावृत्तंव्यालानांगजानांसहस्रंकर्णेषु

तंद्रोणदुर्योधनबाल्हिकाश्चतथैवदुर्मर्षणचित्रसेनौ ॥ जयद्रथश्चातिबलोबलौघैर्नृपास्तथाऽन्येप्रययुःसमंतात् २ सतैर्महद्भिश्चमहारथैश्चतेजस्विभिर्वीर्यवद्भिश्चराजन् ॥
रराजराजासतुराजमुख्यैर्वृतःसदेवैरिववज्रपाणिः ३ तस्मिन्ननीकप्रमुखेविषक्तादोधूयमानाश्चमहापताकाः ॥ सुरक्तपीतासितपांडुराभामहागजस्कंधगताविरेजुः ॥
४ सावाहिनीशांतनवेनगुप्तामहारथैर्वारणवाजिभिश्च ॥ बभौसविद्युत्स्तनयित्नुकल्पाजलागमेद्यौरिवजातमेघा ५ ततोरणायाभिमुखीप्रयाताप्रत्यर्जुनंशांतनवाभि
गुप्ता ॥ सेनामहोग्रासहसाकुरूणांवेगोयथाभीमइवापगायाः ६ तंव्यालनानाविधगूढसारंगजाश्वपादातरथौघपक्षम् ॥ व्यूहंमहामेघसमंमहात्माददर्शदूरात्कपिराज
केतुः ७ विनिर्ययौकेतुमतारथेननरर्षभःश्वेतहयेनवीरः ॥ वरूथिनासैन्यमुखेमहात्मावधेधृतःसर्वसपत्नयूनाम् ८ सूपस्करंसोत्तरबंधुरेषंयत्तंयदूनामृषभेणसंख्ये ॥
कपिध्वजंप्रेक्ष्यविषेदुराजौसहैवपुत्रैस्तवकौरवेयाः ९ प्रकर्षतागुप्तमुदायुधेनकिरीटिनालोकमहारथेन ॥ तंव्यूहराजंददृशुस्त्वदीयाश्चतुश्चतुर्व्यालसहस्रकर्णम् १० यथा
हिपूर्वेऽहनिधर्मराज्ञाव्यूहःकृतःकौरवसत्तमेन ॥ तथानभूतोभुविमानुषेषुनदृष्टपूर्वोनचसंश्रुतश्च ११ ततोयथादेशमुपेत्यतस्थुःपांचालमुख्याःसहचेदिमुख्यैः ॥ ततः
समादेशसमाहतानिभेरीसहस्राणिविनेदुराजौ १२ शंखस्वनास्तूर्यरथस्वनाश्चसर्वेष्वनीकेषुससिंहनादाः ॥ ततःसबाणानिमहास्वनानिविस्फार्यमाणानिधनूंषिवीरैः १३
क्षणेनभेरीपणवप्रणादानंतर्दधुःशंखमहास्वनाश्च ॥ तच्छंखशब्दावृतमंतरिक्षमुद्भूतभौमद्भुतरेणुजालम् १४ महावितानावततप्रकाशमालोक्यवीराःसहसाऽभिपेतुः ॥
रथीरथेनाभिहतःससूतःपपातसाश्वःसरथःसकेतुः १५ गजोगजेनाभिहतःपपातपदातिनाचाभिहतःपदातिः ॥ आवर्तमानान्यभिवर्तमानैर्घोरीकृतान्यद्भुतदर्शनानि १६
प्रासैश्चखड्गैश्चसमाहतानिसदश्ववृंदानिसदश्ववृंदैः ॥ सुवर्णतारागणभूषितानिसूर्यप्रभाभानिशरावराणि १७ विदार्यमाणानिपरश्वधैश्चप्रासैश्चखड्गैश्चनिपेतुरुर्व्याम् ॥
गजैर्विषाणैर्वरहस्तरुग्णाःकेचित्ससूतारथिनःप्रपेतुः १८ गजर्षभाश्चापिरथर्षभेणनिपातिताबाणहताःपृथिव्याम् ॥ गजौघवेगोद्धतसादितानांश्रुत्वाविषेदुःसहसाम
नुष्याः १९ आर्तस्वनंसादिपदातियूनांविषाणगात्रावरताडितानाम् ॥ संभ्रांतनागाश्वरथेमुहूर्तेमहाक्षयेसादिपदातियूनाम् २० महारथैःसंपरिवार्यमाणोददर्शभीष्मः
कपिराजकेतुम् ॥ तंपंचतालोच्छ्रिततालकेतुःसदश्ववेगाद्भुतवीर्ययानः २१ महास्त्रबाणाशनिदीप्तिमंतंकिरीटिनंशांतनवोऽभ्यधावत् ॥ तथैवशक्रप्रतिमप्रभावमिंद्रा
त्मजंद्रोणमुखाविसस्रुः २२ कृपश्चशल्यश्चविविंशतिश्चदुर्योधनःसौमदत्तिश्चराजन् ॥ ततोरथानांप्रमुखादुपेत्यसर्वास्त्रवित्कांचनचित्रवर्मा २३ जवेनशूरोऽभिससार
सर्वांस्तानर्जुनस्यात्मसुतोऽभिमन्युः ॥ तेषांमहास्त्राणिमहारथानामसह्यकर्माविनिहत्त्यकार्ष्णिः २४

विदिग्भागेषुयस्यतं १० । ११ १२ । १३ । १४ । १५ । १६ शरावराणिकवचानि । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

२५ । २६ । २७ । २८ । २९ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे षष्टितमोऽध्यायः ॥ ६० ॥ द्रौणिरिति । सांयमनेःशलस्यपुत्रः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

बभौमहामंत्रहुतार्चिमालीसदोगतःसन्भगवानिवाग्निः ॥ ततःसतूर्णंरुधिरोदफेनांकृत्वानदीमाशुरणेरिपूणाम् २५ जगामसौभद्रमतीत्यभीष्मोमहारथंपार्थमदीनस
त्वः ॥ ततःप्रहस्याद्भुतविक्रमेणगांडीवमुक्तेनशिलाशितेन २६ विपाठजालेनमहास्त्रजालंविनाशयामासकिरीटमाली ॥ तमुत्तमंसर्वधनुर्धराणामसक्तकर्माकपिराज
केतुः २७ भीष्मंमहात्माऽभिववर्षतूर्णंशरौघजालैर्विमलैश्चभल्लैः ॥ तथैवभीष्माहतमंतरिक्षेमहास्त्रजालंकपिराजकेतोः २८ विशीर्यमाणंददृशुस्त्वदीयादिवाकरेणेवतमो
भिभूतम् ॥ एवंविधंकार्मुकभीमनादमदीनवत्सत्पुरुषोत्तमाभ्याम् ॥ ददर्शलोकःकुरुसृंजयाश्चतद्वैरथंभीष्मधनंजयाभ्याम् २९ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भीष्म
वधपर्वणि भीष्मार्जुनद्वैरथेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ ॥ संजयउवाच ॥ द्रौणिर्भूरिश्रवाःशल्यश्चित्रसेनश्चमारिषः ॥ पुत्रःसांयमनेश्चैवसौभद्रंपर्यवार
यन् १ संसक्तमतितेजोभिस्तमेकंददृशुर्जनाः ॥ पंचभिर्मनुजव्याघ्रैर्गजैःसिंहशिशुंयथा २ नातिलक्ष्यतयाकश्चिन्नशौर्येनपराक्रमे ॥ बभूवसदृशःकार्ष्णेर्नास्त्रेनापिचला
घवे ३ तथातमात्मजंयुद्धेविक्रमंतमरिंदमम् ॥ दृष्ट्वापार्थःसुसंयत्तंसिंहनादमथानदत् ४ पीडयानंतुतत्सैन्यंपौत्रंतवविशांपते ॥ दृष्ट्वात्वदीयाराजेन्द्रसमंतात्पर्यवारयन्
५ ध्वजिनींधार्तराष्ट्राणांदीनशत्रुरदीनवत् ॥ प्रत्युद्ययौससौभद्रस्तेजसाचबलेनच ६ तस्यलाघवमार्गस्थमादित्यसदृशप्रभम् ॥ व्यदृश्यतमहच्चापंसमरेयुध्यतःपरैः ७
सद्रौणिमिषुणैकेनविद्ध्वाशल्यंचपंचभिः ॥ ध्वजंसांयमनेश्चैवसोऽष्टाभिश्चिच्छिदेततः ८ रुक्मदंडांमहाशक्तिंप्रेषितांसौमदत्तिना ॥ शितेनोरगसंकाशांपत्रिणाऽपजहार
ताम् ९ शल्यस्यचमहावेगानस्यतःसमरेशरान् ॥ निवार्यार्जुनदायादोजघानचतुरोहयान् १० भूरिश्रवाश्चशल्यश्चद्रौणिःसांयमनिःशलः ॥ नाभ्यवर्तंतसंरब्धाः
कार्ष्णेर्बाहुबलोदयम् ११ ततस्त्रिगर्ताराजेन्द्रमद्राश्चसहकेकयैः ॥ पंचविंशतिसाहस्रास्तवपुत्रेणचोदिताः १२ धनुर्वेदविदोमुख्याअजेयाःशत्रुभिर्युधि ॥ सहपुत्रंजिघां
संतंपरिवव्रुःकिरीटिनम् १३ तौतुतत्रपितापुत्रौपरिक्षिप्तौमहारथौ ॥ ददर्शराजन्पांचाल्यःसेनापतिररिंदम १४ सवारणरथौघानांसहस्रैर्बहुभिर्वृतः ॥ वाजिभिःपत्तिभि
श्चैववृतःशतसहस्रशः १५ धनुर्विस्फार्यसंक्रुद्धोनोदयित्वाचवाहिनीम् ॥ ययौतंमद्रकानीकंकेकयांश्चपरंतप १६ तेनकीर्तिमतागुप्तमनीकंदृढधन्वना ॥ संरब्धरथना
गाश्वंयोत्स्यमानमशोभत १७ सोऽर्जुनप्रमुखेयांतंपांचालकुलवर्धनः ॥ त्रिभिःशारद्वतंबाणैर्जत्रुदेशेसमार्पयत् १८ ततःसमद्रकान्हत्वादशैवदशभिःशरैः ॥ पृष्ठरक्षं
जघानाशुभल्लेनकृतवर्मणः १९ दमनंचापिदायादंपौरवस्यमहात्मनः ॥ जघानविमलाग्रेणनाराचेनपरंतपः २० ततःसांयमनेःपुत्रःपांचाल्यंयुद्धदुर्मदम् ॥ अविध्य
त्रिंशताबाणैर्दशभिश्चास्यसारथिम् २१ सोऽतिविद्धोमहेष्वासःसृक्किणीपरिसंलिहन् ॥ भल्लेनभृशतीक्ष्णेननिचकर्तास्यकार्मुकम् २२

११ । १२ । १३ । १४ । १५ । १६ १७ । १८ । १९ । २० । २१ । २२

अथैनंपंचविंशत्याक्षिप्रमेवसमार्पयत् ॥ अश्वांश्चास्यावधीद्राजन्नुभौतौपार्ष्णिसारथी २३ सहताऽश्वेरथेतिष्ठन्ददर्शभरतर्षभ ॥ पुत्रःसांयमनेःपुत्रंपांचाल्यस्यमहा
त्मनः २४ सप्रगृह्यमहाघोरंनिस्त्रिंशवरमायसम् ॥ पदातिस्तूर्णमानर्च्छद्रथस्थंपुरुषर्षभः २५ तंमहौघमिवायांतंखात्पतंतमिवोरगम् ॥ भ्रांतावरणनिस्त्रिंशंकालो
त्सृष्टमिवांतकम् २६ दीप्यमानमिवादित्यंमत्तवारणविक्रमम् ॥ अपश्यन्पांडवास्तत्रधृष्टद्युम्नश्चपार्षतः २७ तस्यपांचालदायादःप्रतीपमभिधावतः ॥ शितनिस्त्रिं
शहस्तस्यशरावरणधारिणः २८ बाणवेगमतीतस्यतथाऽभ्याशमुपेयुषः ॥ त्वरन्सेनापतिःक्रुद्धोबिभेदगदयाशिरः २९ तस्यराजन्ससनिस्त्रिंशंसुप्रभंचशरावरम् ॥ हत
स्यपततोहस्ताद्वेगेनन्यपतद्भुवि ३० तंनिहत्यगदाग्रेणसलेभेपरमांमुदम् ॥ पुत्रःपांचालराजस्यमहात्माभीमविक्रमः ३१ तस्मिन्हतेमहेष्वासेराजपुत्रेमहारथे ॥ हाहा
कारोमहानासीत्तवसैन्यस्यमारिष ३२ ततःसांयमनिःक्रुद्धोदृष्ट्वानिहतमात्मजम् ॥ अभिदुद्राववेगेनपांचाल्यंयुद्धदुर्मदम् ३३ तौतत्रसमरेशूरौसमेतौयुद्धदुर्मदौ ॥
ददृशुःसर्वराजानःकुरवःपांडवास्तथा ३४ ततःसांयमनिःक्रुद्धःपार्षतंपरवीरहा ॥ आजघानत्रिभिर्बाणैस्तोत्रैरिवमहाद्विपम् ३५ तथैवपार्षतंशूरंशल्यःसमिति
शोभनः ॥ आजघानोरसिक्रुद्धस्ततोयुद्धमवर्तत ३६ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप०चतुर्थयुद्धदिवसेसांयमनिपुत्रवधेएकषष्टितमोऽध्यायः ॥ ६१ ॥
॥ धृतराष्ट्रउवाच ॥ दैवमेवपरंमन्येपौरुषादपिसंजय ॥ यत्सैन्यंममपुत्रस्यपांडुसैन्येनबाध्यते १ नित्यंहिमामकांस्तातहतानेवहिशंससि ॥ अव्यग्रांश्चप्रहृष्टां
श्चनित्यंशंससिपांडवान् २ हीनान्पुरुषकारेणमामकानद्यसंजय ॥ पातितान्पात्यमानांश्चहतानेवचशंससि ३ युध्यमानान्यथाशक्तिघटमानान्जयंप्रति ॥ पांडवा
हिजयंत्येवजीयंतेचैवमामकाः ४ सोऽहंतीव्राणिदुःखानिदुर्योधनकृतानिच ॥ श्रोष्यामिसततंतातदुःसहानिबहूनिच ५ तमुपायंनपश्यामिजीयेरन्येनपांडवान् ॥
मामकाविजयंयुद्धेप्राप्नुयुर्येनसंजय ६ ॥ संजयउवाच ॥ क्षयंमनुष्यदेहानांगजवाजिरथक्षयम् ॥ शृणुराजन्स्थिरोभूत्वातवैवापनयोमहान् ७ धृष्टद्युम्नस्तुशल्येनपी
डितोनवभिःशरैः ॥ पीडयामाससंक्रुद्धोमद्राधिपतिमायसैः ८ तत्राद्भुतमपश्यामपार्षतस्यपराक्रमम् ॥ न्यवारयतयस्तूर्णंशल्यंसमितिशोभनम् ९ नांतरंददृश्यतेतत्रत
योश्चरथिनोस्तदा ॥ मुहूर्तमिवतद्युद्धंतयोःसममिवाभवत् १० ततःशल्योमहाराजधृष्टद्युम्नस्यसंयुगे ॥ धनुश्चिच्छेदभल्लेनपीतेननिशितेनच ११ अथैनंशरवर्षेणच्छा
दयामाससंयुगे ॥ गिरिंजलागमेयद्वज्जलदाजलवृष्टिभिः १२ अभिमन्युस्ततःक्रुद्धोधृष्टद्युम्नेचपीडिते ॥ अभिदुद्राववेगेनमद्रराजरथंप्रति १३

ततोमद्राधिपरथंकार्ष्णिःप्राप्यातिकोपनः ॥ आर्तायनिममेयात्माविव्याधनिशितैःशरैः १४ ततस्तुतावकाराजन्परीप्संतोऽऽर्जुनिंरणे ॥ मद्रराजरथंतूर्णंपरि
वार्यावतस्थिरे १५ दुर्योधनोविकर्णश्चदुःशासनविविंशती ॥ दुर्मर्षणोदुःसहश्चचित्रसेनोऽथदुर्मुखः १६ सत्यव्रतश्चभद्रंतेपुरुमित्रश्चभारत ॥ एतेमद्राधिपरथं
पालयंतःस्थितारणे १७ तान्भीमसेनःसंकुद्धोधृष्टद्युम्नश्चपार्षतः ॥ द्रौपदेयाभिमन्युश्चमाद्रीपुत्रौचपांडवौ १८ धार्तराष्ट्रान्दशरथान्दशैवप्रत्यवारयन् ॥ ना
नारूपाणिशस्त्राणिविसृजंतोविशांपते १९ अभ्यवर्ततसंहृष्टाःपरस्परवधैषिणः ॥ तेवैसमेयुःसंग्रामेराजन्दुर्मंत्रितेतव २० तस्मिन्दशरथेकुद्धेवर्तमानेमहाभये ॥
तावकानांपरेषांवाप्रेक्षकारथिनोऽभवन् २१ शस्त्राण्यनेकरूपाणिविसृजंतोमहारथाः ॥ अन्योन्यमभिनर्दन्तःसंप्रहारंप्रचक्रिरे २२ तेतदाजातसंरंभाःसर्वेऽन्यो
न्यंजिघांसवः ॥ अन्योन्यमभिमर्दंतःस्पर्धमानाःपरस्परम् २३ अन्योन्यस्पर्धयाराजन्ज्ञातयःसंगतामिथः ॥ महास्त्राणिविमुंचंतःसमापेतुरमर्षिणः २४ दु
र्योधनस्तुसंकुद्धोधृष्टद्युम्नंमहारणे ॥ विव्याधनिशितैर्बाणैश्चतुर्भिःसमरेद्रुतम् २५ दुर्मर्षणश्चविंशत्याचित्रसेनश्चपंचभिः ॥ दुर्मुखोनवभिर्बाणैर्दुःसहश्चापिसप्त
भिः २६ विविंशतिःपंचभिश्चत्रिभिर्दुःशासनस्तथा ॥ तान्प्रत्यविध्यद्राजेन्द्रपार्षतःशत्रुतापनः २७ एकैकंपंचविंशत्यादर्शयन्पाणिलाघवम् ॥ सत्यव्रतंचस
मरेपुरुमित्रंचभारत २८ अभिमन्युरविध्यत्तुदशभिर्दशभिःशरैः ॥ माद्रीपुत्रौतुसमरेमातुलंमातृनंदनौ २९ अविध्येतांशरैस्तीक्ष्णैस्तदद्भुतमिवाभवत् ॥ ततः
शल्योमहाराजस्वस्रीयौरथिनांवरौ ३० शरैर्बहुभिरानर्छत्कृतप्रतिकृतैषिणौ ॥ छाद्यमानौततस्तौतुमाद्रीपुत्रौनचेलतुः ३१ अथदुर्योधनंदृष्ट्वाभीमसेनोमहा
बलः ॥ विधित्सुःकलहस्यांतंगदांजग्राहपांडवः ३२ तमुद्यतगदंदृष्ट्वाकैलासमिवशृंगिणम् ॥ भीमसेनंमहाबाहुंपुत्रास्तेप्राद्रवन्भयात् ३३ दुर्योधनस्तुसंकुद्धोमा
गधंसमचोदयत् ॥ अनीकंदशसाहस्रंकुंजराणांतरस्विनाम् ३४ गजानीकेनसहितस्तेनराजासुयोधनः ॥ मागधंपुरतःकृत्वाभीमसेनंसमभ्ययात् ३५ आपतंतंच
तंदृष्ट्वागजानीकंवृकोदरः ॥ गदापाणिरवारोहद्रथात्सिंहइवोन्नदन् ३६ अद्रिसारमयींगुर्वींप्रगृह्यमहतींगदाम् ॥ अभ्यधावद्गजानीकंव्यादितास्यइवांतकः ॥
३७ सगजान्गदयानिघ्नन्व्यचरत्समरेबली ॥ भीमसेनोमहाबाहुःसवज्रइववासवः ३८ तस्यनादेनमहतामनोहृदयकंपिना ॥ व्यत्यचेष्टंतसंहत्यगजाभीमस्य
गर्जतः ३९ ततस्तुद्रौपदीपुत्राःसौभद्रश्चमहारथः ॥ नकुलःसहदेवश्चधृष्टद्युम्नश्चपार्षतः ४० पृष्ठंभीमस्यरक्षंतःशरवर्षेणवारणान् ॥ अभ्यवर्षंतधावंतोमेघाइवगिरीन्
यथा ४१ क्षुरैःक्षुरप्रैर्भल्लैश्चपीतैश्चांजलिकैःशितैः ॥ व्यहरन्नुत्तमांगानिपांडवागजयोधिनाम् ४२ शिरोभिःप्रपतद्भिश्चबाहुभिश्चविभूषितैः ॥ अश्मवृष्टिरिवाभातिपाणि ॥ ९५ ॥
भिश्चसहांकुशैः ४३ हृतोत्तमांगाःस्कंधेषुगजानांगजयोधिनः ॥ अदृश्यंताचलाग्रेषुद्रुमाभग्नशिखाइव ४४

४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ ॥ इति भीष्मपर्वणि नीलकंठीये भारतभावदीपे

धृष्टद्युम्नहतानन्यानपश्याममहागजान् ॥ पततःपात्यमानांश्चपार्षतेनमहात्मना ४५ मागधोऽथमहीपालोगजमैरावणोपमम् ॥ प्रेषयामाससमरेसौभद्रस्यरथंप्रति ४६
तमापतंतंसंप्रेक्ष्यमागधस्यमहागजम् ॥ जघानैकेषुणावीरःसौभद्रःपरवीरहा ४७ तस्यावर्जितनागस्यकार्ष्णिःपरपुरंजयः ॥ राज्ञोरजतपुंखेनभल्लेनापाहरच्छिरः ४८
विगाह्यतद्गजानीकंभीमसेनोऽपिपांडवः ॥ व्यचरत्समरेमृद्नन्गजानिन्द्रोगिरीनिव ४९ एकप्रहारनिहताभीमसेनेनदंतिनः ॥ अपश्यामरणेतस्मिन्गिरीन्वज्रहता
निव ५० भग्नदंतान्भग्नकटान्भग्नसक्थांश्चवारणान् ॥ भग्नपृष्ठत्रिकानन्यान्निहतान्पर्वतोपमान् ५१ नदतःसीदतश्चान्यान्विमुखान्समरेगतान् ॥ विद्रुतान्भय
संविग्नांस्तथाविशकृतोऽपरान् ५२ भीमसेनस्यमार्गेषुपतितान्पर्वतोपमान् ॥ अपश्यंनिहतान्नागान्राजन्निष्ठीवतोऽपरान् ५३ वमंतोरुधिरंचान्येभिन्नकुंभामहाग
जाः ॥ विह्वलंतोगताभूमिंशैलाइवधरातले ५४ मेदोरुधिरदिग्धांगोवसामज्जासमुक्षितः ॥ व्यचरत्समरेभीमोदंडपाणिरिवांतकः ५५ गजानांरुधिरक्लिन्नांगदांबि
भ्रद्वृकोदरः ॥ घोरःप्रतिभयश्चासीत्पिनाकीवपिनाकधृक् ५६ संमथ्यमानाःक्रुद्धेनभीमसेनेनदंतिनः ॥ सहसाप्राद्रवन्क्लिष्टामृद्नंतस्तववाहिनीम् ५७ तंहिवीरंमहे
ष्वासंसौभद्रप्रमुखारथाः ॥ पर्यरक्षंतयुध्यंतंवज्रायुधमिवामराः ५८ शोणिताक्तांगदांबिभ्रदुक्षितांगजशोणितैः ॥ कृतांतइवरौद्रात्माभीमसेनोव्यदृश्यत ५९ व्यायच्छ
मानंगदयादिक्षुसर्वासुभारत ॥ अपश्यामरणेभीमंनृत्यंतमिवशंकरम् ६० यमदंडोपमांगुर्वीमिंद्राशनिसमस्वनाम् ॥ अपश्याममहाराजरौद्रांविशसनींगदाम् ६१ त्रि
मिश्रांकेशमज्जाभिःप्रदिग्धांरुधिरेणच ॥ पिनाकमिवरुद्रस्यक्रुद्धस्याभिघ्नतःपशून् ६२ यथापशूनांसंघातंयष्ट्यापालःप्रकालयेत् ॥ तथाभीमोगजानीकंगदयासम
कालयत् ६३ गदयावध्यमानास्तेमार्गणैश्चसमंततः ॥ स्वान्यनीकानिमृद्नन्तःप्राद्रवन्कुंजरास्तव ६४ महावातइवाभ्राणिविधमित्वासवारणान् ॥ अतिष्ठत्तुमुलेभी
मःश्मशानइवशूलभृत् ६५ ॥ ॥ इतिश्रीमहाभारते भीष्मपर्वणि भीष्मवधपर्वणि चतुर्थदिवसेभीमयुद्धेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ संजयउवाच ॥
हतेतस्मिन्गजानीकेपुत्रोदुर्योधनस्तव ॥ भीमसेनंघ्नतेत्येवंसर्वसैन्यान्यचोदयत् १ ततःसर्वाण्यनीकानितवपुत्रस्यशासनात् ॥ अभ्यद्रवन्भीमसेनंनदंतंभैरवान्र
वान् २ तंबलौघमपर्यंतंदेवैरपिसुदुःसहम् ॥ आपतंतंसुदुष्पारंसमुद्रमिवपर्वणि ३ रथनागाश्वकलिलंशंखदुंदुभिनादितम् ॥ अनंतरथपादातंनरेंद्रस्तिमितह्रदम् ४
तंभीमसेनःसमरेमहोदधिमिवापरम् ॥ सेनासागरमक्षोभ्यंवेलेवसमवारयत् ५ तदाश्चर्यमपश्यामपांडवस्यमहात्मनः ॥ भीमसेनस्यसमरेराजन्कर्मातिमानुषम् ६
उदीर्णान्पार्थिवान्सर्वान्साश्वान्सरथकुंजरान् ॥ असंभ्रमंभीमसेनोगदयासमवारयत् ७ ससंवार्यबलौघांस्तान्गदयारथिनांवरः ॥ अतिष्ठत्तुमुलेभीमोगिरिर्मेरुरिवाचलः ८

द्विषष्टितमोऽध्यायः ॥ ६२ ॥ हतेतस्मिन्निति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६।२७।२८।२९।३०।३१।३२।३३॥ इतिभीष्मपर्वणिनीलकंठीये



तस्मिन्सुतुमुलेघोरेकालेपरमदारुणे ॥ भ्रातरश्चैवपुत्राश्चधृष्टद्युम्नश्चपार्षतः ९ द्रौपदेयाऽभिमन्युश्चशिखंडीचापराजितः ॥ नप्राजहन्भीमसेनंभयेजातेमहाब
लम् १० ततःशैक्यायसींगुर्वींप्रगृह्यमहतींगदाम् ॥ अवधीत्तावकान्योधान्दंडपाणिरिवांतकः ११ पोथयन्रथवृंदानिवाजिवृन्दानिचाभिभूः ॥ कर्षयन्रथवृं
दानिबाहुवेगेनपांडवः १२ विनिघ्नन्व्यचरत्संख्येयुगांतकालवद्विभुः ॥ ऊरुवेगेनसंकर्षन्रथजालानिपाण्डवः १३ बलानिसंममर्दाशुनड्वलानीवकुंजरः ॥ मृद्नन्रथे
भ्योरथिनोगजेभ्योगजयोधिनः १४ सादिनश्चाश्वपृष्ठेभ्योभूमौचापिपदातिनः ॥ गदयाव्यधमत्सर्वान्वातोवृक्षानिवौजसा १५ भीमसेनोमहाबाहुस्तवपुत्रस्यवैबले ॥
साऽपिमज्जावसामांसैःप्रदिग्धारुधिरेणच १६ अदृश्यतमहारौद्रागदानागाश्वपातनी ॥ तत्रतत्रहतैश्चापिमनुष्यगजवाजिभिः १७ रणांगणंसमभवन्मृत्योराघासस
न्निभम् ॥ पिनाकमिवरुद्रस्यक्रुद्धस्याभिघ्नतःपशून् १८ यमदंडोपमामुग्रामिंद्राशनिसमस्वनाम् ॥ ददृशुर्भीमसेनस्यरौद्रींविशसनींगदाम् १९ आविद्धयतोगदांतस्य
कौन्तेयस्यमहात्मनः ॥ बभौरूपंमहाघोरंकालस्येवयुगक्षये २० तंतथामहतींसेनांद्रावयंतंपुनःपुनः ॥ दृष्ट्वामृत्युमिवायांतंसर्वेविमनसोऽभवन् २१ यतोयतःप्रेक्षतेस्म
गदामुद्यम्यपांडवः ॥ तेनतेनस्मदीर्यंतेसर्वसैन्यानिभारत २२ प्रदारयंतंसैन्यानिबलेनामितविक्रमम् ॥ ग्रसमानमनीकानिव्यादितास्यमिवांतकम् २३ तंतथा
भीमकर्माणंप्रगृहीतमहागदम् ॥ दृष्ट्वावृकोदरंभीष्मःसहसैवसमभ्ययात् २४ महतारथघोषेणरथेनादित्यवर्चसा ॥ छादयन्शरवर्षेणपर्जन्यइववृष्टिमान् २५ तमायां
तंतथादृष्ट्वाव्यात्ताननमिवांतकम् ॥ भीष्मंभीमोमहाबाहुःप्रत्युदीयादमर्षितः २६ तस्मिन्क्षणेसात्यकिःसत्यसंधःशिनिप्रवीरोऽभ्यपतत्पितामहम् ॥ निघ्नन्नमित्रान्
धनुषादृढेनसंकंपयंस्तवपुत्रस्यसैन्यम् २७ तंयांतमश्वैरजतप्रकाशैःशरान्वपंतंनिशितान्सुपुंखान् ॥ नाशक्नुवन्धारयितुंतदानींसर्वेगणाभारतयेत्वदीयाः २८ अवि
ध्यदेनंदशभिःपृषत्कैरलंबुषोराक्षसोऽसौतदानीम् ॥ शरैश्चतुर्भिःप्रतिविद्ध्यतंचनप्ताशिनेरभ्यपतद्रथेन २९ अन्वागतंवृष्णिवरंनिशम्यतंशत्रुमध्येपरिवर्तमानम् ॥
प्रद्रावयंतंकुरुपुंगवांश्चपुनःपुनश्चप्रणदंतमाजौ ३० योधास्त्वदीयाःशरवर्षैरवर्षन्मेघायथाभूधरमंबुवेगैः ॥ तथाऽपितंधारयितुंनशेकुर्मध्यंदिनेसूर्यमिवातपंतम् ३१
नतत्रकश्चिन्नविषण्णआसीदृतेराजन्सोमदत्तस्यपुत्रात् ॥ सवैसमादायधनुर्महात्माभूरिश्रवाभारतसौमदत्तिः ३२ दृष्ट्वारथान्स्वान्व्यपनीयमानान्प्रत्युद्ययौसात्य
किंयोद्धुमिच्छन् ३३ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भीष्मवधपर्वणि सात्यकिभूरिश्रवःसमागमे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ॥ ॥
॥ संजयउवाच ॥ ततोभूरिश्रवाराजन्सात्यकिंनवभिःशरैः ॥ प्राविध्यद्भृशसंक्रुद्धस्तोत्रैरिवमहाद्विपम् १

भारतभावदीपेत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ततइति १

कौरवंसात्यकिश्चैवशरैःसन्नतपर्वभिः ॥ अवारयदमेयात्मासर्वलोकस्यपश्यतः २ ततोदुर्योधनोराजासोदर्यैःपरिवारितः ॥ सौमदत्तिंरणेयत्तःसमंतात्पर्यवारयत् ३ तंचै
वपांडवाःसर्वेसात्यकिंरभसंरणे ॥ परिवार्यस्थिताःसंख्येसमंतात्सुमहौजसः ४ भीमसेनस्तुसंक्रुद्धोगदामुद्यम्यभारत ॥ दुर्योधनमुखान्सर्वान्पुत्रांस्तेपर्यवारयत् ५
रथैरनेकसाहस्रैःक्रोधामर्षसमन्वितः ॥ नंदकस्तवपुत्रस्तुभीमसेनंमहाबलम् ६ विव्याधविशिखैःषड्भिःकंकपत्रैःशिलाशितैः ॥ दुर्योधनश्चसमरेभीमसेनंमहारथम् ७
आजघानोरसिक्रुद्धोमार्गणैर्नवभिःशितैः ॥ ततोभीमोमहाबाहुःस्वरथंसुमहाबलः ८ आरुरोहरथश्रेष्ठंविशोकंचेदमब्रवीत् ॥ एतेमहारथाःशूराधार्तराष्ट्राःसमागताः९
मामेवभृशसंक्रुद्धाहंतुमभ्युद्यतायुधि ॥ मनोरथद्रुमोऽस्माकंचिंतितोबहुवार्षिकः १० सफलःसूतचाद्येहयोऽहंपश्यामिसोदरान् ॥ यत्राशोकसमुत्क्षिप्तारेणवोरथनेमि
भिः ११ प्रयास्यंत्यंतरिक्षंहिशरवृंदैर्दिगंतरे ॥ तत्रतिष्ठतिसन्नद्धःस्वयंराजासुयोधनः १२ भ्रातरश्चास्यसन्नद्धाःकुलपुत्रामदोत्कटाः ॥ एतानद्यहनिष्यामिपश्यतस्तेनसं
शयः १३ तस्मान्ममाश्वान्संग्रामेयत्तःसंयच्छसारथे ॥ एवमुक्त्वाततःपार्थस्तवपुत्रंविशांपते १४ विव्याधनिशितैस्तीक्ष्णैःशरैःकनकभूषणैः ॥ नंदकंचत्रिभिर्बाणैरभ्य
विध्यत्स्तनांतरे १५ तंतुदुर्योधनःषष्ट्याविद्ध्वाभीमंमहाबलम् ॥ त्रिभिरन्यैःसुनिशितैर्विशोकंप्रत्यविध्यत १६ भीमस्यचरणेराजन्धनुश्चिच्छेदभास्वरम् ॥ मुष्टिदेशे
भृशंतीक्ष्णैस्त्रिभिर्भल्लैर्हसन्निव १७ समरेप्रेक्ष्ययंतारंविशोकंतुवृकोदरः ॥ पीडितंविशिखैस्तीक्ष्णैस्तवपुत्रेणधन्विना १८ अमृष्यमाणःसंरब्धोधनुर्दिव्यंपरामृशत् ॥
पुत्रस्यतेमहाराजवधार्थंभरतर्षभ १९ समादधत्सुसंक्रुद्धःक्षुरप्रंलोमवाहिनम् ॥ तेनचिच्छेदनृपतेर्भीमःकार्मुकमुत्तमम् २० सोपविद्धचधनुश्छिन्नंपुत्रस्तेक्रोधमूर्च्छितः ॥
अन्यत्कार्मुकमादत्तसत्वरंवेगवत्तरम् २१ संदधेविशिखंघोरंकालमृत्यु[illegible]मप्रभम् ॥ तेनाजघानसंक्रुद्धोभीमसेनंस्तनांतरे २२ सगाढविद्धोव्यथितःस्यंदनोपस्थआवि
शत् ॥ सनिषण्णोरथोपस्थेमूर्छामभिजगामह २३ तंदृष्ट्वाव्यथितंभीममभिमन्युपुरोगमाः ॥ नामृष्यंतमहेष्वासाःपांडवानांमहारथाः २४ ततस्तुतुमुलांवृष्टिंशस्त्रा
णांतिग्मतेजसाम् ॥ पातयामासुरव्यग्राःपुत्रस्यतवमूर्धनि २५ प्रतिलभ्यततःसंज्ञांभीमसेनोमहाबलः ॥ दुर्योधनंत्रिभिर्विद्ध्वापुनर्विव्याधपंचभिः २६ शल्यंचपंच
विंशत्याशरैर्विव्याधपांडवः ॥ रुक्मपुंखैर्महेष्वासःसविद्धोव्यपयाद्रणात् २७ प्रत्युद्ययुस्ततोभीमंतवपुत्राश्चतुर्दश ॥ सेनापतिःसुषेणश्चजलसंधःसुलोचनः २८
उग्रोभीमरथोभीमोवीरबाहुरलोलुपः ॥ दुर्मुखोदुष्प्रधर्षश्चविवित्सुर्विकटःसमः २९ विसृजंतोबहून्बाणान्क्रोधसंरक्तलोचनाः ॥ भीमसेनमभिद्रुत्यविव्यधुःसहिताभृ
शम् ३० पुत्रांस्तुतवसंप्रेक्ष्यभीमसेनोमहाबलः ॥ सृक्किणीविलिहन्वीरःपशुमध्येयथावृकः ३१

अभिपत्त्यमहाबाहुर्गरुत्मानिववेगितः ॥ सेनापतेःक्षुरप्रेणशिरश्चिच्छेदपांडवः ३२ संप्रहस्यचहृष्टात्मात्रिभिर्बाणैर्महाभुजः ॥ जलसंधंविनिर्भिद्यसोऽनयद्यमसादनम्
३३ सुषेणंचततोहत्वाप्रेषयामासमृत्यवे ॥ उग्रस्यसशिरस्त्राणंशिरश्चंद्रोपमंभुवि ३४ पातयामासभल्लेनकुंडलाभ्यांविभूषितम् ॥ वीरबाहुंचसप्तत्यासाश्वकेतुंससारथिम्
३५ निनायसमरेवीरःपरलोकायपांडवः ॥ भीमभीमरथौचोभौभीमसेनोहसन्निव ३६ पुत्रौतेदुर्मदौराजन्ननयद्यमसादनम् ॥ ततःसुलोचनंभीमःक्षुरप्रेणमहामृधे ३७
मिषतांसर्वसैन्यानामनयद्यमसादनम् ॥ पुत्रास्तुतवतंदृष्ट्वाभीमसेनपराक्रमम् ३८ शेषायेऽन्येभवंस्तत्रतेभीमस्यभयार्दिताः ॥ विप्रद्रुतादिशोराजन्वध्यमानामहात्मना
३९ ततोऽब्रवीच्छांतनवःसर्वानेवमहारथान् ॥ एषभीमोरणेक्रुद्धोधार्तराष्ट्रान्महारथान् ४० यथाप्राग्यान्यथाज्येष्ठान्यथाशूरांश्चसंगतान् ॥ निपातयत्युग्रधन्वातंप्र
गृह्णीतमाचिरम् ४१ एवमुक्तास्ततःसर्वेधार्तराष्ट्रस्यसैनिकाः ॥ अभ्यद्रवंतसंक्रुद्धाभीमसेनंमहाबलम् ४२ भगदत्तःप्रभिन्नेनकुंजरेणविशांपते ॥ अभ्ययात्सहसातत्रय
त्रभीमोव्यवस्थितः ४३ आपतन्नेवचरणेभीमसेनंशिलीमुखैः ॥ अदृश्यंसमरेचक्रेजीमूतइवभास्करम् ४४ अभिमन्युमुखास्तत्तुनामृष्यंतमहारथाः ॥ भीमस्याच्छा
दनंसंख्येस्वबाहुबलमाश्रिताः ४५ तएनंशरवर्षेणसमंतात्पर्यवारयन् ॥ गजंचशरवृष्ट्यातुबिभिदुस्तेसमंततः ४६ सशस्त्रवृष्ट्याऽभिहतःसमस्तैस्तैर्महारथैः ॥ प्राग्ज्यो
तिषगजोराजन्नानालिंगैःसुतेजनैः ४७ संजातरुधिरोत्पीडःप्रेक्षणीयोऽभवद्रणे ॥ गभस्तिभिरिवार्कस्यसंस्यूतोजलदोमहान् ४८ संचोदितोमदस्रावीभगदत्तेनवारणः ॥
अभ्यधावततान्सर्वान्कालोत्सृष्टइवांतकः ४९ द्विगुणंजवमास्थायकंपयंश्चरणैर्महीम् ॥ तस्यतत्सुमहद्रूपंदृष्ट्वासर्वेमहारथाः ५० असह्यंमन्यमानाश्चनातिप्रमनसो
ऽभवन् ॥ ततस्तुनृपतिःक्रुद्धोभीमसेनंस्तनांतरे ५१ आजघानमहाराजशरेणानतपर्वणा ॥ सोऽतिविद्धोमहेष्वासस्तेनराज्ञामहारथः ५२ मूर्च्छयाऽभिपरीतात्मा
ध्वजयष्टिंसमाश्रयत् ॥ तांस्तुभीतान्समालक्ष्यभीमसेनंचमूर्च्छितम् ५३ ननादबलवन्नादंभगदत्तःप्रतापवान् ॥ ततोघटोत्कचोराजन्प्रेक्ष्यभीमंतथागतम् ५४
संक्रुद्धोराक्षसोघोरस्तत्रैवांतरधीयत ॥ सकृत्वादारुणांमायांभीरूणांभयवर्धिनीम् ५५ अदृश्यतनिमेषार्धाद्घोररूपंसमास्थितः ॥ ऐरावणंसमारूढःसवैमायाकृतं
स्वयम् ५६ तस्यचान्येऽपिदिङ्नागाबभूवुरनुयायिनः ॥ अंजनोवामनश्चैवमहापद्मश्चसुप्रभः ५७ त्रयएतेमहानागाराक्षसैःसमधिष्ठिताः ॥ महाकायास्त्रिधाराजन्प्र
स्रवन्तोमदंबहु ५८

तेजोवीर्यबलोपेतामहाबलपराक्रमाः ॥ घटोत्कचस्तुस्वंनागंचोदयामासतंतदा ५९ सगजंभगदत्तंतुहंतुकामःपरंतपः ॥ तेचान्येचोदितानागाराक्षसैस्तैर्महाबलैः ६०
परिपेतुःसुसंरब्धाश्चतुर्दंष्ट्राश्चतुर्दिशम् ॥ भगदत्तस्यतंनागंविषाणैरभ्यपीडयन् ६१ सपीड्यमानस्तैर्नागैर्वेदनार्तःशराहतः ॥ अनदत्सुमहानादमिंद्राशनिसमस्वनम्
६२ तस्यतंनदतोनादंसुघोरंभीमनिःस्वनम् ॥ श्रुत्वाभीष्मोऽब्रवीद्द्रोणंराजानंचसुयोधनम् ६३ एषयुध्यतिसंग्रामेहैडिंबेनदुरात्मना ॥ भगदत्तोमहेष्वासःकृच्छ्रेचपरिवर्त
ते ६४ राक्षसश्चमहाकायःसचराजाऽतिकोपनः ॥ एतौसमेतौसमरेकालमृत्युसमावुभौ ६५ श्रूयतेचैवहृष्टानांपांडवानांमहास्वनः ॥ हस्तिनश्चैवसुमहान्भीतस्यरु
दितध्वनिः ६६ तत्रगच्छामभद्रंवोराजानंपरिरक्षितुम् ॥ अरक्ष्यमाणःसमरेक्षिप्रंप्राणान्विमोक्ष्यति ६७ तेत्वरध्वंमहावीर्याःकिंचिरेणप्रयामहे ॥ महान्हिवर्ततेरौद्रःसं
ग्रामोलोमहर्षणः ६८ भक्तश्चकुलपुत्रश्चशूरश्चपृतनापतिः ॥ युक्तंतस्यपरित्राणंकर्तुमस्माभिरच्युत ६९ भीष्मस्यतद्वचःश्रुत्वासर्वएवमहारथाः ॥ द्रोणभीष्मौपुरस्कृत्य
भगदत्तपरीप्सया ७० उत्तमंजवमास्थायप्रययुर्यत्रसोऽभवत् ॥ तान्प्रयातान्समालोक्ययुधिष्ठिरपुरोगमाः ७१ पंचालाःपांडवैःसार्धंपृष्ठतोऽनुययुःपरान् ॥ तान्यनीका
न्यथालोक्यराक्षसेन्द्रःप्रतापवान् ७२ ननादसुमहानादंविस्फोटमशनेरिव ॥ तस्यतंनिनदंश्रुत्वादृष्ट्वानागांश्चयुध्यतः ७३ भीष्मःशांतनवोभूयोभारद्वाजमभाषत ॥
नरोचतेमेसंग्रामोहैडिंबेनदुरात्मना ७४ बलवीर्यसमाविष्टःससहायश्चसांप्रतम् ॥ नैषशक्योयुधाजेतुमपिवज्रभृतास्वयम् ७५ लब्धलक्षःप्रहारीचवयंचश्रांतवाहनाः ॥
पंचालैःपांडवेयैश्चदिवसंक्षतविक्षताः ७६ तन्नमेरोचतेयुद्धंपांडवैर्जितकाशिभिः ॥ घुष्यतामवहारोऽद्यश्वोयोत्स्यामःपरैःसह ७७ पितामहवचःश्रुत्वातथाचक्रुःस्मकौर
वाः ॥ उपायेनापयानंतेघटोत्कचभयार्दिताः ७८ कौरवेषुनिवृत्तेषुपांडवाजितकाशिनः ॥ सिंहनादान्भृशंचक्रुःशंखान्दध्मुश्चभारत ७९ एवंतदभवद्युद्धंदिवसंभरतर्षभ ॥
पांडवानांकुरूणांचपुरस्कृत्यघटोत्कचम् ८० कौरवास्तुततोराजन्प्रययुःशिबिरंस्वकम् ॥ व्रीडमानानिशाकालेपांडवेयैःपराजिताः ८१ शरविक्षतगात्रास्तुपांडुपुत्राम
हारथाः ॥ युद्धेसुमनसोभूत्वाजग्मुःस्वशिबिरंप्रति ८२ पुरस्कृत्यमहाराजभीमसेनघटोत्कचौ ॥ पूजयंतस्तदाऽन्योन्यंमुदापरमयायुताः ८३ नदंतोविविधान्नादांस्तूर्य
स्वनविमिश्रितान् ॥ सिंहनादांश्चकुर्वंतोविमिश्रान्शंखनिःस्वनैः ८४ विनदंतोमहात्मानःकंपयंतश्चमेदिनीम् ॥ घट्टयन्तश्चमर्माणितवपुत्रस्यमारिष ८५ प्रयाताःशि
बिरायैवनिशाकालेपरंतप ॥ दुर्योधनस्तुनृपतिर्दीनोभ्रातृवधेनच ८६ मुहूर्तंचिंतयामासबाष्पशोकसमाकुलः ॥ ततःकृत्वाविधिंसर्वंशिबिरस्ययथाविधि ॥ प्रदध्यौ
शोकसंतप्तोभ्रातृव्यसनकर्शितः ८७ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप०चतुर्थदिवसावहारेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥

इतिभी० नी० भा० चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

भयमिति १ । २ । । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ सापह्नवाः

॥ धृतराष्ट्रउवाच ॥ भयंमेसुमहज्जातंविस्मयश्चैवसंजय ॥ श्रुत्वापांडुकुमाराणांकर्मदेवैःसुदुष्करम् १ पुत्राणांचपराभावंश्रुत्वासंजयसर्वशः ॥ चिंतामेमहतीसूतभवि
ष्यतिकथंत्विति २ ध्रुवंविदुरवाक्यानिधक्ष्यंतिहृदयंमम ॥ यथाहिदृश्यतेसर्वंदैवयोगेनसंजय ३ यत्रभीष्ममुखान्सर्वान्शस्त्रज्ञान्योधसत्तमान् ॥ पांडवानामनीकेषुयोधयं
तिप्रहारिणः ४ केनावध्यामहात्मानःपांडुपुत्रामहाबलाः ॥ केनदत्तवरास्तातकिंवाज्ञानंविदंतिते ५ येनक्षयंनगच्छंतिदिवितारागणाइव ॥ पुनःपुनर्नमृष्यामिहतंसैन्यंतुपांडवैः
६ मय्येवदंडःपततिदैवात्परमदारुणः ॥ यथाऽवध्याःपांडुसुतायथावध्याश्चमेसुताः ७ एतन्मेसर्वमाचक्ष्वयाथातथ्येनसंजय ॥ नहिपारंप्रपश्यामिदुःखस्यास्यकथंचन ८ स
मुद्रस्येवमहतोभुजाभ्यांप्रतरन्नरः ॥ पुत्राणांव्यसनंमन्येध्रुवंप्राप्तंसुदारुणम् ९ घातयिष्यतिमेसर्वान्पुत्रान्भीमोनसंशयः ॥ नहिपश्यामितंवीरंयोमेरक्षेत्सुतान्रणे १० ध्रुवं
विनाशःसंप्राप्तःपुत्राणांममसंजय ॥ तस्मान्मेकारणंसूतशक्तिंचैवविशेषतः ११ पृच्छतोवैयथातत्त्वंसर्वमाख्यातुमर्हसि ॥ दुर्योधनश्चयच्चक्रेदृष्ट्वास्वान्विमुखान्रणे १२ भी
ष्मद्रोणौकृपश्चैवसौबलश्चजयद्रथः ॥ द्रौणिर्वाऽपिमहेष्वासोविकर्णोवामहाबलः १३ निश्चयोवाऽपिकस्तेषांतदाह्यासीन्महात्मनाम् ॥ विमुखेषुमहाप्राज्ञममपुत्रेषुसंजय
१४ ॥ संजयउवाच ॥ शृणुराजन्नवहितःश्रुत्वाचैवावधारय ॥ नैवमंत्रकृतंकिंचिन्नैवमायांतथाविधाम् १५ नवैविभीषिकांकांचिद्राजन्कुर्वंतिपांडवाः ॥ युध्यंतितेयथान्यायं
शक्तिमंतश्चसंयुगे १६ धर्मेणसर्वकार्याणिजीवितादीनिभारत ॥ आरभंतेसदापार्थाःप्रार्थयानामहद्यशः १७ नतेयुद्धान्निवर्तंतेधर्मोपेतामहाबलाः ॥ श्रियापरमयायुक्ताय
तोधर्मस्ततोजयः १८ तेनावध्यारणेपार्थाजययुक्ताश्चपार्थिव ॥ तवपुत्रादुरात्मानःपापेष्वभिरताःसदा १९ निष्ठुराहीनकर्माणस्तेनहीयंतिसंयुगे ॥ सुबहूनिनृशंसानि
पुत्रैस्तवजनेश्वर २० निकृतानीहपांडूनांनीचैरिवयथानरैः ॥ सर्वंचतदनादृत्यपुत्राणांतवकिल्बिषम् २१ सापन्हवाःसदैवासन्पांडवाःपांडुपूर्वज ॥ नचैतान्बहुमन्यंतेपुत्रास्त
वविशांपते २२ तस्यपापस्यसततंक्रियमाणस्यकर्मणः ॥ सांप्रतंसुमहद्घोरंफलंप्राप्तंजनेश्वर २३ सत्वंभुंक्ष्वमहाराजसपुत्रःससुहृज्जनः ॥ नावबुध्यसियद्राजन्वार्यमाणः
सुहृज्जनैः २४ विदुरेणाथभीष्मेणद्रोणेनचमहात्मना ॥ तथामयाचाप्यसकृद्वार्यमाणोनबुध्यसे २५ वाक्यंहितंचपथ्यंचमर्त्याःपथ्यमिवौषधम् ॥ पुत्राणांमतमाज्ञायजि
तान्मन्यसिपांडवान् २६ शृणुभूयोयथातत्त्वंयन्मांत्वंपरिपृच्छसि ॥ कारणंभरतश्रेष्ठपांडवानांजयंप्रति २७ तत्तेऽहंकथयिष्यामियथाश्रुतमरिंदम ॥ दुर्योधनेनसंपृष्ट
एतमर्थंपितामहः २८ दृष्ट्वाभ्रातॄन्रणेसर्वान्निर्जितांस्तुमहारथान् ॥ शोकसंमूढहृदयोनिशाकालेस्मकौरवः २९

अपरिख्यातकिल्बिषाः २१ । २३ । २४ । २५ मन्यसिमन्यसे २६ । २७ । २८ । २९



३० । ३१ । ३२ । ३३ । ३४ ॥ पद्मंमम ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२

३० । ३१ । ३२ । ३३ । ३४ ॥ पद्मंमम ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२

पितामहंमहाप्राज्ञंविनयेनोपगम्यह ॥ यदब्रवीत्सुतस्तेऽसौतन्मेशृणुजनेश्वर ३० ॥ दुर्योधनउवाच ॥ द्रोणश्चत्वंचशल्यश्चकृपोद्रौणिस्तथैवच ॥ कृतवर्माचहार्दिक्यः
कांबोजश्चसुदक्षिणः ३१ भूरिश्रवाविकर्णश्चभगदत्तश्चवीर्यवान् ॥ महारथाःसमाख्याताःकुलपुत्रास्तनुत्यजः ३२ त्रयाणामपिलोकानांपर्याप्ताइतिमेमतिः ॥ पांडवा
नांसमस्ताश्चनातिष्ठंतपराक्रमे ३३ तत्रमेसंशयोजातस्तन्ममाचक्ष्वपृच्छतः ॥ यंसमाश्रित्यकौन्तेयाजयंत्यस्मान्क्षणेक्षणे ३४ ॥ भीष्मउवाच ॥ शृणुराजन्वचो
मह्यंयथावक्ष्यामिकौरव ॥ बहुशश्चमयोक्तोऽसिनचमेतत्त्वयाकृतम् ३५ क्रियतांपांडवैःसार्धंशमोभरतसत्तम ॥ एतत्क्षेममहंमन्येपृथिव्यास्तववाविभो ३६ भुंक्ष्वे
मांपृथिवींराजन्भ्रातृभिःसहितःसुखी ॥ दुर्हृदस्तापयन्सर्वान्नंदयंश्चापिबांधवान् ३७ नचमेक्रोशतस्तातश्रुतवानसिवैपुरा ॥ तदिदंसमनुप्राप्तंयत्पांडून्नवमन्यसे ३८
यश्चहेतुरवध्यत्वेतेषामक्लिष्टकर्मणाम् ॥ तंशृणुष्वमहाबाहोममकीर्तयतःप्रभो ३९ नास्तिलोकेषुतद्भूतंभवितानोभविष्यति ॥ योजयेत्पांडवान्सर्वान्पालिताञ्छा
र्ङ्गधन्वना ४० यत्तुमेकथितंतातमुनिभिर्भावितात्मभिः ॥ पुराणगीतंधर्मज्ञतच्छृणुष्वयथातथम् ४१ पुराकिलसुराःसर्वेऋषयश्चसमागताः ॥ पितामहमुपासेदुःपर्वते
गन्धमादने ४२ तेषांमध्येसमासीनःप्रजापतिरपश्यत ॥ विमानंप्रज्वलद्भासास्थितंप्रवरमंबरे ४३ ध्यानेनावेद्यतद्ब्रह्माकृत्वाचनियतोऽञ्जलिम् ॥ नमश्चकारहृष्टात्मा
पुरुषंपरमेश्वरम् ४४ ऋषयस्त्वथदेवाश्चदृष्ट्वाब्रह्माणमुत्थितम् ॥ स्थिताःप्रांजलयःसर्वेपश्यंतोमहदद्भुतम् ४५ यथावच्चतमभ्यर्च्यब्रह्माब्रह्मविदांवरः ॥ जगादजगतः
स्रष्टापरंपरमधर्मवित् ४६ विश्वावसुर्विश्वमूर्तिर्विश्वेशोविष्वक्सेनोविश्वकर्मावशीच ॥ विश्वेश्वरोवासुदेवोऽसितस्माद्योगात्मानंदैवतंत्वामुपैमि ४७ जयविश्वमहा
देवजयलोकहितेरत ॥ जययोगीश्वरविभोजययोगपरावर ४८ पद्मगर्भविशालाक्षजयलोकेश्वरेश्वर ॥ भूतभव्यभवन्नाथजयसौम्यात्मजात्मज ४९ असंख्येयगुणा
धारजयसर्वपरायण ॥ नारायणसुदुष्पारजयशार्ङ्गधनुर्धर ५० जयसर्वगुणोपेतविश्वमूर्तेनिरामय ॥ विश्वेश्वरमहाबाहोजयलोकार्थतत्पर ५१ महोरगवराहाद्यह
रिकेशविभोजय ॥ हरिवासदिशामीशविश्ववासामिताव्यय ५२ व्यक्ताव्यक्तामितस्थाननियतेंद्रियसत्क्रिय ॥ असंख्येयात्मभावज्ञजयगंभीरकामद ५३ अनंत
विदितब्रह्मन्नित्यभूतविभावन ॥ कृतकार्यकृतप्रज्ञधर्मज्ञविजयावह ५४ गुह्यात्मन्सर्वयोगात्मन्स्फुटसंभूतसंभव ॥ भूताद्यलोकतत्त्वेशजयभूतविभावन ५५ आ
त्मयोनेमहाभागकल्पसंक्षेपतत्पर ॥ उद्भावनमनोभावजयब्रह्मजयप्रिय ५६ निसर्गसर्गनिरतकामेशपरमेश्वर ॥ अमृतोद्भवसद्भावमुक्तात्मन्विजयप्रद ५७ प्रजा
पतिपतेदेवपद्मनाभमहाबल ॥ आत्मभूतमहाभूतसत्वात्मन्जयसर्वदा ५८ पादौतवधरादेवीदिशोबाहूदिवंशिरः ॥ मूर्तिस्तेऽहंसुराःकायश्चंद्रादित्यौचचक्षुषी ५९

[illegible] । ५४ । ५५ । ५६ । ५७ । ५८ । ५९

६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ ७३ । ७४ । ७५ ॥ इतिभी०नी०भा०पंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ॥ ततइति १ । २



बलंतपश्चसत्यंचकर्मधर्मात्मकंतव ॥ तेजोग्निःपवनःश्वासआपस्तेस्वेदसंभवाः ६० अश्विनौश्रवणौनित्यंदेवीजिह्वासरस्वती ॥ वेदाःसंस्कारनिष्ठाहित्वयीदंजगदा
श्रितम् ६१ नसंख्यानंपरीमाणंनतेजोनपराक्रमम् ॥ नबलंयोगयोगीशजानीमस्तेनसंभवम् ६२ त्वद्भक्तिनिरतादेवनियमैस्त्वांसमाश्रिताः ॥ अर्चयामःसदा
विष्णोपरमेशंमहेश्वरम् ६३ ऋषयोदेवगंधर्वायक्षराक्षसपन्नगाः ॥ पिशाचामानुषाश्चैवमृगपक्षिसरीसृपाः ६४ एवमादिमयासृष्टंपृथिव्यांत्वत्प्रसादजम् ॥ पद्मना
भविशालाक्षकृष्णदुःखप्रणाशन ६५ त्वंगतिःसर्वभूतानांत्वंनेतात्वंजगद्गुरुः ॥ त्वत्प्रसादेनदेवेशसुखिनोविबुधाःसदा ६६ पृथिवीनिर्भयादेवत्वत्प्रसादात्सदाभवत् ॥
तस्माद्भवविशालाक्षयदुवंशविवर्धनः ६७ धर्मसंस्थापनार्थायदैत्यानांचवधायच ॥ जगतोधारणार्थायविज्ञाप्यंकुरुमेविभो ६८ यत्तत्परमकंगुह्यंत्वत्प्रसादादिदं
विभो ॥ वासुदेवतदेतत्तेमयोद्गीतंयथातथम् ६९ सृष्ट्वासंकर्षणंदेवंस्वयमात्मानमात्मना ॥ कृष्णत्वमात्मनास्राक्षीःप्रद्युम्नंचात्मसंभवम् ७० प्रद्युम्नादनिरुद्धंत्वंयंविदुर्वि
ष्णुमव्ययम् ॥ अनिरुद्धोऽसृजन्मांवैब्रह्माणंलोकधारिणम् ७१ वासुदेवमयःसोऽहंत्वयैवास्मिविनिर्मितः ॥ विभज्यभागशोऽऽत्मानंव्रजमानुषतांविभो ७२ तत्रा
सुरवधंकृत्वासर्वलोकसुखायवै ॥ धर्मंप्राप्ययशःप्राप्ययोगंप्राप्स्यसितत्त्वतः ७३ त्वांहिब्रह्मर्षयोलोकेदेवाश्चामितविक्रम ॥ तैस्तैर्हिनामभिर्युक्तागायंतिपरमात्म
कम् ७४ स्थिताश्चसर्वेत्वयिभूतसंघाःकृत्वाऽऽश्रयंत्वांवरदंसुबाहो ॥ अनादिमध्यांतमपारयोगंलोकस्यसेतुंप्रवदंतिविप्राः ७५ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभी
ष्मवधप० विश्वोपाख्यानेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ॥ भीष्मउवाच ॥ ततःसभगवान्देवोलोकानामीश्वरेश्वरः ॥ ब्रह्माणंप्रत्युवाचेदंस्निग्धगं
भीरयागिरा १ विदितंतातयोगान्मेसर्वमेतत्तवेप्सितम् ॥ तथातद्भवितेत्युक्त्वातत्रैवांतरधीयत २ ततोदेवर्षिगंधर्वाविस्मयंपरमंगताः ॥ कौतूहलपराःसर्वेपितामहम
थाब्रुवन् ३ कोन्वयंयोभगवताप्रणम्यविनयाद्विभो ॥ वाग्भिःस्तुतोवरिष्ठाभिःश्रोतुमिच्छामतंवयम् ४ एवमुक्तस्तुभगवान्प्रत्युवाचपितामहः ॥ देवब्रह्मर्षिगंधर्वा
न्सर्वान्मधुरयागिरा ५ यत्तत्परंभविष्यंचभवितव्यंचयत्परम् ॥ भूतात्माचप्रभुश्चैवब्रह्मयच्चपरंपदम् ६ तेनास्मिकृतसंवादःप्रसन्नेनसुरर्षभाः ॥ जगतोऽनुग्रहार्थाययया
चितोमेजगत्पतिः ७ मानुषंलोकमातिष्ठवासुदेवइतिश्रुतः ॥ असुराणांवधार्थायसंभवस्वमहीतले ८ संग्रामेनिहतायेतेदैत्यदानवराक्षसाः ॥ तइमेनृषुसंभूताघोररूपा
महाबलाः ९ तेषांवधार्थंभगवान्नरेणसहितोवशी ॥ मानुषींयोनिमास्थायचरिष्यतिमहीतले १० नरनारायणौयौतौपुराणावृषिसत्तमौ ॥ सहितौमानुषेलोकेसंभूताव
मितद्युती ११ अजेयौसमरेयत्तौसहितैरमरैरपि ॥ मूढास्त्वेतौनजानंतिनरनारायणावृषी १२

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ ।२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० ।३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ कृतलक्षणैःस्वस्वगुणप्रख्यातैः

तस्याहमग्रजःपुत्रःसर्वस्यजगतःप्रभुः ॥ वासुदेवोऽर्चनीयोवःसर्वलोकमहेश्वरः १३ तथामनुष्योऽयमितिकदाचित्सुरसत्तमाः ॥ नावज्ञेयोमहावीर्यःशंखचक्रगदाधरः
१४ एतत्परमकंगुह्यमेतत्परमकंपदम् ॥ एतत्परमकंब्रह्मएतत्परमकंयशः १५ एतदक्षरमव्यक्तमेतद्वैशाश्वतंमहः ॥ यत्तत्पुरुषसंज्ञंवैगीयतेज्ञायतेनच १६ एतत्परम
कंतेजएतत्परमकंसुखम् ॥ एतत्परमकंसत्यंकीर्तितंविश्वकर्मणा १७ तस्मात्सेन्द्रैःसुरैःसर्वैर्लोकैश्चामितविक्रमः ॥ नावज्ञेयोवासुदेवोमानुषोऽयमितिप्रभुः १८ यश्च
मानुषमात्रोऽयमितिब्रूयात्समंदधीः ॥ हृषीकेशमवज्ञानात्तमाहुःपुरुषाधमम् १९ योगिनंतंमहात्मानंप्रविष्टंमानुषींतनुम् ॥ अवमन्येद्वासुदेवंतमाहुस्तामसंजनाः
२० देवंचराचरात्मानंश्रीवत्सांकंसुवर्चसम् ॥ पद्मनाभंनजानातितमाहुस्तामसंबुधाः २१ किरीटकौस्तुभधरंमित्राणामभयंकरम् ॥ अवजानन्महात्मानंघोरेतमसि
मज्जति २२ एवंविदित्वातत्त्वार्थंलोकानामीश्वरेश्वरः ॥ वासुदेवोनमस्कार्यःसर्वलोकैःसुरोत्तमाः २३ ॥ भीष्मउवाच ॥ एवमुक्त्वासभगवान्देवान्सर्षिगणान्पुरा ॥
विसृज्यसर्वभूतात्माजगामभवनंस्वकम् २४ ततोदेवाःसगंधर्वामुनयोऽप्सरसोपिच ॥ कथांतांब्रह्मणागीतांश्रुत्वाप्रीतादिवंययुः २५ एतच्छ्रुतंमयातातऋषीणांभावि
तात्मनाम् ॥ वासुदेवंकथयतांसमवायेपुरातनम् २६ रामस्यजामदग्न्यस्यमार्कंडेयस्यधीमतः ॥ व्यासनारदयोश्चापिसकाशाद्भरतर्षभ २७ एतमर्थंचविज्ञायश्रुत्वाच
प्रभुमव्ययम् ॥ वासुदेवंमहात्मानंलोकानामीश्वरेश्वरम् २८ यस्यचैवात्मजोब्रह्मासर्वस्यजगतःपिता ॥ कथंनवासुदेवोऽयमर्च्यश्चेज्यश्चमानवैः २९ वारितोऽसिम
यातातमुनिभिर्वेदपारगैः ॥ मागच्छसंयुगंतेनवासुदेवेनधन्विना ३० मापांडवैःसार्द्धमितितत्त्वंमोहान्नबुध्यसे ॥ मन्येत्वांराक्षसंक्रूरंतथाचासितमोवृतः ३१ यस्मा
द्द्विषसिगोविंदंपांडवंतंधनंजयम् ॥ नरनारायणौदेवौकोऽन्योद्विष्याद्धिमानवः ३२ तस्माद्ब्रवीमितेराजन्नेषवैशाश्वतोऽव्ययः ॥ सर्वलोकमयोनित्यःशास्ताधात्रीधरो
ध्रुवः ३३ योधारयतिलोकांस्त्रींश्चराचरगुरुःप्रभुः ॥ योद्धाजयश्चजेताचसर्वप्रकृतिरीश्वरः ३४ राजन्सर्वमयोह्येषतमोरागविवर्जितः ॥ यतःकृष्णस्ततोधर्मोयतोधर्म
स्ततोजयः ३५ तस्यमाहात्म्ययोगेनयोगेनात्ममयेनच ॥ धृताःपांडुसुताराजन्जयश्चैषांभविष्यति ३६ श्रेयोयुक्तांसदाबुद्धिंपांडवानांदधातियः ॥ बलंचैवरणेनित्यं
भयेभ्यश्चैवरक्षति ३७ सएषशाश्वतोदेवःसर्वगुह्यमयःशिवः ॥ वासुदेवइतिज्ञेयोयन्मांपृच्छसिभारत ३८ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चकृतलक्षणैः ॥ सेव्यतेऽभ्यर्च्यतेचै
वनित्ययुक्तैःस्वकर्मभिः ३९ द्वापरस्ययुगस्यन्तेआदौकलियुगस्यच ॥ सात्वतंविधिमास्थायगीतःसंकर्षणेनवै ४० सएषसर्वैसुरमर्त्यलोकंसमुद्रकक्ष्यांतरितांपुरींच ॥
युगेयुगेमानुषंचैववासंपुनःपुनःसृजतेवासुदेवः ४१ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० विश्वोपाख्यानेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ॥

३९ सात्वताःपंचरात्रागमविधिनाप्रजकास्तदीयंसात्वतं ४० कक्ष्याकांची पुरींद्वारकां ४१ ॥ इ० भी० नी० भा० षट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ॥ ॥ ॥ ॥

वासुदेवइति १ । २ । ३ । ४ । ५ । ६ निधनंमरणं मृत्युंमरणप्रयोजनं प्रभवउत्पत्तिहेतुः अव्ययःप्रलयहेतुः ७ । ८ । ९ । १० । ११ । १२ । १३ कर्णात्स्रवतीतिकर्णस्रोतःकर्णमलं १४

दुर्योधनउवाच ॥ वासुदेवोमहद्भूतंसर्वलोकेषुकथ्यते ॥ तस्यागमंप्रतिष्ठांचज्ञातुमिच्छेपितामह १ ॥ भीष्मउवाच ॥ वासुदेवोमहद्भूतंसर्वदैवतदैवतम् ॥ नपरंपुंडरी
काक्षाद्दृश्यतेभरतर्षभ २ मार्कंडेयश्चगोविंदेकथयत्यद्भुतंमहत् ॥ सर्वभूतानिभूतात्मामहात्मापुरुषोत्तमः ३ आपोवायुश्चतेजश्चत्रयमेतदकल्पयत् ॥ ससृष्ट्वापृथिवीं
देवींसर्वलोकेश्वरःप्रभुः ४ अप्सुवैशयनंचक्रेमहात्मापुरुषोत्तमः ॥ सर्वतेजोमयोदेवोयोगात्सुष्वापतत्रह ५ मुखतःसोऽग्निमसृजत्प्राणाद्वायुमथापिच ॥ सरस्वतींच
वेदांश्चमनसःससृजेऽच्युतः ६ एषलोकान्ससर्जादौदेवांश्चऋषिभिःसह ॥ निधनंचैवमृत्युंचप्रजानांप्रभवाप्ययौ ७ एषधर्मश्चधर्मज्ञोवरदःसर्वकामदः ॥ एषकर्ताचका
र्यंचपूर्वदेवःस्वयंप्रभुः ८ भूतंभव्यंभविष्यच्चपूर्वमेतदकल्पयत् ॥ उभेसंध्येदिशःखंचनियमांश्चजनार्दनः ९ ऋषींश्चैवहिगोविंदस्तपश्चैवाभ्यकल्पयत् ॥ स्रष्टारंजगत
श्चापिमहात्माप्रभुरव्ययः १० अग्रजंसर्वभूतानांसंकर्षणमकल्पयत् ॥ तस्मान्नारायणोजज्ञेदेवदेवःसनातनः ११ नाभौपद्मंबभूवास्यसर्वलोकस्यसंभवात् ॥ तस्मा
त्पितामहोजातस्तस्माज्जातास्त्विमाःप्रजाः १२ शेषंचाकल्पयद्देवमनंतंविश्वरूपिणम् ॥ योधारयतिभूतानिधरांचेमांसपर्वताम् १३ ध्यानयोगेनविप्राश्चतंविदंति
महौजसम् ॥ कर्णस्रोतोभवंचापिमधुंनाममहासुरम् १४ तमुग्रमुग्रकर्माणमुग्रांबुद्धिंसमास्थितम् ॥ ब्रह्मणोऽपचितिंयातुंजघानपुरुषोत्तमः १५ तस्यताततवधादेवदेवदान
वमानवाः ॥ मधुसूदनमित्याहुर्ऋषयश्चजनार्दनम् १६ वराहश्चैवसिंहश्चत्रिविक्रमगतिःप्रभुः ॥ एषमातापिताचैवसर्वेषांप्राणिनांहरिः १७ परंहिपुंडरीकाक्षान्नभूतं
नभविष्यति ॥ मुखतःसोऽसृजद्विप्रान्बाहुभ्यांक्षत्रियांस्तथा १८ वैश्यांश्चाप्युरुतोराजन्शूद्रान्वैपादतस्तथा ॥ तपसानियतोदेवोनिधानंसर्वदेहिनाम् १९ ब्रह्मभूत
ममावास्यांपौर्णमास्यांतथैवच ॥ योगभूतंपरिचरन्केशवंमहदाप्नुयात् २० केशवःपरमंतेजःसर्वलोकपितामहः ॥ एवमाहुर्हृषीकेशंमुनयोवैनराधिप २१ एवमेनंवि
जानीहिआचार्यंपितरंगुरुम् ॥ कृष्णोयस्यप्रसीदेतलोकास्तेनाक्षयाजिताः २२ यश्चैवैनंभयस्थानेकेशवंशरणंव्रजेत् ॥ सदानरःपठंश्चेदंस्वस्तिमान्ससुखीभवेत् २३
येचकृष्णंप्रपद्यंतेतेनमुह्यंतिमानवाः ॥ भयेमहतिमग्नांश्चपातिनित्यंजनार्दनः २४ सतंयुधिष्ठिरोज्ञात्वायाथातथ्येनभारत ॥ सर्वात्मनामहात्मानंकेशवंजगदीश्वरम् ॥
प्रपन्नःशरणंराजन्योगानांप्रभुमीश्वरम् २५ ॥ इतिश्रीमहाभारते भीष्मपर्वणि भीष्मवधपर्वणि विश्वोपाख्याने सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ॥

ब्रह्मणःसकाशादपचितिंसत्कारंयातुंप्राप्तुं । यांतमितिपाठे ब्रह्मणःअपचितिंक्षयंकर्तुमितिशेषः यांतंधावंतं १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ ॥ इतिभीष्मपर्व
णिनीलकंठीये भारतभावदीपे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शृण्विति । इदमितिसामान्येनपुंसकं १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ इतिभी०नी०भा० अष्टषष्टितमो

॥ भीष्मउवाच ॥ शृणुचेदंमहाराजब्रह्मभूतंस्तवंमम ॥ ब्रह्मर्षिभिश्चदेवैश्चयः पुराकथितोभुवि १ साध्यानामपिदेवानांदेवदेवेश्वरःप्रभुः ॥ लोकभावनभावज्ञइतित्वांना
रदोऽब्रवीत् २ भूतंभव्यंभविष्यंचमार्कंडेयोऽभ्युवाचह ॥ यज्ञंत्वांचैवयज्ञानांतपश्चतपसामपि ३ देवानामपिदेवंचत्वामाहभगवान्भृगुः ॥ पुराणंचैवपरमंविष्णो
रूपंतवेतिच ४ वासुदेवोवसूनांत्वंशक्रंस्थापयितातथा ॥ देवदेवोऽसिदेवानामितिद्वैपायनोऽब्रवीत् ५ पूर्वेप्रजानिसर्गेचदक्षमाहुःप्रजापतिम् ॥ स्रष्टारंसर्वलोकानामं
गिरास्त्वांतथाऽब्रवीत् ६ अव्यक्तंतेशरीरोत्थंव्यक्तंतेमनसिस्थितम् ॥ देवास्त्वत्संभवाश्चैवदेवलस्त्वसितोऽब्रवीत् ७ शिरसातेदिवंव्याप्तंबाहुभ्यांपृथिवीतथा ॥ जठरंते
त्रयोलोकाःपुरुषोऽसिसनातनः ८ एवंत्वामभिजानंतितपसाभावितानराः ॥ आत्मदर्शनतृप्तानामृषीणांचासिसत्तमः ९ राजर्षीणामुदाराणामाहवेष्वनिवर्तिनाम् ॥
सर्वधर्मप्रधानानांत्वंगतिर्मधुसूदन १० इतिनित्यंयोगविद्भिर्भगवान्पुरुषोत्तमः ॥ सनत्कुमारप्रमुखैःस्तूयतेऽभ्यर्च्यतेहरिः ११ एषतेविस्तरस्तातसंक्षेपश्चप्रकीर्तितः ॥
केशवस्ययथातत्त्वंसुप्रीतोभजकेशवम् १२ संजयउवाच ॥ पुण्यंश्रुत्वैतदाख्यानंमहाराजसुतस्तव ॥ केशवंबहुमेनेसपांडवांश्चमहारथान् १३ तमब्रवीन्महाराजभीष्मः
शांतनवःपुनः ॥ माहात्म्यंतेश्रुतंराजन्केशवस्यमहात्मनः १४ नरस्यचयथातत्त्वंयन्मांत्वंपृच्छसेनृप ॥ यदर्थंनृषुसंभूतौनरनारायणावृषी १५ अवध्यौचयथावीरौसं
युगेष्वपराजितौ ॥ यथाचपांडवाराजन्नवध्यायुधिकस्यचित् १६ प्रीतिमान्हिदृढंकृष्णःपांडवेषुयशस्विषु ॥ तस्माद्ब्रवीमिराजेंद्रशमोभवतुपांडवैः १७ पृथिवींभुंक्ष्व
सहितोभ्रातृभिर्बलिभिर्वशी ॥ नरनारायणौदेवाववज्ञायनशिष्यसि १८ एवमुक्त्वातवपितातूष्णीमासीद्विशांपते ॥ व्यसर्जयच्चराजानंशयनंचविवेशह १९ राजाचशि
बिरंप्रायात्प्रणिपत्यमहात्मने ॥ शिश्येचशयनेशुभ्रेरात्रिंतांभरतर्षभ २० ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भीष्मवधपर्वणिविश्वोपाख्यानेअष्टषष्टितमोऽध्यायः
॥ ६८ ॥ विश्वोपाख्यानंसमाप्तम् ॥ ॥ संजयउवाच ॥ व्युषितायांतुशर्वर्यामुदितेचदिवाकरे ॥ उभेसेनेमहाराजयुद्धायैवसमीयतुः १ अभ्यधावंतसंक्रुद्धाःपर
स्परजिगीषवः ॥ तेसर्वेसहितायुद्धेसमालोक्यपरस्परम् २ पांडवाधार्तराष्ट्राश्चराजन्दुर्मंत्रितेतव ॥ व्यूहौचव्यूह्यसंरब्धाःसंप्रहृष्टाःप्रहारिणः ३ अरक्षन्मकरव्यूहंभी
ष्मोराजन्समंततः ॥ तथैवपांडवाराजन्नरक्षन्व्यूहमात्मनः ४ सनिर्ययौमहाराजपितादेवव्रतस्तव ॥ महतारथवंशेनसंवृतोरथिनांवरः ५ इतरेतरमन्वीयुर्यथाभागमव
स्थिताः ॥ रथिनःपत्तयश्चैवदंतिनःसादिनस्तथा ६ तान्दृष्ट्वाऽभ्युद्यतान्संख्येपांडवाहियशस्विनः ॥ श्येनेनव्यूहराजेनतेनाजय्येनसंयुगे ७ अशोभतमुखेतस्यभी
मसेनोमहाबलः ॥ नेत्रेशिखंडीदुर्धर्षोधृष्टद्युम्नश्चपार्षतः ८

ऽध्यायः ॥ ६८ ॥ व्युषितायामिति । १ । २ । ३ । ४ । ५ । ६ । ७ । ८

शीर्षेतस्याभवद्वीरःसात्यकिःसत्यविक्रमः ॥ विधुन्वन्गांडिवंपार्थोग्रीवायामभवत्तदा ९ अक्षौहिण्यासमंतत्रवामपक्षोऽभवत्तदा ॥ महात्माद्रुपदःश्रीमान्सहपुत्रेणसंयुगे
॥ ९९ ॥ १० दक्षिणश्चाभवत्पक्षःकेकयोऽक्षौहिणीपतिः ॥ पृष्ठतोद्रौपदेयाश्चसौभद्रश्चापिवीर्यवान् ११ पृष्ठेसमभवच्छ्रीमान्स्वयंराजायुधिष्ठिरः ॥ भ्रातृभ्यांसहितोवीरोयमाभ्यां अ०
चारुविक्रमः १२ प्रविश्यतुरणेभीमोमकरंमुखतस्तदा ॥ भीष्ममासाद्यसंग्रामेछादयामाससायकैः १३ ततोभीष्मोमहास्त्राणिपातयामासभारत ॥ मोहयन्पांडुपुत्राणांव्यू ७०
ढंसैन्यंमहाहवे १४ संमुह्यतितदासैन्येत्वरमाणोधनंजयः ॥ भीष्मंशरसहस्रेणविव्याधरणमूर्धनि १५ प्रतिसंवार्यचास्त्राणिभीष्ममुक्तानिसंयुगे ॥ स्वेनानीकेनहृष्टेनयुद्धाय
समुपस्थितः १६ ततोदुर्योधनोराजाभारद्वाजमभाषत ॥ पूर्वंदृष्ट्वावधंघोरंबलस्यबलिनांवरः १७ भ्रातृणांचवधंयुद्धेस्मरमाणोमहारथः ॥ आचार्यसततंहित्वंहितकामोम
मानघ १८ वयंहित्वांसमाश्रित्यभीष्मंचैवपितामहम् ॥ देवानपिरणेजेतुंप्रार्थयामोनसंशयः १९ किमुपांडुसुतान्युद्धेहीनवीर्यपराक्रमान् ॥ सतथाकुरुभद्रंतेयथावध्यंति
पांडवाः २० एवमुक्तस्ततोद्रोणस्तवपुत्रेणमारिष ॥अभिनत्पांडवानीकंप्रेक्षमाणस्यसात्यकेः २१ सात्यकिस्तुततोद्रोणंवारयामासभारत ॥ तयोःप्रववृतेयुद्धंघोररूपंभया
वहम् २२ शैनेयंतुरणेक्रुद्धोभारद्वाजःप्रतापवान् ॥ अविध्यन्निशितैर्बाणैर्जत्रुदेशेहसन्निव २३ भीमसेनस्ततःक्रुद्धोभारद्वाजमविध्यत ॥ संरक्षन्सात्यकिंराजन्द्रोणाच्छस्त्रभृ
तांवरात् २४ ततोद्रोणश्चभीष्मश्चतथाशल्यश्चमारिष ॥ भीमसेनंरणेक्रुद्धाश्छादयांचक्रिरेशरैः २५ तत्राभिमन्युःसंक्रुद्धोद्रौपदेयाश्चमारिष ॥ विव्यधुर्निशितैर्बाणैःस
र्वांस्तानुद्यतायुधान् २६ द्रोणभीष्मौतुसंक्रुद्धावापतंतौमहाबलौ ॥ प्रत्युद्ययौशिखंडीतुमहेष्वासोमहाहवे २७ प्रगृह्यबलवद्वीरोधनुर्जलदनिःस्वनम् ॥ अभ्यवर्षच्छ
रैस्तूर्णंछादयानोदिवाकरम् २८ शिखंडिनंसमासाद्यभरतानांपितामहः ॥ अवर्जयतसंग्रामंस्त्रीत्वंतस्यानुसंस्मरन् २९ ततोद्रोणोमहाराजअभ्यद्रवततंरणे ॥ रक्षमाण
स्तदाभीष्मंतवपुत्रेणचोदितः ३० शिखंडीतुसमासाद्यद्रोणंशस्त्रभृतांवरम् ॥ अवर्जयतसंत्रस्तोयुगांताग्निमिवोल्बणम् ३१ ततोबलेनमहतापुत्रस्तवविशांपते ॥
जुगोपभीष्ममासाद्यप्रार्थयानोमहद्यशः ३२ तथैवपांडवाराजन्पुरस्कृत्यधनंजयम् ॥ भीष्ममेवाभ्यवर्ततजयेकृत्वादृढांमतिम् ३३ तद्युद्धमभवद्धोरंदेवानांदानवैरिव ॥
जयमाकांक्षतांसंख्येयशश्चसुमहाद्भुतम् ३४ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणिपंचमदिवसयुद्धारंभेऊनसप्ततितमोऽध्यायः ६९ ॥ संजयउवाच ॥ अ
करोत्तुमुलंयुद्धंभीष्मःशांतनवस्तदा ॥ भीमसेनभयादिच्छन्पुत्रांस्तारयितुंतव १ पूर्वाह्णेतन्महारौद्रंराज्ञांयुद्धमवर्तत ॥ कुरूणांपांडवानांचमुख्यशूरविनाशनम् २
तस्मिन्नाकुलसंग्रामेवर्तमानेमहाभये ॥ अभवत्तुमुलःशब्दःसंस्पृशन्गगनंमहत् ३

नदद्भिश्चमहानागैर्हेषमाणैश्चवाजिभिः ॥ भेरीशंखनिनादैश्चतुमुलंसमपद्यत ४ युयुत्सवस्तेविक्रांताविजयायमहाबलाः ॥ अन्योन्यमभिगर्जन्तोगोष्ठेष्विवमहर्षभाः
५ शिरसांपात्यमानानांसमरेनिशितैःशरैः ॥ अश्मवृष्टिरिवाकाशेबभूवभरतर्षभ ६ कुंडलोष्णीषधारीणिजातरूपोज्ज्वलानिच ॥ पतितानिस्मदृश्यन्तेशिरांसिभरत
र्षभ ७ विशिखोन्मथितैर्गात्रैर्बाहुभिश्चसकार्मुकैः ॥ सहस्ताभरणैश्चान्यैरभवच्छादितामही ८ कवचोपहितैर्गात्रैर्हस्तैश्चसमलंकृतैः ॥ मुखैश्चचन्द्रसंकाशैरक्तांतनयनैः
शुभैः ९ गजवाजिमनुष्याणांसर्वगात्रैश्चभूपते ॥ आसीत्सर्वासमास्तीर्णामुहूर्तेनवसुंधरा १० रजोमेघैश्चतुमुलैःशस्त्रविद्युत्प्रकाशिभिः ॥ आयुधानांचनिर्घोषःस्त
नयित्नुसमोऽभवत् ११ ससंप्रहारस्तुमुलःकटुकःशोणितोदकः ॥ प्रावर्ततकुरूणांचपांडवानांचभारत १२ तस्मिन्महाभयेघोरेतुमुलेलोमहर्षणे ॥ ववृषुःशरवर्षाणि
क्षत्रियायुद्धदुर्मदाः १३ आक्रोशन्कुंजरास्तत्रशरवर्षप्रतापिताः ॥ तावकानांपरेषांचसंयुगेभरतर्षभ १४ संरब्धानांचवीराणांधीराणाममितौजसाम् ॥ धनुर्ज्यातल
शब्देननप्राज्ञायतकिंचन १५ उत्थितेषुकबंधेषुसर्वतःशोणितोदके ॥ समरेपर्यधावंतनृपारिपुवधोद्यताः १६ शरशक्तिगदाभिस्तेखड्गैश्चामिततेजसः ॥ निजघ्नुःसमरे
न्योऽन्यंशूराःपरिघबाहवः १७ बभ्रमुःकुंजराश्चात्रशरैर्विद्धानिरंकुशाः ॥ अश्वाश्चपर्यधावंतहतारोहादिशोदश १८ उत्पत्यनिपतंत्यन्येशरघातप्रपीडिताः ॥ तावका
नांपरेषांचयोधाभरतसत्तम १९ बाहूनामुत्तमांगानांकार्मुकाणांचभारत ॥ गदानांपरिघाणांचहस्तानांचोरुभिःसह २० पादानांभूषणानांचकेयूराणांचसंवशः ॥
राशयस्तत्रदृश्यंतेभीष्मभीमसमागमे २१ अश्वानांकुंजराणांचरथानांचानिवर्तिनाम् ॥ संघाताःस्मप्रदृश्यंतेतत्रतत्रविशांपते २२ गदाभिरसिभिःप्रासैर्बाणैश्चनतप
र्वभिः ॥ जघ्नुःपरस्परंतत्रक्षत्रियाःकालआगते २३ अपरेबाहुभिर्वीरानियुद्धकुशलायुधि ॥ बहुधासमसज्जंतआयसैःपरिघैरिव २४ मुष्टिभिर्जानुभिश्चैवतलैश्चैवविशांपते ॥
अन्योन्यंजघ्निरेवीरास्तावकाःपांडवैःसह २५ पतितैःपात्यमानैश्चविचेष्टद्भिश्चभूतले ॥ घोरमायोधनंजज्ञेतत्रतत्रजनेश्वर २६ विरथारथिनश्चात्रनिस्त्रिंशवरधारिणः ॥
अन्योन्यमभिधावन्तःपरस्परवधैषिणः २७ ततोदुर्योधनोराजाकलिंगैर्बहुभिर्वृतः ॥ पुरस्कृत्यरणेभीष्मंपांडवानभ्यवर्तत २८ तथैवपांडवाःसर्वेपरिवार्यवृकोदरम् ॥
भीष्ममभ्यद्रवन्क्रुद्धास्ततोयुद्धमवर्तत २९ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवध॰संकुलयुद्धेसप्ततितमोऽध्यायः ॥ ७० ॥ संजयउवाच ॥ दृष्ट्वाभीष्मेण
संसक्तान्भ्रातॄनन्यांश्चपार्थिवान् ॥ समभ्यधावद्गांगेयमुद्यतास्त्रोधनंजयः १ पांचजन्यस्यनिर्घोषंधनुषोगांडिवस्यच ॥ ध्वजंचदृष्ट्वापार्थस्यसर्वान्नोभयमाविशत् २
सिंहलांगूलमाकाशेज्वलंतमिवपर्वतम् ॥ असज्जमानंवृक्षेषुधूमकेतुमिवोत्थितम् ३

 भारतभावदीपेसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ॥ ॥ ॥ ॥ दृष्ट्वेति १ । २ । ३

बहुवर्णंविचित्रंचदिव्यंवानरलक्षणम् ॥ अपश्याममहाराजध्वजंगांडीवधन्वनः ४ विद्युतंमेघमध्यस्थांभ्राजमानामिवांबरे ॥ ददृशुर्गांडिवंयोधारुक्मपृष्ठंमहामृधे ५
आशुश्रुमश्चशंचास्यशक्रस्येवाभिगर्जतः ॥ सुघोरंतलयोःशब्दंनिघ्नतस्तववाहिनीम् ६ चंडवातोयथामेघःसविद्युत्स्तनयित्नुमान् ॥ दिशःसंप्लावयन्सर्वाःशरवर्षैः
समंततः ७ समभ्यधावद्गांगेयंभैरवास्त्रोधनंजयः ॥ दिशंप्राचींप्रतीचींचनजानीमोऽस्त्रमोहिताः ८ कांदिग्भूताःश्रांतपत्राहताश्वाहतचेतसः ॥ अन्योन्यमभिसंश्लिष्य
योधास्तेभरतर्षभ ९ भीष्ममेवाभ्यलीयंतसहसर्वैस्तवात्मजैः ॥ तेषामार्तायनमभूद्भीष्मःशांतनवोरणे १० समुत्पतंतिवित्रस्तारथेभ्योरथिनस्तथा ॥ सादिन
श्चाश्वपृष्ठेभ्योभूमौचापिपदातयः ११ श्रुत्वागांडीवनिर्घोषंविस्फूर्जितमिवाशनेः ॥ सर्वसैन्यानिभीतानिव्यवालीयंतभारत १२ अथकांबोजजैरश्वैर्महद्भिःशीघ्रगामि
भिः ॥ गोपानांबहुसाहस्रैर्बलैर्गोपायनैर्वृतः १३ मद्रसौवीरगांधारैस्त्रैगर्तैश्चविशांपते ॥ सर्वकालिंगमुख्यैश्चकलिंगाधिपतिर्वृतः १४ नानानरगणौघैश्चदुःशासन
पुरःसरः ॥ जयद्रथश्चनृपतिःसहितःसर्वराजभिः १५ हयारोहवराश्चैवतवपुत्रेणचोदिताः ॥ चतुर्दशसहस्राणिसौबलंपर्यवारयन् १६ ततस्तेसहिताःसर्वेविभ
क्तरथवाहनाः ॥ अर्जुनंसमरेजघ्नुस्तावकाभरतर्षभ १७ रथिभिर्वारणैरश्वैःपादातैश्चसमीरितम् ॥ घोरमायोधनंचक्रेमहाभ्रसदृशंरजः १८ तोमरप्रासनाराचगजाश्व
रथयोधिनाम् ॥ बलेनमहताभीष्मःसमसज्जत्किरीटिना १९ आवंत्यःकाशिराजेनभीमसेनेनसैंधवः ॥ अजातशत्रुर्मद्राणामृषभेणयशस्विना २० सहपुत्रःसहा
मात्यःशल्येनसमसज्जत ॥ विकर्णःसहदेवेनचित्रसेनःशिखंडिना २१ मत्स्यादुर्योधनंजग्मुःशकुनिंचविशांपते ॥ द्रुपदश्चेकितानश्चसात्यकिश्चमहारथः २२ द्रोणेन
समसज्जंतसपुत्रेणमहात्मना ॥ कृपश्चकृतवर्माचधृष्टद्युम्नमभिद्रुतौ २३ एवंप्रव्रजिताश्वानिभ्रांतनागरथानिच ॥ सैन्यानिसमसज्जंतप्रयुद्धानिसमंततः २४ निरभ्रेवि
द्युतस्तीव्रादिशश्चरजसाऽऽवृताः ॥ प्रादुरासन्महोल्काश्चसनिर्घाताविशांपते २५ प्रादुर्भूतोमहावातःपांसुवर्षंपपातच ॥ नभस्यंतर्दधेसूर्यःसैन्येनरजसाऽऽवृतः २६
प्रमोहःसर्वसत्वानामतीवसमपद्यत ॥ रजसाचाभिभूतानामस्त्रजालैश्चतुद्यताम् २७ वीरबाहुविसृष्टानांसर्वावरणभेदिनाम् ॥ संघातःशरजालानांतुमुलःसमपद्यत २८
प्रकाशंचक्रुराकाशमुद्यतानिभुजोत्तमैः ॥ नक्षत्रविमलाभानिशस्त्राणिभरतर्षभ २९ आर्षभाणिविचित्राणिरुक्मजालावृतानिच ॥ संपेतुर्दिक्षुसर्वासुचर्माणिभरत
र्षभ ३० सूर्यवर्णैश्चनिस्त्रिंशैःपात्यमानानिसर्वशः ॥ दिक्षुसर्वास्वदृश्यन्तशरीराणिशिरांसिच ३१ भग्नचक्राक्षनीडाश्चनिपातितमहाध्वजाः ॥ हताश्वाःपृथिवींजग्मु
स्तत्रतत्रमहारथाः ३२ परिपेतुर्हयाश्चात्रकेचिच्छस्त्रकृतव्रणाः ॥ रथान्विपरिकर्षंतोहतेषुरथयोधिषु ३३ शराहताभिन्नदेहाबद्धयोक्त्राहयोत्तमाः ॥ युगानिपर्यक
र्षंतत्रतत्रस्मभारत ३४

३५ वीतमाददिरेमतिगजंमृद्गंतोनिर्वीर्यमपिगजंजगृहुः मत्तगजवृद्धयेतिभावः 'वीतमसारगजे' इतिमेदिनी ३६। ३७। ३८। ३९। ४०। ४१। ४२। ४३ ॥ इतिभी० नी० भा० एकसप्तति

अदृश्यंतससूताश्वसाश्वाःसरथयोधिनः ॥ एकेनबलिनाराजन्वारणेनविमर्दिताः ३५ गंधहस्तिमदस्रावमाघ्रायबहवोरणे ॥ सन्निपातेबलौघानांवीतमाददिरेगजाः
३६ सतोमरैर्महामात्रैर्निपतद्भिर्गतासुभिः ॥ बभूवायोधनंछन्नंनाराचाभिहतैर्गजैः ३७ सन्निपातेबलौघानांप्रेषितैर्वरवारणैः ॥ निपेतुर्युधिसंभग्नाःसयोधाःसध्वजागजाः
३८ नागराजोपमैर्हस्तैर्नागैराक्षिप्यसंयुगे ॥ व्यदृश्यंतमहाराजसंभग्नारथकूबराः ३९ विशीर्णरथसंघाश्चकेशेष्वाक्षिप्यदंतिभिः ॥ द्रुमशाखाइवाविध्यनिष्पिष्टार
थिनोरणे ४० रथेषुचरथान्युद्धेसंसक्तान्वरवारणाः ॥ विकर्षंतोदिशःसर्वाःसंपेतुःसर्वशब्दगाः ४१ तेषांतथाकर्षतांतुगजानांरूपमाबभौ ॥ सरःसुनलिनीजालं
विषक्तमिवकर्षताम् ४२ एवंसंछादितंतत्रबभूवायोधनंमहत् ॥ सादिभिश्चपदातैश्चसध्वजैश्चमहारथैः ४३ ॥ इतिश्रीमहाभारते भीष्मपर्वणि भीष्मवधप०
संकुलयुद्धेएकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ संजयउवाच ॥ शिखंडीसहमत्स्येनविराटेनविशांपते ॥ भीष्ममाशुमहेष्वासमाससादसुदुर्जयम् १
द्रोणंकृपंविकर्णंचमहेष्वासंमहाबलम् ॥ राज्ञश्चान्यान्रणेशूरान्बहूनार्च्छद्धनंजयः २ सैंधवंचमहेष्वासंसामात्यंसहबंधुभिः ॥ प्राच्यांश्चदाक्षिणात्यांश्चभूमि
पान्भूमिपर्षभ ३ पुत्रंचतेमहेष्वासंदुर्योधनममर्षणम् ॥ दुःसहंचैवसमरेभीमसेनोऽभ्यवर्तत ४ सहदेवस्तुशकुनिमुलूकंचमहारथम् ॥ पितापुत्रौमहेष्वासावभ्य
वर्ततदुर्जयौ ५ युधिष्ठिरोमहाराजगजानीकंमहारथः ॥ समवर्ततसंग्रामेपुत्रेणनिकृतस्तव ६ माद्रीपुत्रस्तुनकुलःशूरसंक्रंदनोयुधि ॥ त्रिगर्तानांबलैःसार्धंसम
सज्जतपांडवः ७ अभ्यवर्ततसंक्रुद्धाःसमरेशाल्वकेकयान् ॥ सात्यकिश्चेकितानश्चसौभद्रश्चमहारथः ८ धृष्टकेतुश्चसमरेराक्षसश्चघटोत्कचः ॥ पुत्राणांतेरथा
नीकंप्रत्युद्याताःसुदुर्जयाः ९ सेनापतिरमेयात्माधृष्टद्युम्नोमहाबलः ॥ द्रोणेनसमरेराजन्समियायोग्रकर्मणा १० एवमेतेमहेष्वासास्तावकाःपांडवैःसह ॥ समे
त्यसमरेशूराःसंप्रहारंप्रचक्रिरे ११ मध्यंदिनगतेसूर्येनभस्याकुलतांगते ॥ कुरवःपांडवेयाश्चनिजघ्नुरितरेतरम् १२ ध्वजिनोहेमचित्रांगाविचरंतोरणाजिरे ॥
सपताकारथारेजुर्वैयाघ्रपरिवारणाः १३ समेतानांचसमरेजिगीषूणांपरस्परम् ॥ बभूवतुमुलःशब्दःसिंहानामिवनर्दताम् १४ तत्राद्भुतमपश्यामसंप्रहारंसुदा
रुणम् ॥ यदकुर्वन्रणेशूराःसृंजयाःकुरुभिःसह १५ नैवखंनदिशोराजन्नसूर्यंशत्रुतापन ॥ विदिशोवापिपश्यामःशरैर्मुक्तैःसमंततः १६ शक्तीनांविमलाग्राणां
तोमराणांतथाऽस्यताम् ॥ निस्त्रिंशानांचपीतानांनीलोत्पलनिभाःप्रभाः १७ कवचानांविचित्राणांभूषणानांप्रभास्तथा ॥ खंदिशःप्रदिशश्चैवभासयामासुरोजसा
१८ वपुर्भिश्चनरेन्द्राणांचंद्रसूर्यसमप्रभैः ॥ विरराजतदाराजंस्तत्रतत्ररणांगणम् १९

तमोऽध्यायः ॥ ७१ ॥ शिखंडीति १। २। ३। ४। ५। ६ शूरसंक्रंदनःशूराणांरोदकः शूरेंद्रोवा ७। ८। ९। १०। ११। १२। १३। १४। १५। १६। १७ ओजसास्वप्रभावेण १८। १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ ॥ इति भी० नी० भा० द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ॥ विराटइति १ । २ । ३ । ४ । ५



रथमेवानरव्याघ्रा ममायांतश्चसंयुगे ॥ विरेजुःसमरेगजन्ग्रहाइवनभस्तले २० भीष्मस्तुरथिनांश्रेष्ठोभीमसेनंमहाबलं ॥ अवारयतसंक्रुद्धःसर्वसैन्यस्यपश्यतः २१
ततोभीष्मविनिर्मुक्तारुक्मपुंखाःशिलाशिताः ॥ अभ्यघ्नन्समरेभीमंतैलधौताःसुतेजनाः २२ तस्यशक्तिंमहावेगांभीमसेनोमहाबलः ॥ क्रुद्धाशीविषसंकाशांप्रेषयामासभार
त २३ तामापतंतींसहसारुक्मदंडांदुरासदाम् ॥ चिच्छेदसमरेभीष्मःशरैःसन्नतपर्वभिः २४ ततोऽपरेणभल्लेनपीतेननिशितेनच ॥ कार्मुकंभीमसेनस्यद्विधाचिच्छे
दभारत २५ सात्यकिस्तुततस्तूर्णंभीष्ममासाद्यसंयुगे ॥ आकर्णप्रहितैस्तीक्ष्णैर्निशितैस्तिग्मतेजनैः २६ शरैर्बहुभिरानर्च्छत्पितरंतेजनेश्वर ॥ ततःसंधायवैतीक्ष्णंशरंप
रमदारुणम् २७ वार्ष्णेयस्यरथाद्भीष्मःपातयामाससारथिम् ॥ तस्याश्वाःप्रद्रुताराजन्निहतेरथसारथौ २८ तेनतेनैवधावंतिमनोमारुतरंहसः ॥ ततःसर्वस्यसैन्यस्यनिः
स्वनस्तुमुलोऽभवत् २९ हाहाकारश्चसंजज्ञेपांडवानांमहात्मनाम् ॥ अभ्यद्रवतगृह्णीतहयान्यच्छतधावत ३० इत्यासीत्तुमुलःशब्दोयुयुधानरथंप्रति ॥ एतस्मिन्नेव
कालेतुभीष्मःशांतनवस्तदा ३१ न्यहनत्पांडवींसेनामासुरीमिववृत्रहा ॥ तेवध्यमानाभीष्मेणपंचालाःसोमकैःसह ३२ स्थिरांयुद्धेमतिंकृत्वाभीष्ममेवाभिदुद्रुवुः ॥
धृष्टद्युम्नमुखाश्चापिपार्थाःशांतनवंरणे ३३ अभ्यधावन्जिगीषंतस्तवपुत्रस्यवाहिनीम् ॥ तथैवकौरवाराजन्भीष्मद्रोणपुरोगमाः ३४ अभ्यधावंतवेगेनततोयुद्धमवर्तत
३५ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० पंचमदिवसयुद्धेद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ संजयउवाच ॥ विराटोऽथत्रिभिर्बाणैर्भीष्ममार्च्छन्महारथम् ॥ विव्याध
तुरगांश्चास्यत्रिभिर्बाणैर्महारथः १ तंप्रत्यविध्यद्दशभिर्भीष्मःशांतनवःशरैः ॥ रुक्मपुंखैर्महेष्वासःकृतहस्तोमहाबलः २ द्रौणिर्गांडीवधन्वानंभीमधन्वामहारथः ॥
अविध्यदिषुभिःषड्भिर्दृढहस्तःस्तनांतरे ३ कार्मुकंतस्यचिच्छेदफाल्गुनःपरवीरहा ॥ अविध्यच्चभृशंतीक्ष्णैःपत्रिभिःशत्रुकर्शनः ४ सोन्यत्कार्मुकमादायवेगवान्क्रोधमूर्छितः ॥
अमृष्यमाणःपार्थेनकार्मुकच्छेदमाहवे ५ अविध्यत्फाल्गुनंराजन्नवत्यानिशितैःशरैः ॥ वासुदेवंचसप्तत्याविव्याधपरमेषुभिः ६ ततःक्रोधाभिताम्राक्षःकृष्णेनसहफाल्गुनः ॥
दीर्घमुष्णंचनिःश्वस्यचिंतयित्वापुनःपुनः ७ धनुःप्रपीड्यवामेनकरेणामित्रकर्शनः ॥ गांडीवधन्वासंक्रुद्धःशितान्सन्नतपर्वणः ८ जीवितांतकरान्घोरान्समादत्तशि
लीमुखान् ॥ तैस्तूर्णंसमरेविध्यद्द्रौणिंबलवतांवरः ९ तस्यतेकवचंभित्वापपुःशोणितमाहवे ॥ नविव्यथेचनिर्भिन्नोद्रौणिर्गांडीवधन्वना १० तथैवचशरान्द्रौणिःप्रवि
मुंचन्नविह्वलः ॥ तस्थौससमरेराजंस्त्रातुमिच्छन्महाव्रतम् ११ तस्यतत्सुमहत्कर्मशशंसुःकुरुसत्तमाः ॥ यत्कृष्णाभ्यांसमेताभ्यामभ्यापततसंयुगे १२ सहिनित्यमनी
केषुयुध्यतेऽभयमास्थितः ॥ अस्त्रग्रामंससंहारंद्रोणात्प्राप्यसुदुर्लभम् १३

६ । ७ । ८ । ९ । १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ सात्वतीपुत्रंअभिमन्युम्

ममैषआचार्यसुतोद्रोणस्यापिप्रियःसुतः ॥ ब्राह्मणश्चविशेषेणमाननीयोममेतिच १४ समास्थायमतिंवीरोबीभत्सुःशत्रुतापनः ॥ कृपांचक्रेरथश्रेष्ठोभारद्धाजसुतं
प्रति १५ द्रौणिंत्यक्त्वाततोयुद्धेकौन्तेयःश्वेतवाहनः ॥ युयुधेतावकान्निघ्नंस्त्वरमाणःपराक्रमी १६ दुर्योधनस्तुदशभिर्गार्ध्रपत्रैःशिलाशितैः ॥ भीमसेनंमहेष्वासंरुक्म
पुंखैःसमार्पयत् १७ भीमसेनःसुसंक्रुद्धःपरासुकरणंदृढम् ॥ चित्रंकार्मुकमादत्तशरांश्चनिशितान्दश १८ आकर्णप्रहितैस्तीक्ष्णैर्वेगवद्भिरजिह्मगैः ॥ अविध्यत्तूर्णम
व्यग्रःकुरुराजंमहोरसि १९ तस्यकांचनसूत्रस्थःशरैःसंछादितोमणिः ॥ रराजोरसिखेसूर्योग्रहैरिवसमावृतः २० पुत्रस्तुतवतेजस्वीभीमसेनेनताडितः ॥ नामृष्यतय
थानागस्तलशब्दंमदोत्कटः २१ ततःशरैर्महाराजरुक्मपुंखैःशिलाशितैः ॥ भीमंविव्याधसंक्रुद्धस्त्रासयानोवरूथिनीम् २२ तौयुध्यमानौसमरेभृशमन्योन्यविक्षतौ ॥
पुत्रौतेदेवसंकाशौव्यरोचेतांमहाबलौ २३ चित्रसेनंनरव्याघ्रंसौभद्रःपरवीरहा ॥ अविध्यद्दशभिर्बाणैःपुरुमित्रंचसप्तभिः २४ सत्यव्रतंचसप्तत्याविद्धाशक्रसमोयुधि ॥
नृत्यन्निवरणेवीरआर्तिनःसमजीजनत् २५ तंप्रत्यविध्यद्दशभिश्चित्रसेनःशिलीमुखैः ॥ सत्यव्रतश्चनवभिःपुरुमित्रश्चसप्तभिः २६ सविद्धोविक्षरन्रक्तंशत्रुसंवारणंम
हत् ॥ चिच्छेदचित्रसेनस्यचित्रंकार्मुकमार्जुनिः २७ भित्त्वाचास्यतनुत्राणंशरेणोरस्यताडयत् ॥ ततस्तेतावकावीराराजपुत्रामहारथाः २८ समेत्ययुधिसंरब्धाविव्य
धुर्निशितैःशरैः ॥ तांश्चसर्वान्शरैस्तीक्ष्णैर्जघानपरमास्त्रवित् २९ तस्यदृष्ट्वातुतत्कर्मपरिवव्रुःसुतास्तव ॥ दहंतंसमरेसैन्यंवनेकक्षंयथोल्बणम् ३० अपेतशिशिरेकाले
समिद्धमिवपावकम् ॥ अत्यरोचतसौभद्रस्तवसैन्यानिनाशयन् ३१ तत्तस्यचरितंदृष्ट्वापौत्रस्तवविशांपते ॥ लक्ष्मणोऽभ्यपतत्तूर्णंसात्वतीपुत्रमाहवे ३२ अभिमन्यु
स्तुसंक्रुद्धोलक्ष्मणंशुभलक्षणम् ॥ विव्याधनिशितैःषड्भिःसारथिंचत्रिभिःशरैः ३३ तथैवलक्ष्मणोराजन्सौभद्रंनिशितैःशरैः ॥ अविध्यतमहाराजतदद्भुतमिवाभवत्
३४ तस्याश्वांश्चतुरोहत्वासारथिंचमहाबलः ॥ अभ्यद्रवतसौभद्रोलक्ष्मणंनिशितैःशरैः ३५ हताश्वेतुरथेतिष्ठंल्लक्ष्मणःपरवीरहा ॥ शक्तिंचिक्षेपसंक्रुद्धःसौभद्रस्यरथं
प्रति ३६ तामापतन्तींसहसाघोररूपांदुरासदाम् ॥ अभिमन्युःशरैस्तीक्ष्णैश्चिच्छेदभुजगोपमाम् ३७ ततःस्वरथमारोप्यलक्ष्मणंगौतमस्तदा ॥ अपोवाहरथेनाजौ
सर्वसैन्यस्यपश्यतः ३८ ततःसमाकुलेतस्मिन्वर्तमानेमहाभये ॥ अभ्यद्रवन्जिघांसंतःपरस्परवधैषिणः ३९ तावकाश्चमहेष्वासाःपांडवाश्चमहारथाः ॥ जुह्वंतःसमरे
प्राणान्निजघ्नुरितरेतरम् ४० मुक्तकेशाविकवचाविरथाश्छिन्नकार्मुकाः ॥ बाहुभिःसमयुध्यंतसृंजयाःकुरुभिःसह ४१ ततोभीष्मोमहाबाहुःपांडवानांमहात्मनाम् ॥
सेनांजघानसंक्रुद्धोदिव्यैरस्त्रैर्महाबलः ४२

३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

हतैरश्वैर्गजैस्तत्रनरैरश्वैश्चपातितैः ॥ रथिभिःसादिभिश्चैवसमास्तीर्यतमेदिनी ४३ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भीष्मवधपर्वणिद्वंद्वयुद्धे त्रिसप्ततितमोऽध्यायः अ०
॥ १०४ ॥ ॥ ७३ ॥ ॥ संजयउवाच ॥ अथराजन्महाबाहुःसात्यकिर्युद्धदुर्मदः ॥ विकृष्यचापंसमरेभारसाहमनुत्तमम् १ प्रामुंचत्पुंखसंयुक्तान्शरानाशीविषोपमान् ॥
प्रगाढंलघुचित्रंचदर्शयन्हस्तलाघवम् २ तस्यविक्षिपतश्चापंशरानन्यांश्चमुंचतः ॥ आददानस्यभूयश्चसंदधानस्यचापरान् ३ क्षिपतश्चपरांस्तस्यरणेशत्रून्विनिघ्नतः ॥ ७४
ददृशेरूपमत्यर्थंमेघस्येवप्रवर्षतः ४ तमुदीर्यंतमालोक्यराजादुर्योधनस्ततः ॥ रथानामयुतंतस्यप्रेषयामासभारत ५ तांस्तुसर्वान्महेष्वासान्सात्यकिःसत्यविक्रमः ॥ जघा
नपरमेष्वासोदिव्येनास्त्रेणवीर्यवान् ६ सकृत्वादारुणंकर्मप्रगृहीतशरासनः ॥ आससादततोवीरोभूरिश्रवसमाहवे ७ सहिसंदृश्यसेनांतेयुयुधानेनपातिताम् ॥ अभ्य
धावतसंक्रुद्धःकुरूणांकीर्तिवर्धनः ८ इंद्रायुधसवर्णंतुविस्फार्यसुमहद्धनुः ॥ सृष्टवान्वज्रसंकाशान्शरानाशीविषोपमान् ९ सहस्रशोमहाराजदर्शयन्पाणिलाघवम् ॥
शरांस्तान्मृत्युसंस्पर्शान्सात्यकेश्चपदानुगाः १० नविषेहुस्तदाराजन्दुद्रुवुस्तेसमंततः ॥ विहायसात्यकिंराजन्समरेयुद्धदुर्मदम् ११ तंदृष्ट्वायुयुधानस्यसुतादशमहा
बलाः ॥ महारथाःसमाख्याताश्चित्रवर्मायुधध्वजाः १२ समासाद्यमहेष्वासंभूरिश्रवसमाहवे ॥ ऊचुःसर्वेसुसंरब्धायूपकेतुंमहारणे १३ भोभोकौरवदायादसहास्मा
भिर्महाबल ॥ एहियुध्यस्वसंग्रामेसमस्तैःपृथगेववा १४ अस्मान्वात्वंपराजित्ययशःप्राप्नुहिसंयुगे ॥ वयंवात्वांपराजित्यप्रीतिंधास्यामहेपितुः १५ एवमुक्तस्तदाशूरै
स्तानुवाचमहाबलः ॥ वीर्यश्लाघीनरश्रेष्ठस्तान्दृष्ट्वासमवस्थितान् १६ साध्विदंकथ्यतेवीरायद्येवंमतिरद्यवः ॥ युध्यध्वंसहितायत्तानिहनिष्यामिवोरणे १७ एवमुक्ता
महेष्वासास्तेवीराःक्षिप्रकारिणः ॥ महताशरवर्षेणअभ्यधावन्नरिंदमम् १८ सोऽपराह्णेमहाराजसंग्रामस्तुमुलोऽभवत् ॥ एकस्यचबहूनांचसमेतानांरणाजिरे १९ तमे
कंरथिनांश्रेष्ठंशरैस्तेसमवाकिरन् ॥ प्रावृषीवयथामेरुंसिषिचुर्जलदानृप २० तैस्तुमुक्तान्शरान्घोरान्यमदंडाशनिप्रभान् ॥ असंप्राप्तानसंभ्रांतश्चिच्छेदाशुमहारथः
२१ तत्राद्भुतमपश्यामसौमदत्तेःपराक्रमम् ॥ यदेकोबहुभिर्युद्धेसमसज्जदभीतवत् २२ विसृज्यशरवृष्टिंतांदशराजन्महारथाः ॥ परिवार्यमहाबाहुंनिहंतुमुपचक्रमुः
२३ सौमदत्तिस्ततःक्रुद्धस्तेषांचापानिभारत ॥ चिच्छेदसमरेराजन्युध्यमानोमहारथैः २४ अथैषांछिन्नधनुषांशरैःसन्नतपर्वभिः ॥ चिच्छेदसमरेराजन्शिरांसिभरतर्षभ
२५ तेहतान्यपतन्राजन्वज्रभग्नाइवद्रुमाः ॥ तान्दृष्ट्वानिहतान्वीरोरणेपुत्रान्महाबलान् २६ वार्ष्णेयोविनदन्राजन्भूरिश्रवसमभ्ययात् ॥ रथंरथेनसमरेपीडयित्वाम
हाबलौ २७ तावन्योन्यंहिसमरेनिहत्यरथवाजिनः ॥ विरथावभिवल्गंतौसमेयातांमहारथौ २८ ॥ १०४ ॥

प्रगृहीतमहाखड्गौतौचर्मवरधारिणौ ॥ शुशुभातेनरव्याघ्रौयुद्धायसमवस्थितौ २९ ततःसात्यकिमभ्येत्यनिस्त्रिंशवरधारिणम् ॥ भीमसेनस्त्वरन्राजन्रथमारोपयत्तदा
३० तवापितनयोराजन्भूरिश्रवसमाहवे ॥ आरोपयद्रथंतूर्णंपश्यतांसर्वधन्विनाम् ३१ तस्मिंस्तथावर्तमानेरणेभीष्मंमहारथम् ॥ अयोधयंतसंरब्धाःपांडवाभरतर्षभ
३२ लोहितायतिचादित्येत्वरमाणोधनंजयः ॥ पंचविंशतिसाहस्रान्निजघानमहारथान् ३३ तेहिदुर्योधनादिष्टास्तदापार्थनिबर्हणे ॥ संप्राप्यैवगतानाशंशलभाइव
पावकम् ३४ ततोमत्स्याःकेकयाश्चधनुर्वेदविशारदाः ॥ परिवव्रुस्तदापार्थंसहपुत्रंमहारथम् ३५ एतस्मिन्नेवकालेतुसूर्येऽस्तमुपगच्छति ॥ सर्वेषांचैवसैन्यानांप्रमोहः
समजायत ३६ अवहारंततश्चक्रेपितादेवव्रतस्तव ॥ संध्याकालेमहाराजसैन्यानांश्रांतवाहनः ३७ पांडवानांकुरूणांचपरस्परसमागमे ॥ तेसेनेभृशसंविग्नेययतुःस्वंनि
वेशनम् ३८ ततःस्वशिबिरंगत्वान्यविशंस्तत्रभारत ॥ पांडवाःसृंजयैःसार्धंकुरवश्चयथाविधि ३९ ॥ इतिश्रीमहाभारतेभीष्मप० भीष्मवधप० पंचमदिवसावहारेचतुः
सप्ततितमोऽध्यायः ॥ ७४ ॥ संजयउवाच ॥ तेविश्रम्यततोराजन्सहिताःकुरुपांडवाः ॥ व्यतीतायांतुशर्वर्यांपुनर्युद्धायनिर्ययुः १ तत्रशब्दोमहानासीत्तवतेषांचभा
रत ॥ युज्यतांरथमुख्यानांकल्प्यतांचैवदंतिनाम् २ संनह्यतांपदातीनांहयानांचैवभारत ॥ शंखदुंदुभिनादश्चतुमुलःसर्वतोऽभवत् ३ ततोयुधिष्ठिरोराजाधृष्टद्युम्नमभाषत
व्यूहंव्यूहमहाबाहोमकरंशत्रुनाशनम् ४ एवमुक्तस्तुपार्थेनधृष्टद्युम्नोमहारथः ॥ व्यादिदेशमहाराजरथिनोरथिनांवरः ५ शिरोऽभूद्द्रुपदस्तस्यपांडवश्चधनंजयः ॥ चक्षु
षीसहदेवश्चनकुलश्चमहारथः ६ तुंडमासीन्महाराजभीमसेनोमहाबलः ॥ सौभद्रोद्रौपदेयाश्चराक्षसश्चघटोत्कचः ७ सात्यकिर्धर्मराजश्चव्यूहग्रीवांसमास्थिताः ॥ पृष्ठमासी
न्महाराजविराटोवाहिनीपतिः ८ धृष्टद्युम्नेनसहितोमहत्यासेनयावृतः ॥ केकयाभ्रातरःपंचवामपार्श्वंसमाश्रिताः ९ धृष्टकेतुर्नरव्याघ्रश्चेकितानश्चवीर्यवान् ॥ दक्षिणंप
क्षमाश्रित्यस्थितौव्यूहस्यरक्षणे १० पादयोस्तुमहाराजस्थितःश्रीमान्महारथः ॥ कुंतिभोजःशतानीकोमहत्यासेनयावृतः ११ शिखंडीतुमहेष्वासःसोमकैःसंवृतो
बली ॥ इरावांश्चततःपुच्छेमकरस्यव्यवस्थितौ १२ एवमेतंमहाव्यूहंव्यूह्यभारतपांडवाः ॥ सूर्योदयेमहाराजपुनर्युद्धायदंशिताः १३ कौरवानभ्ययुस्तूर्णंहस्त्यश्वरथ
पत्तिभिः ॥ समुच्छ्रितैर्ध्वजैश्छत्रैःशस्त्रैश्चविमलैःशितैः १४ व्यूढंदृष्ट्वातुतत्सैन्यंपितादेवव्रतस्तव ॥ क्रौंचेनमहताराजन्प्रत्यव्यूहतवाहिनीम् १५ तस्यतुंडेमहेष्वासोभारद्वा
जोव्यरोचत ॥ अश्वत्थामाकृपश्चैवचक्षुरासीन्नरेश्वर १६ कृतवर्मातुसहितःकांबोजवरबाह्लिकैः ॥ शिरस्यासीन्नरश्रेष्ठःश्रेष्ठःसर्वधनुष्मताम् १७ ग्रीवायांशूरसेनश्चतव
पुत्रश्चमारिष ॥ दुर्योधनोमहाराजराजभिर्बहुभिर्वृतः १८ प्राग्ज्योतिषस्तुसहितोमद्रसौवीरकेकयैः ॥ उरस्यभून्नरश्रेष्ठमहत्यासेनयावृतः १९

२०।२१।२२।२३।२४।२५।२६।२७।२८।२९। ३०।३१।३२।३३।३४।३५।३६।३७ इति भी० नी० भा० पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ एवमिति १

स्वसेनयाचसहितःसुशर्माप्रस्थलाधिपः ॥ वामपक्षंसमाश्रित्यदंशितःसमवस्थितः २० तुषारायवनाश्चैवशकाश्चसहचूचुपैः ॥ दक्षिणंपक्षमाश्रित्यस्थिताव्यूहस्यभारत
२१ श्रुतायुश्चशतायुश्चसौमदत्तिश्चमारिष ॥ व्यूहस्यजघनेतस्थूरक्षमाणाःपरस्परम् २२ ततोयुद्धायसंजग्मुःपांडवाःकौरवैःसह ॥ सूर्योदयेमहाराजततोयुद्धमभून्महत्
२३ प्रतीयूरथिनोनागान्नागांश्चरथिनोययुः ॥ हयारोहान्रथारोहारथिनश्चापिसादिनः २४ सादिनश्चहयान्राजन्रथिनश्चमहारणे ॥ हस्त्यारोहान्हयारोहारथिनःसादि
नस्तथा २५ रथिनःपत्तिभिःसार्धंसादिनश्चापिपत्तिभिः ॥ अन्योन्यंसमरेराजन्प्रत्यधावन्नमर्षिताः २६ भीमसेनार्जुनयमैर्गुप्ताचान्यैर्महारथैः ॥ शुशुभेपांडवीसेना
नक्षत्रैरिवशर्वरी २७ तथाभीष्मकृपद्रोणशल्यदुर्योधनादिभिः ॥ तवापिचबभौसेनाग्रहैर्द्यौरिवसंवृता २८ भीमसेनस्तुकौन्तेयोद्रोणंदृष्ट्वापराक्रमी ॥ अभ्ययाज्जवनैरश्वै
र्भारद्वाजस्यवाहिनीम् २९ द्रोणस्तुसमरेक्रुद्धोभीमंनवभिरायसैः ॥ विव्याधसमरश्लाघीमर्माण्युद्दिश्यवीर्यवान् ३० दृढाहतस्ततोभीमोभारद्वाजस्यसंयुगे ॥ सारथिंप्रे
षयामासयमस्यसदनंप्रति ३१ ससंगृह्यस्वयंवाहान्भारद्वाजःप्रतापवान् ॥ व्यधमत्पांडवींसेनांतूलराशिमिवानलः ३२ तेवध्यमानाद्रोणेनभीष्मेणचनरोत्तमाः ॥ सृंज
याःकेकयैःसार्धंपलायनपराभवन् ३३ तथैवतावकंसैन्यंभीमार्जुनपरिक्षतम् ॥ मुह्यतेतत्रतत्रैवसमदेववरांगना ३४ अभिद्येतांततोव्यूहौतस्मिन्वीरवरक्षये ॥ आसी
द्व्यतिकरोघोरस्तवतेषांचभारत ३५ तदद्भुतमपश्यामतावकानांपरैःसह ॥ एकायनगताःसर्वेयदयुध्यंतभारत ३६ प्रतिसंवार्यचास्त्राणितेऽन्योन्यस्यविशांपते ॥ युयुधुः
पांडवाश्चैवकौरवाश्चमहाबलाः ३७ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवध० षष्ठदिवसयुद्धारंभेपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ धृतराष्ट्रउवाच ॥ एवंबहुगुणं
सैन्यमेवंबहुविधंपुरा ॥ व्यूढमेवंयथाशास्त्रममोघंचैवसंजय १ हृष्टमस्माकमत्यंतमभिकामंचनःसदा ॥ प्रह्वमव्यसनोपेतंपुरस्ताद्दृष्टविक्रमम् २ नातिवृद्धमबालंचनकृ
शंनचपीवरम् ॥ लघुवृत्तायतप्रायंसारयोधमनामयम् ३ आत्तसन्नाहशस्त्रंचबहुशस्त्रपरिग्रहम् ॥ असियुद्धेनियुद्धेचगदायुद्धेचकोविदम् ४ प्रासर्ष्टितोमरेष्वाजौपरिघे
ष्वायसेषुच ॥ भिंदिपालेषुशक्तीषुमुसलेषुचसर्वशः ५ कंपनेषुचचापेषुकणपेषुचसर्वशः ॥ क्षेपणीयेषुचित्रेषुमुष्टियुद्धेषुचक्षमम् ६ अपरोक्षंचविद्यासुव्यायामेचकृत
श्रमम् ॥ शस्त्रग्रहणविद्यासुसर्वासुपरिनिष्ठितम् ७ आरोहेपर्यवस्कंदेसरणेसांतरप्लुते ॥ सम्यक्प्रहरणेयानेव्यपयानेचकोविदम् ८ नागाश्वरथयानेषुबहुशःसुपरीक्षितम् ॥
परीक्ष्यचयथान्यायंवेतनेनोपपादितम् ९ नगोष्ठ्यानोपकारेणनचबंधुनिमित्ततः ॥ नसौहृदबलैर्वापिनाकुलीनपरिग्रहैः १० समृद्धजनमार्यंचतुष्टसंबंधिबांधवम् ॥
कृतोपकारभूयिष्ठंयशस्विचमनस्विच ११

नः अस्मान् अभिकामंआकांक्षमाणं प्रह्वंप्रणतं २ लघुवृत्तंशीकाग्र्यरि आयतप्रायंप्रांशुबहुलं ३।४।५।६। ७ आरोहेहस्त्यादीनां पर्यवस्कंदेहस्त्यादिभ्योऽवतरणे ८।९।१० मनस्विसाहंकारं ११

स्वजनैस्तुनरैर्मुख्यैर्बहुशोदृष्टकर्मभिः ॥ लोकपालोपमैस्तातपालितंलोकविश्रुतम् १२ बहुभिःक्षत्रियैर्गुप्तंपृथिव्यांलोकसंमतैः ॥ अस्मानभिगतैःकामात्सबलैःसप दानुगैः १३ महोदधिमिवापूर्णमापगाभिःसमंततः ॥ अपक्षैःपक्षिसंकाशैरथैर्नागैश्वसंवृतम् १४ नानायोधजलंभीमंवाहनोर्मितरंगिणम् ॥ क्षेपण्यसिगदाशक्तिशर प्रासससमाकुलम् १५ ध्वजभूषणसंबाधंरत्नपट्टसुसंचितम् ॥ परिधावद्भिरश्वैश्ववायुवेगविकंपितम् १६ अपारमिवगर्जन्तंसागरप्रतिमंमहत् ॥ द्रोणभीष्माभिसंगुप्तंगुप्तं चकृतवर्मणा १७ कृपदुःशासनाभ्यांचजयद्रथमुखैस्तथा ॥ भगदत्तविकर्णाभ्यांद्रौणिसौबलबाल्हिकैः १८ गुप्तंप्रवीरैर्लोकैश्वसारवद्भिर्महात्मभिः ॥ यदहन्यतसंग्रामे दैवमत्रपुरातनम् १९ नैतादृशंसमुद्योगंदृष्टवंतोहिमानुषाः ॥ ऋषयोवामहाभागाःपुराणाभुविसंजय २० ईदृशोऽपिबलौघस्तुसंयुक्तःशस्त्रसंपदा ॥ बध्यतेयत्रसंग्रामे किमन्यद्भागधेयतः २१ विपरीतमिदंसर्वंप्रतिभातिहिसंजय ॥ यत्रेदृशंबलंघोरंपांडवान्नातरद्रणे २२ पांडवार्थायनियतंदेवास्तत्रसमागताः ॥ युध्यंतेमामकंसैन्यंयथा वध्यतसंजय २३ उक्तोहिविदुरेणाहंहितंपथ्यंचनित्यशः ॥ नचजग्राहतन्मंदःपुत्रोदुर्योधनोमम २४ तस्यमन्येमतिःपूर्वंसर्वज्ञस्यमहात्मनः ॥ आसीद्यथागतंतातये नदृष्टमिदंपुरा २५ अथवाभाव्यमेवंहिसंजयैतेनसर्वथा ॥ पुराधात्रायथासृष्टंतत्तथानैतदन्यथा २६ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० धृतराष्ट्रचिंतायांषट्सप्त तितमोऽध्यायः ॥ ७६ ॥ ॥ संजयउवाच ॥ आत्मदोषात्त्वयाराजन्प्राप्तंव्यसनमीदृशम् ॥ नहिदुर्योधनस्तानिपश्यतेभरतर्षभ १ यानित्वंदृष्टवान्राजन् धर्मसंकरकारिते ॥ तवदोषात्पुरावृत्तंद्यूतमेवविशांपते २ तवदोषेणयुद्धंचप्रवृत्तंसहपांडवैः ॥ त्वमेवाद्यफलंभुंक्ष्वकृत्वाकिल्बिषमात्मना ३ आत्मनैवकृतंकर्मआत्मनै वोपभुज्यते ॥ इहचप्रेत्यवाराजंस्त्वयाप्राप्तंयथातथम् ४ तस्माद्राजन्स्थिरोभूत्वाप्राप्येदंव्यसनंमहत् ॥ शृणुयुद्धंयथावृत्तंशंसतोमेनराधिप ५ भीमसेनःसुनिशितैर्बा णैर्भित्वामहाचमूम् ॥ आससादततोवीरःसर्वान्दुर्योधनानुजान् ६ दुःशासनंदुर्विषहंदुःसहंदुर्मदंजयम् ॥ जयत्सेनंविकर्णंचचित्रसेनंसुदर्शनम् ७ चारुचित्रंसुवर्माणं दुष्कर्णंकर्णमेवच ॥ एतांश्चान्यांश्वसुबहून्समीपस्थान्महारथान् ८ धार्तराष्ट्रान्सुसंक्रुद्धान्दृष्ट्वाभीमोमहारथः ॥ भीष्मेणसमरेगुप्तांप्रविवेशमहाचमूम् ९ अथालो क्यप्रविष्टंतमूचुस्तेसर्वएवतु ॥ जीवग्राहंनिगृह्णीमोवयमेनंनराधिपाः १० सतैःपरिवृतःपार्थोभ्रातृभिःकृतनिश्चयैः ॥ प्रजासंहरणेसूर्यःक्रूरैरिवमहाग्रहैः ११ संप्राप्यमध्यं सैन्यस्यनभीःपांडवमाविशत् ॥ यथादेवासुरेयुद्धेमहेन्द्रंप्राप्यदानवान् १२ ततःशतसहस्राणिरथिनांसर्वशःप्रभो ॥ उद्यतानिशरैस्तीव्रैस्तमेकंपरिवव्रिरे १३ सते षांप्रवरान्योधान्हस्त्यश्वरथसादिनः ॥ जघानसमरेशूरोधार्तराष्ट्रानचिंतयन् १४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३

तेषांव्यवसितंज्ञात्वाभीमसेनोजिघृक्षताम् ॥ समस्तानांवधेराजन्मतिंचक्रेमहामनाः १५ ततोरथंसमुत्सृज्यगदामादायपांडवः ॥ जघानधार्तराष्ट्राणांतंबलौघंमहार्णवम्
१६ भीमसेनेप्रविष्टेतुधृष्टद्युम्नोऽपिपार्षतः ॥ द्रोणमुत्सृज्यतरसाप्रययौयत्रसौबलः १७ निवार्यमहतींसेनांतावकानांनरर्षभः ॥ आससादरथंशून्यंभीमसेनस्यसंयुगे
१८ दृष्ट्वाविशोकंसमरेभीमसेनस्यसारथिम् ॥ धृष्टद्युम्नोमहाराजदुर्मनागतचेतनः १९ अपृच्छद्बाष्पसंरुद्धोनिःश्वसन्वाचमीरयन् ॥ ममप्राणैःप्रियतमःक्वभीमइतिदुः
खितः २० विशोकस्तमुवाचेदंधृष्टद्युम्नंकृतांजलिः ॥ संस्थाप्यमामिहबलीपांडवेयःपराक्रमी २१ प्रविष्टोधार्तराष्ट्राणामेतद्बलमहार्णवम् ॥ मामुक्त्वापुरुषव्याघ्रःप्री
तियुक्तमिदंवचः २२ प्रतिपालयमांसूतनियम्याश्वान्मुहूर्तकम् ॥ यावदेतान्निहन्म्यद्ययइमेमद्वधोद्यताः २३ ततोदृष्ट्वाप्रधावंतंगदाहस्तंमहाबलम् ॥ सर्वेषामेवसैन्या
नांसंहर्षःसमजायत २४ तस्मिन्सुतुमुलेयुद्धेवर्तमानेभयानके ॥ भित्वाराजन्महाव्यूहंप्रविवेशवृकोदरः २५ विशोकस्यवचश्रुत्वाधृष्टद्युम्नोऽथपार्षतः ॥ प्रत्युवाचततः
सूतंरणमध्येमहाबलः २६ नहिमेजीवितेनापिविद्यतेऽद्यप्रयोजनम् ॥ भीमसेनंरणेहित्वास्नेहमुत्सृज्यपांडवैः २७ यदियामिविनाभीमंकिंमांक्षत्रंवदिष्यति ॥ ए
कायनगतेभीमेमयिचावस्थितेयुधि २८ अस्वस्तितस्यकुर्वंतिदेवाःशक्रपुरोगमाः ॥ यःसहायान्परित्यज्यस्वस्तिमानाव्रजेद्गृहम् २९ ममभीमःसखाचैवसंबंधीचमहा
बलः ॥ भक्तोस्मान्भक्तिमांश्चाहंतमप्यरिनिषूदनम् ३० सोहंतत्रगमिष्यामियत्रयातोवृकोदरः ॥ निघ्नंतंमांरिपून्पश्यदानवानिववासवम् ३१ एवमुक्त्वाततोवीरोययौमध्ये
नभारत ॥ भीमसेनस्यमार्गेषुगदाप्रमथितैर्गजैः ३२ सददर्शतदाभीमंदहंतंरिपुवाहिनीम् ॥ वातोवृक्षानिवबलात्प्रभंजंतंरणेरिपून् ३३ तेवध्यमानाःसमरेरथिनःसादिनस्त
था ॥ पादातादंतिनश्चैवचक्रुरार्तस्वरंमहत् ३४ हाहाकारश्चसंजज्ञेतवसैन्यस्यमारिष ॥ वध्यतोभीमसेनेनकृतिनाचित्रयोधिना ३५ ततःकृतास्त्रास्तेसर्वेपरिवार्यवृकोदरम्
॥ अभीताःसमवर्तंतशस्त्रवृष्ट्यापरंतप ३६ अभिद्रुतंशस्त्रभृतांवरिष्ठंसमंततःपांडवंलोकवीरः ॥ सैन्येनघोरेणसुसंहितेनदृष्ट्वाबलीपार्षतोभीमसेनम् ३७ अथोपगच्छच्छर
विक्षतांगंपदातिनंक्रोधविषंवमंतम् ॥ आश्वासयन्पार्षतोभीमसेनंगदाहस्तंकालमिवांतकाले ३८ विशल्यमेनंचचकारतूर्णमारोपयच्चात्मरथेमहात्मा ॥ भृशंपरिष्व
ज्यचभीमसेनमाश्वासयामाससशत्रुमध्ये ३९ भ्रातॄनथोपेत्यतवापिपुत्रस्तस्मिन्विमर्देमहतिप्रवृत्ते ॥ अयंदुरात्माद्रुपदस्यपुत्रःसमागतोभीमसेनेनसार्धं ४० तंयामसर्वे
महताबलेनमावोरिपुःप्रार्थयतामनीकम् ॥ श्रुत्वातुवाक्यंतममृष्यमाणाज्येष्ठाज्ञयानोदिताधार्तराष्ट्राः ४१ वधायनिष्पेतुरुदायुधास्तेयुगक्षयेकेतवोयद्वदुग्राः ॥
प्रगृह्यचास्त्राणिधनूंषिवीराज्यानेमिघोषैःप्रविकंपयंतः ४२ शरैरवर्षन्द्रुपदस्यपुत्रंयथाऽम्बुदाभूधरंवारिजालैः ॥ निहत्यतांश्चापिशरैःसुतीक्ष्णैर्नविव्यथेसमरे
चित्रयोधी ४३

४४ । ४५ । ४६ ४७ । ४८ । ४९ ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३

समभ्युदीर्णांश्चतवात्मजांस्तथानिशम्यवीरानभितःस्थितान्रणे ॥ जिघांसुरुग्रंद्रुपदात्मजोयुवाप्रमोहनास्त्रंयुयुजेमहारथः ४४ क्रुद्धोभृशंतवपुत्रेषुराजन्दैत्येषुयद्वत्स
मरेमहेन्द्रः ॥ ततोव्यमुह्यंतरणेनृवीराःप्रमोहनास्त्राहतबुद्धिसत्वाः ४५ प्रदुद्रुवुःकुरवश्चैवसर्वेसवाजिनागाःसरथाःसमंतात् ॥ परीतकालानिवनष्टसंज्ञान्मोहोपेतांस्त
वपुत्रान्निशम्य ४६ एतस्मिन्नेवकालेतुद्रोणःशस्त्रभृतांवरः ॥ द्रुपदंत्रिभिरासाद्यशरैर्विव्याधदारुणैः ४७ सोऽतिविद्धस्ततोराजन्रणेद्रोणेनपार्थिवः ॥ अपायाद्द्रुपदोरा
जन्पूर्ववैरमनुस्मरन् ४८ जित्वातुद्रुपदंद्रोणःशंखंदध्मौप्रतापवान् ॥ तस्यशंखस्वनंश्रुत्वावित्रेसुःसर्वसोमकाः ४९ अथशुश्रावतेजस्वीद्रोणःशस्त्रभृतांवरः ॥ प्रमोह
नास्त्रेणरणेमोहितानात्मजांस्तव ५० ततोद्रोणोमहाराजत्वरितोऽभ्याययौरणात् ॥ तत्रापश्यन्महेष्वासोभारद्वाजःप्रतापवान् ५१ धृष्टद्युम्नंचभीमंचविचरंतौमहा
रणे ॥ मोहाविष्टांश्चतेपुत्रानपश्यत्समहारथः ५२ ततःप्रज्ञास्त्रमादायमोहनास्त्रंव्यनाशयत् ॥ अथप्रत्यागतप्राणास्तवपुत्रामहारथाः ५३ पुनर्युद्धायसमरेप्रययुर्भीम
पार्षतौ ॥ ततोयुधिष्ठिरःप्राहसमाहूयस्वसैनिकान् ५४ गच्छंतुपदवींशक्त्याभीमपार्षतयोर्युधि ॥ सौभद्रप्रमुखावीरारथाद्वादशदंशिताः ५५ प्रवृत्तिमधिगच्छंतुन
हिशुद्ध्यतिमेमनः ॥ तएवंसमनुज्ञाताःशूराविक्रांतयोधिनः ५६ बाढमित्येवमुक्त्वातुसर्वेपुरुषमानिनः ॥ मध्यंदिनगतेसूर्येप्रययुःसर्वएवहि ५७ केकयाद्रौपदेयाश्च
धृष्टकेतुश्चवीर्यवान् ॥ अभिमन्युंपुरस्कृत्यमहत्यासेनयावृताः ५८ तेकृत्वासमरव्यूहंसूचीमुखमरिंदमाः ॥ बिभिदुर्धार्तराष्ट्राणांतद्रथानीकमाहवे ५९ तान्प्रयातान्म
हेष्वासानभिमन्युपुरोगमान् ॥ भीमसेनभयाविष्टाधृष्टद्युम्नविमोहिता ६० नसंवारयितुंशक्तातवसेनाजनाधिप ॥ मदमूर्छान्वितात्मावैप्रमदेवाध्वनिस्थिता ६१ तेऽ
भिजातामहेष्वासाःसुवर्णविकृतध्वजाः ॥ परीप्संतोऽभ्यधावंतधृष्टद्युम्नवृकोदरौ ६२ तौचदृष्ट्वामहेष्वासावभिमन्युपुरोगमान् ॥ बभूवतुर्मुदायुक्तौनिघ्नंतौतववाहिनीम्
६३ दृष्ट्वातुसहसायांतंपांचाल्योगुरुमात्मनः ॥ नाशंसतवधंवीरःपुत्राणांतवभारत ६४ ततोरथंसमारोप्यकैकेयस्यवृकोदरम् ॥ अभ्यधावत्सुसंक्रुद्धोद्रोणमिष्वस्त्रपार
गम् ६५ तस्याभिपततस्तूर्णंभारद्वाजःप्रतापवान् ॥ क्रुद्धश्चिच्छेदबाणेनधनुःशत्रुनिबर्हणः ६६ अन्यांश्चशतशोबाणान्प्रेषयामासपार्षते ॥ दुर्योधनहितार्थाय
भर्तृपिंडमनुस्मरन् ६७ अथान्यद्धनुरादायपार्षतःपरवीरहा ॥ द्रोणंविव्याधविंशत्यारुक्मपुंखैःशिलाशितैः ६८ तस्यद्रोणःपुनश्चापंचिच्छेदामित्रकर्शनः ॥
हयांश्चचतुरस्तूर्णंचतुर्भिःसायकोत्तमैः ६९ वैवस्वतक्षयंघोरंप्रेषयामासभारत ॥ सारथिंचास्यभल्लेनप्रेषयामासमृत्यवे ७० हताश्वात्सरथात्तूर्णमवप्लुत्यमहारथः ॥
आरुरोहमहाबाहुरभिमन्योर्महारथम् ७१ ततःसरथनागाश्वासमकंपतवाहिनी ॥ पश्यतोभीमसेनस्यपार्षतस्यचपश्यतः ७२ तत्प्रभग्नंबलंदृष्ट्वाद्रोणेनामिततेजसा ॥
नाशक्नुवन्वारयितुंसमस्तास्तेमहारथाः ७३

७४ । ७५ ॥ इतिभी० नी० भा० सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० ११ । १२ । १३ । १४ । १५ । १६ । १७

वध्यमानंतुतत्सैन्यंद्रोणेननिशितैःशरैः ॥ व्यभ्रमत्तत्रतत्रैवक्षोभ्यमाणइवार्णवः ७४ तथादृष्ट्वाचतत्सैन्यंजहृषेतावकंबलम् ॥ दृष्ट्वाऽऽचार्यंसुसंक्रुद्धंपतंतंरिपुवाहि
नीम् ॥ चुक्रुशुः सर्वतोयोधाःसाधुसाध्वितिभारत ७५ ॥ इतिश्रीमहाभारतेभीष्मप० भीष्मवधप० संकुलयुद्धेद्रोणपराक्रमेसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
॥ संजयउवाच ॥ ततोदुर्योधनोराजामोहात्प्रत्यागतस्तदा ॥ शरवर्षैःपुनर्भीमंप्रत्यवारयदच्युतम् १ एकीभूतास्ततश्चैवतवपुत्रामहारथाः ॥ समेत्यसमरेभीमंयोधया
मासुरुद्यताः २ भीमसेनोऽपिसमरेसंप्राप्यस्वरथंपुनः ॥ समारुह्यमहाबाहुर्ययौयेनतवात्मजः ३ प्रगृह्यचमहावेगंपरासुकरणंदृढम् ॥ सज्जंशरासनंसंख्येशरैर्विव्याध
तेसुतम् ४ ततोदुर्योधनोराजाभीमसेनंमहाबलम् ॥ नाराचेनसुतीक्ष्णेनभृशंमर्मण्यताडयत् ५ सोऽतिविद्धोमहेष्वासस्तवपुत्रेणधन्विना ॥ क्रोधसंरक्तनयनोवेगेनाक्षि
प्यकार्मुकम् ६ दुर्योधनंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत् ॥ सतत्रशुशुभेराजाशिखरैर्गिरिराडिव ७ तौदृष्ट्वासमरेक्रुद्धौविनिघ्नंतौपरस्परम् ॥ दुर्योधनानुजाःसर्वेशूराःसंत्यक्तजी
विताः ८ संस्मृत्यमंत्रितंपूर्वंनिग्रहंभीमकर्मणः ॥ निश्चयंपरमंकृत्वानिग्रहीतुंप्रचक्रमुः ९ तानापततएवाजौभीमसेनोमहाबलः ॥ प्रत्युद्ययौमहाराजगजःप्रतिगजानिव
१० भृशंक्रुद्धश्चतेजस्वीनाराचेनसमार्पयत् ॥ चित्रसेनंमहाराजतवपुत्रंमहायशाः ११ तथेतरांस्तवसुतांस्ताडयामासभारत ॥ शरैर्बहुविधैःसंख्येरुक्मपुंखैःसुतेजनैः
१२ ततःसंस्थाप्यसमरेतान्यनीकानिसर्वशः ॥ अभिमन्युप्रभृतयस्तेद्वादशमहारथाः १३ प्रेषिताधर्मराजेनभीमसेनपदानुगाः ॥ प्रतिजग्मुर्महाराजतवपुत्रान्महाब
लान् १४ दृष्ट्वारथस्थांस्तान्शूरान्सूर्याग्निसमतेजसः ॥ सर्वानेवमहेष्वासान्भ्राजमानान्श्रियावृतान् १५ महाहवेदीप्यमानान्सुवर्णमुकुटोज्ज्वलान् ॥ तत्यजुःसमरेभीमं
तवपुत्रामहाबलाः १६ तान्नामृष्यतकौन्तेयोजीवमानागताइति ॥ अन्वीयचपुनःसर्वांस्तवपुत्रानपीडयत् १७ अथाभिमन्युंसमरेभीमसेनेनसंगतम् ॥ पार्षतेनचसंप्रे
क्ष्यतवसैन्येमहारथाः १८ दुर्योधनप्रभृतयःप्रगृहीतशरासनाः ॥ भृशमश्वैःप्रजवितैःप्रययुर्यत्रतेरथाः १९ अपराह्णेमहाराजप्रावर्ततमहारणः ॥ तावकानांचबलिनां
परेषांचैवभारत २० अभिमन्युर्विकर्णस्यहयान्हत्वामहाहवे ॥ अथैनंपंचविंशत्याक्षुद्रकाणांसमार्पयत् २१ हताश्वंरथमुत्सृज्यविकर्णस्तुमहारथः ॥ आरुरोहरथंराजं
श्चित्रसेनस्यभारत २२ स्थितावेकरथेतौतुभ्रातरौकुलवर्धनौ ॥ आर्जुनिःशरजालेनच्छादयामासभारत २३ चित्रसेनोविकर्णश्चकार्ष्णिंपंचभिरायसैः ॥ विव्यधा
तेनचाकंपत्कार्ष्णिर्मेरुरिवस्थितः २४ दुःशासनस्तुसमरेकेकयान्पंचमारिष ॥ योधयामासराजेंद्रतदद्भुतमिवाभवत् २५ द्रौपदेयारणेक्रुद्धादुर्योधनमवारयन् ॥
शरैराशीविषाकारैःपुत्रंतवविशांपते २६ पुत्रोऽपितवदुर्धर्षोद्रौपद्यास्तनयान्रणे ॥ सायकैर्निशितैराजन्नाजघानपृथक्पृथक् २७

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

तैश्चापिविद्धःशुशुभेरुधिरेणसमुक्षितः ॥ गिरिःप्रस्नवणैर्यद्वद्गैरिकादिविमिश्रितैः २८ भीष्मोऽपिसमरेराजन्पांडवानामनीकिनीम् ॥ कालयामासबलवान्पालःपशु
गणानिव २९ ततोगांडीवनिर्घोषःप्रादुरासीद्विशांपते ॥ दक्षिणेनवरूथिन्याःपार्थस्यारीन्विनिघ्नतः ३० उत्तस्थुःसमरेतत्रकबन्धानिसमंततः ॥ कुरूणांचैवसैन्येषुपां
डवानांचभारत ३१ शोणितोदंशरावर्तंगजद्वीपंहयोर्मिणम् ॥ रथनौभिर्नरव्याघ्राःप्रतेरुःसैन्यसागरम् ३२ छिन्नहस्ताविकवचाविदेहाश्चनरोत्तमाः ॥ दृश्यंतेपतिता
स्तत्रशतशोऽथसहस्रशः ३३ निहतैर्मत्तमातंगैःशोणितौघपरिप्लुतैः ॥ भूर्भातिभरतश्रेष्ठपर्वतैराचितायथा ३४ तत्राद्भुतमपश्यामतवतेषांचभारत ॥ नतत्रासीत्पुमान्
कश्चिद्योयुद्धंनाभिकांक्षति ३५ एवंयुयुधिरेवीराःप्रार्थयानामहद्यशः ॥ तावकाःपांडवैःसार्धमाकांक्षंतोजयंयुधि ३६ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भीष्मवधपर्व
णि संकुलयुद्धेअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ ॥ ॥ संजयउवाच ॥ ततोदुर्योधनोराजालोहितायतिभास्करे ॥ संग्रामरभसोभीमंहंतुकामोऽभ्यधावत १
तमायांतमभिप्रेक्ष्यनृवीरंदृढवैरिणम् ॥ भीमसेनःसुसंक्रुद्धइदंवचनमब्रवीत् २ अयंसकालःसंप्राप्तोवर्षपूगाभिवांछितः ॥ अद्यत्वांनिहनिष्यामियदिनोत्सृजसेरणम् ३
अद्यकुंत्याःपरिक्लेशंवनवासंचकृत्स्नशः ॥ द्रौपद्याश्चपरिक्लेशंप्रणेष्यामिहतेत्वयि ४ यत्पुरामत्सरीभूत्वापांडवानवमन्यसे ॥ तस्यपापस्यगांधारेपश्यव्यसनमागतम् ५
कर्णस्यमतमास्थायसौबलस्यचयत्पुरा ॥ अचिन्त्यपांडवान्कामाद्यथेष्टंकृतवानसि ६ याचमानंचयन्मोहाद्दाशार्हमवमन्यसे ॥ उलूकस्यसमादेशंयद्ददासिचहृष्टवत् ७
तेनत्वांनिहनिष्यामिसानुबन्धंसबांधवम् ॥ समीकरिष्येतत्पापंयत्पुराकृतवानसि ८ एवमुक्त्वाधनुर्घोरंविकृष्योद्भ्राम्यचासकृत् ॥ समाधत्तशरान्घोरान्महाशनि
समप्रभान् ९ षड्विंशतिमसंक्रुद्धोमुमोचाशुसुयोधने ॥ ज्वलिताग्निशिखाकारान्वज्रकल्पानजिह्मगान् १० ततोऽस्यकार्मुकंद्वाभ्यांसूतंद्वाभ्यांचविव्यधे ॥ चतुर्भिर
श्वान्जवनाननयद्यमसादनम् ११ द्वाभ्यांचसुविकृष्टाभ्यांशराभ्यामरिमर्दनः ॥ छत्रंचिच्छेदसमरेराज्ञस्तस्यनरोत्तम १२ षड्भिश्चतस्यचिच्छेदज्वलंतंध्वजमुत्तमम् ॥
छित्वातंचननादोच्चैस्तवपुत्रस्यपश्यतः १३ रथाच्चसध्वजःश्रीमान्नानारत्नविभूषितात् ॥ पपातसहसाभूमौविद्युज्जलधरादिव १४ ज्वलंतंसूर्यसंकाशंनागंमणिमयंशुभम् ॥
ध्वजंकुरुपतेश्छिन्नंददृशुःसर्वपार्थिवाः १५ अथैनंदशभिर्बाणैस्तोत्रैरिवमहाद्विपम् ॥ आजघानरणेवीरःस्मयन्निवमहारथः १६ ततःसराजासिंधूनांरथश्रेष्ठोमहारथः ॥
दुर्योधनस्यजग्राहपार्ष्णिंसत्पुरुषैर्वृतः १७ कृपश्चरथिनांश्रेष्ठःकौरव्यममितौजसम् ॥ आरोपयद्रथंराजन्दुर्योधनममर्षणम् १८ सगाढविद्धोव्यथितोभीमसेनेनसं
युगे ॥ निषसादरथोपस्थेराजन्दुर्योधनस्तदा १९ परिवार्यततोभीमंजेतुकामोजयद्रथः ॥ रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः २० धृष्टकेतुस्ततोराजन्नभिमन्युश्च
वीर्यवान् ॥ केकयाद्रौपदेयाश्चतवपुत्रानयोधयन् २१

२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१

चित्रसेनःसुचित्रश्चचित्रांगश्चित्रदर्शनः ॥ चारुचित्रःसुचारुश्चतथानन्दोपनन्दकौ २२ अष्टावेतेमहेष्वासाःसुकुमारायशस्विनः॥ अभिमन्युरथंराजन्समंतात्पर्यवारयन् २३
आजघानततस्तूर्णमभिमन्युर्महामनाः ॥ एकैकंपंचभिर्बाणैःशितैःसन्नतपर्वभिः २४ वज्रमृत्युप्रतीकाशैर्विचित्रायुधनिःसृतैः ॥ अमृष्यमाणास्तेसर्वेसौभद्रंरथसत्त
मम् २५ ववृषुर्मार्गणैस्तीक्ष्णैर्गिरिंमेरुमिवांबुदाः ॥ सपीड्यमानःसमरेकृतास्त्रोयुद्धदुर्मदः २६. अभिमन्युर्महाराजतावकान्समकंपयत् ॥ यथादेवासुरेयुद्धेवज्रपाणि
र्महासुरान् २७ विकर्णस्यततोभल्लान्प्रेषयामासभारत ॥ चतुर्दशरथश्रेष्ठोघोरानाशीविषोपमान् २८ सतैर्विकर्णस्यरथात्पातयामासवीर्यवान् ॥ ध्वजंसूतंहयांश्चैव
नृत्यमानइवाहवे २९ पुनश्चान्यान्शरान्पीतानकुंठाग्रान्शिलाशितान् ॥ प्रेषयामाससंक्रुद्धोविकर्णायमहाबलः ३० तेविकर्णंसमासाद्यकंकबर्हिणवाससः ॥ भित्वा
देहंगताभूमिंज्वलंतइवपन्नगाः ३१ तेशराहेमपुंखाग्राव्यदृश्यन्तमहीतले ॥ विकर्णरुधिरक्लिन्नावमन्तइवशोणितम् ३२ विकर्णंवीक्ष्यनिर्भिन्नंतस्यैवान्येसहोदराः ॥
अभ्यद्रवंतसमरेसौभद्रप्रमुखान्रथान् ३३ अभियात्वातथैवान्यान्रथांस्तान्सूर्यवर्चसः ॥ अविध्यन्समरेऽन्योन्यंसंरंभाद्युद्धदुर्मदाः ३४ दुर्मुखःश्रुतकर्माणंविध्वासप्तभिरा
शुगैः ॥ ध्वजमेकेनचिच्छेदसारथिंचास्यसप्तभिः ३५ अश्वान्जाम्बूनदैर्जालैःप्रच्छन्नान्वातरंहसः ॥ जघानषड्भिरासाद्यसारथिंचाभ्यपातयत् ३६ सहताश्वेरथेतिष्ठन्
श्रुतकर्मामहारथः ॥ शक्तिंचिक्षेपसंक्रुद्धोमहोल्कांज्वलितामिव ३७ सादुर्मुखस्यविमलंवर्मभित्वायशस्विनः ॥ विदार्यप्राविशद्भूमिंदीप्यमानास्वतेजसा ३८ तंदृष्ट्वा
विरथंतत्रसुतसोमोमहारथः ॥ पश्यतांसर्वसैन्यानांरथमारोपयत्स्वकम् ३९ श्रुतकीर्तिस्तथावीरोजयत्सेनंसुतंतव ॥ अभ्ययात्समरेराजन्हंतुकामोयशस्विनम् ४०
तस्यविक्षिपतश्चापंश्रुतकीर्तेर्महास्वनम् ॥ चिच्छेदसमरेतूर्णंजयत्सेनःसुतस्तव ४१ क्षुरप्रेणसुतीक्ष्णेनप्रहसन्निवभारत ॥ तंदृष्ट्वाछिन्नधन्वानंशतानीकःसहोदरम् ४२
अभ्यपद्यततेजस्वीसिंहवन्निनदन्मुहुः ॥ शतानीकस्तुसमरेदृढंविस्फार्यकार्मुकम् ४३ विव्याधदशभिस्तूर्णंजयत्सेनंशिलीमुखैः ॥ ननादसुमहानादंप्रभिन्नइववारणः ४४
अथान्येनसुतीक्ष्णेनसर्वावरणभेदिना ॥ शतानीकोजयत्सेनंविव्याधहृदयेभृशम् ४५ तथातस्मिन्वर्तमानेदुष्कर्णोभ्रातुरंतिके ॥ चिच्छेदसमरेचापंनाकुलेःक्रोधमू
र्च्छितः ४६ अथान्यद्धनुरादायभारसाहमनुत्तमम् ॥ समादत्तशरान्घोरान्शतानीकोमहाबलः ४७ तिष्ठतिष्ठेतिचामंत्र्यदुष्कर्णंभ्रातुरग्रतः ॥ मुमोचास्मैशितान्बा
णाञ्ज्वलितान्पन्नगानिव ४८ ततोऽस्यधनुरेकेनद्वाभ्यांसूतंचमारिष ॥ चिच्छेदसमरेतूर्णंतंचविव्याधसप्तभिः ४९ अश्वान्मनोजवांस्तस्यकर्बुरान्वातरंहसः ॥ जघा
ननिशितैस्तूर्णंसर्वान्द्वादशभिःशरैः ५० अथापरेणभल्लेनसुयुक्तेनाशुपातिना ॥ दुष्कर्णंसुदृढंक्रुद्धोविव्याधहृदयेभृशम् ५१

५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ ॥ इति भीष्मपर्वणि नी० भा० ऊनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ ॥ ॥ अथेति

सपपाततततोभूमौवज्राहतइवद्रुमः ॥ दुष्कर्णंव्यथितंदृष्ट्वापंचराजन्महारथाः ५२ जिघांसंतःशतानीकंसर्वतःपर्यवारयन् ॥ छाद्यमानंशरव्रातैःशतानीकंयशस्विनम् ५३
अभ्यधावंतसंक्रुद्धाःकेकयाःपंचसोदराः ॥ तानभ्यापततःप्रेक्ष्यतवपुत्रामहारथाः ५४ प्रत्युद्ययुर्महाराजगजानिवमहागजाः ॥ दुर्मुखोदुर्जयश्चैवतथादुर्मर्षणोयुवा ५५ शत्रुं
जयःशत्रुसहःसर्वेक्रुद्धायशस्विनः ॥ प्रत्युद्याताःमहाराजकेकयान्भ्रातरःसमम् ५६ रथैर्नगरसंकाशैर्हयैर्युक्तैर्मनोजवैः ॥ नानावर्णविचित्राभिःपताकाभिरलंकृतैः ५७
वरचापधरावीराविचित्रकवचध्वजाः ॥ विविशुस्तेपरंसैन्यंसिंहाइववनाद्वनम् ५८ तेषांसुतुमुलंयुद्धंव्यतिषक्तरथद्विपम् ॥ अवर्ततमहारौद्रंनिघ्नतामितरेतरम् ५९ अन्यो
न्यागस्कृतांराजन्यमराष्ट्रविवर्धनम् ॥ मुहूर्तास्तमितेसूर्येचक्रुर्युद्धंसुदारुणम् ६० रथिनःसादिनश्चाथव्यकीर्यन्तसहस्रशः ॥ ततःशांतनवःक्रुद्धःशरैःसन्नतपर्वभिः ६१
नाशयामाससेनांतांभीष्मस्तेषांमहात्मनाम् ॥ पंचालानांचसैन्यानिशरैर्निन्येयमक्षयम् ६२ एवंभित्वामहेष्वासःपांडवानामनीकिनी ॥ कृत्वाऽवहारंसैन्यानांययौ
स्वशिबिरंनृप ६३ धर्मराजोऽपिसंप्रेक्ष्यधृष्टद्युम्नवृकोदरौ ॥ मूर्ध्निचैतावुपाघ्रायप्रहृष्टःशिबिरंययौ ॥ ६४ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० षष्ठदिवसाव
हारेऊनाशीतितमोऽध्यायः ॥ ७९ ॥ संजयउवाच ॥ अथशूरामहाराजपरस्परकृतागसः ॥ जग्मुःस्वशिबिराण्येवरुधिरेणसमुक्षिताः १ विश्रम्यचयथान्यायंपूजयित्वा
परस्परम् ॥ सन्नद्धाःसमदृश्यंतभूयोयुद्धचिकीर्षया २ ततस्तवसुतोराजंश्चिंतयाभिपरिप्लुतः ॥ विस्रवच्छोणिताक्तांगःपप्रच्छेदंपितामहम् ३ सैन्यानिरौद्राणिभयानका
निव्यूढानिसम्यग्बहुलध्वजानि ॥ विदार्यहत्वाचनिपीड्यशूरास्तेपांडवानांत्वरितामहारथाः ४ संमोह्यसर्वान्युधिकीर्तिमन्तोव्यूहंचतंमकरंवज्रकल्पम् ॥ प्रविश्यभीमेन
रणेहतोऽस्मिघोरैःशरैर्मृत्युदंडप्रकाशैः ५ क्रुद्धंतमुद्वीक्ष्यभयेनराजन्संमूर्च्छितोनलभेशांतिमद्य ॥ इच्छेप्रसादात्तवसत्यसंधप्राप्तुंजयंपांडवेयांश्चहंतुम् ६ तेनैवमुक्तः
प्रहसन्महात्मादुर्योधनंमन्युगतंविदित्वा ॥ तंप्रत्युवाचाविमनामनस्वीगंगासुतःशस्त्रभृतांवरिष्ठः ७ परेणयत्नेनविगाह्यसेनांसर्वात्मनाऽहंतवराजपुत्र ॥ इच्छामिदातुं
विजयंसुखंचनचात्मानंछादयेऽहंत्वदर्थे ८ एतेतुरौद्राबहवोमहारथायशस्विनःशूरतमाःकृतास्त्राः ॥ येपांडवानांसमरेसहायाजितक्लमारोषविषंवमंति ९ तेनैवश
क्याःसहसाविजेतुंवीर्योद्धताःकृतवैरास्त्वयाच ॥ अहंसेनांप्रतियोत्स्यामिराजन्सर्वात्मनाजीवितंत्यज्यवीर १० रणेतवार्थायमहानुभावनजीवितंरक्ष्यतमंममाद्य ॥ सर्वा
स्तवार्थायसदेवदैत्यान्घोरान्दहेयंकिमुशत्रुसेनाम् ११ तान्पांडवान्योधयिष्यामिराजन्प्रियंचतेसर्वमहंकरिष्ये ॥ श्रुत्वैवचैतद्वचनंतदानींदुर्योधनःप्रीतमनाबभूव १२
सर्वाणिसैन्यानिततःप्रहृष्टोनिर्गच्छतेत्याहनृपांश्चसर्वान् ॥ तदाज्ञयातानिविनिर्ययुर्द्रुतंगजाश्वपादातरथायुतानि १३

॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

१४ । १५ । १६ । १७ । १८ । १९ ॥ इतिभीष्मपर्वणि नीलकंठीये भा० अशीतितमोऽध्यायः ॥ ८० ॥ ॥ ॥ अथेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९
प्रहर्षयुक्तानितुतानिराजन्महांतिनानाविधशस्त्रवंति ॥ स्थितानिनागाश्वपदातिमंतिविरेजुराजौतवराजन्बलानि १४ शस्त्रास्त्रविद्भिर्नरवीरयोधैरधिष्ठिताःसैन्यगणास्त्व
दीयाः ॥ रथौघपादातगजाश्वसंघैःप्रयाद्भिराजौविधिवत्प्रणुन्नैः १५ समुद्धतंवैतरुणार्कवर्णरजोबभौच्छादयत्सूयरश्मीन् ॥ रेजुःपताकारथदंतिसंस्थावातेरिताभ्राम्यमा
णाःसमंतात् १६ नानारंगाःसमेरतत्रराजन्मेघैर्युताविद्युतःखेयथैव ॥ वृन्दैस्थिताश्चापिसुसंप्रयुक्ताश्चकाशिरेदंतिगणाःसमंतात् १७ धनूंषिविस्फारयतांनृपाणांबभू
वशब्दस्तुमुलोऽतिघोरः ॥विमथ्यतोदेवमहासुरौघैर्यथाऽर्णवस्यादियुगेतदानीम् १८ तदुग्रनागंबहुरूपवर्णंतवात्मजानांसमुदीर्णमेवम् ॥ बभूवसैन्यंरिपुसैन्यहंतृयुगांतमे
घौघनिभंतदानीम् १९ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० भीष्मदुर्योधनसंवादेअशीतितमोऽध्यायः ॥ ८० ॥ संजयउवाच ॥ अथात्मजंतवपुनर्गांगेयो
ध्यानमास्थितम् ॥ अब्रवीद्भरतश्रेष्ठःसंप्रहर्षकरंवचः १ अहंद्रोणश्चशल्यश्चकृतवर्माचसात्वतः ॥ अश्वत्थामाविकर्णश्चभगदत्तोऽथसौबलः २ विन्दानुविन्दावावंत्यौबा
ह्लीकःसहबाह्लिकैः ॥त्रिगर्तराजोबलवान्मागधश्चसुदुर्जयः ३ बृहद्बलश्चकौसल्यश्चित्रसेनोविविंशतिः ॥ रथाश्वबहुसाहस्राःशोभनाश्चमहाध्वजाः ४ देशजाश्चहयाराजन्स्वा
रुढाहयसादिभिः ॥ गजेन्द्राश्चमदोद्वृत्ताःप्रभिन्नकरटामुखाः ५ पादाताश्चतथाशूरानानाप्रहरणध्वजाः ॥ नानादेशसमुत्पन्नास्त्वदर्थेयोद्धुमुद्यताः ६ एतेचान्येचबहवस्त्व
दर्थेत्यक्तजीविताः ॥ देवानपिरणेजेतुंसमर्थाइतिमेमतिः ७ अवश्यंहिमयाराजंस्तववाच्यंहितंसदा ॥ अशक्याःपांडवाजेतुंदेवैरपिसवासवैः ८ वासुदेवसहायाश्चमहेंद्र
समविक्रमाः ॥ सर्वथाऽहंतुराजेन्द्रकरिष्येवचनंतव ९ पांडवांश्चरणेजेष्येमांवाजेष्यंतिपांडवाः ॥ एवमुक्त्वाददावस्मैविशल्यकरणींशुभाम् १० ओषधींवीर्यसंपन्नांवि
शल्यश्चाभवत्तदा ॥ततःप्रभातेविमलेस्वेनसैन्येनवीर्यवान् ११ अव्यूहतस्वयंव्यूहंभीष्मोव्यूहविशारदः ॥ मंडलंमनुजश्रेष्ठोनानाशस्त्रसमाकुलम् १२ संपूर्णंयोधमुख्यैश्चत
थादन्तिपदातिभिः ॥ रथैरनेकसाहस्रैःसमंतात्परिवारितम् १३ अश्ववृन्दैर्महद्भिश्चऋष्टितोमरधारिभिः ॥ नागेनागेरथाःसप्तसप्तचाश्वारथेरथे १४ अन्वश्वंदशधानुष्काधा
नुष्केदशचर्मिणः ॥ एवंव्यूढंमहाराजतवसैन्यंमहारथैः १५ स्थितंरणायमहतेभीष्मेणयुधिपालितम् ॥ दशाश्वानांसहस्राणिदन्तिनांचतथैवच १६ रथानामयुतंचा
पिपुत्राश्चतवदंशिताः ॥ चित्रसेनादयःशूराअभ्यरक्षन्पितामहम् १७ रक्ष्यमाणःसतैःशूरैर्गोप्यमानाश्चतेनते ॥ सनद्धाःसमदृश्यंतराजानश्चमहाबलाः १८ दुर्योधनस्तुस
मरेदंशितोरथमास्थितः ॥ व्यराजतश्रियाजुष्टोयथाशक्रस्त्रिविष्टपे १९ ततःशब्दोमहानासीत्पुत्राणांतवभारत ॥ रथघोषश्चविपुलोवादित्राणांचनिःस्वनः २० भीष्मेणधा ॥१०९
र्तराष्ट्राणांव्यूढःप्रत्यङ्मुखोयुधि ॥ मंडलःसमहाव्यूहोदुर्भेद्योऽमित्रघातनः २१
१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१

सर्वतःशुशुभेराजन्रणेऽरीणांदुरासदः ॥ मण्डलंतुसमालोक्यव्यूहंपरमदुर्जयम् २२ स्वयंयुधिष्ठिरोराजावज्रंव्यूहमथाकरोत् ॥ तथाव्यूढेष्वनीकेषुयथास्थानमव
स्थिताः २३ रथिनःसादिनःसर्वेसिंहनादमथानदन् ॥ बिभित्सवस्ततोव्यूहंनिर्ययुर्युद्धकांक्षिणः २४ इतरेतरतःशूराःसहसैन्याःप्रहारिणः ॥ भारद्वाजोययौमत्स्यंद्रौ
णिश्चापिशिखंडिनम् २५ स्वयंदुर्योधनोराजापार्षतंसमुपाद्रवत् ॥ नकुलःसहदेवश्चमद्रराजानमीयतुः २६ विन्दानुविन्दावावंत्याविरावंतमभिद्रुतौ ॥ सर्वेनृपास्तु
समरेधनंजयमयोधयन् २७ भीमसेनोरणेयान्तंहार्दिक्यंसमवारयत् ॥ चित्रसेनंविकर्णंचतथादुर्मर्षणंविभुः २८ आर्जुनिःसमरेराजंस्तवपुत्रानयोधयत् ॥ प्राग्ज्यो
तिषोमहेष्वासोहैडिंबंराक्षसोत्तमम् २९ अभिदुद्राववेगेनमत्तोमत्तमिवद्विपम् ॥ अलंबुषस्तदाराजन्सात्यकिंयुद्धदुर्मदम् ३० ससैन्यंसमरेक्रुद्धोराक्षसःसमुपाद्र
वत् ॥ भूरिश्रवारणेयत्तोधृष्टकेतुमयोधयत् ३१ श्रुतायुषंचराजानंधर्मपुत्रोयुधिष्ठिरः ॥ चेकितानश्चसमरेकृपमेवान्वयोधयत् ३२ शेषाःप्रतिययुर्यत्ताभीष्ममेवमहा
रथम् ॥ ततोराजसमूहास्तेपरिवव्रुर्धनंजयम् ३३ शक्तितोमरनाराचगदापरिघपाणयः ॥ अर्जुनोऽथभृशंक्रुद्धोवार्ष्णेयमिदमब्रवीत् ३४ पश्यमाधवसैन्यानिधार्त
राष्ट्रस्यसंयुगे ॥ व्यूढानिव्यूहविदुषागांगेयेनमहात्मना ३५ युद्धाभिकामान्शूरांश्चपश्यमाधवदंशितान् ॥ त्रिगर्त्तराजंसहितंभ्रातृभिःपश्यकेशव ॥ ३६
अद्यैतान्नाशयिष्यामिपश्यतस्तेजनार्दन ॥ यइमेमांयदुश्रेष्ठयोद्धुकामारणाजिरे ३७ एतदुक्त्वातुकौन्तेयोधनुर्ज्यामवमृज्यच ॥ ववर्षशरवर्षाणिनराधिपगणान्प्रति
३८ तेऽपितंपरमेष्वासाशरवर्षैरपूरयन् ॥ तडागंवारिधाराभिर्यथाप्रावृषितोयदाः ३९ हाहाकारोमहानासीत्तवसैन्येविशांपते ॥ छाद्यमानौरणेकृष्णौशरैर्दृष्ट्वामहा
रणे ४० देवादेवर्षयश्चैवगंधर्वाश्चसहोरगैः ॥ विस्मयंपरमंजग्मुर्दृष्ट्वाकृष्णौतथागतौ ४१ ततःक्रुद्धोऽर्जुनोराजन्नैन्द्रमस्त्रमुदैरयत् ॥ तत्राद्भुतमपश्यामविजयस्यपराक्रमम्
४२ शस्त्रवृष्टिंपरैर्मुक्तांशरौघैर्यदवारयत् ॥ नचतत्राप्यनिर्भिन्नःकश्चिदासीद्विशांपते ४३ तेषांराजसहस्राणांहयानांदंतिनांतथा ॥ द्वाभ्यांत्रिभिःशरैश्चान्यान्पार्थो
विव्याधमारिष ४४ तेहन्यमानाःपार्थेनभीष्मंशान्तनवंययुः ॥ अगाधेमज्जमानानांभीष्मःपोतोऽभवत्तदा ४५ आपतद्भिस्तुतैस्तत्रप्रभग्नंतावकंबलम् ॥ संचुक्षुभेम
हाराजवातैरिवमहार्णवः ॥ ४६ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मव० सप्तमयुद्धदिवसे एकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ संजयउवाच ॥ ॥
तथाप्रवृत्तेसंग्रामेनिवृत्तेचसुशर्मणि ॥ भग्नेषुचापिवीरेषुपांडवेनमहात्मना १ क्षुभ्यमाणेबलेतूर्णंसागरप्रतिमेतव ॥ प्रत्युद्यातेचगांगेयेत्वरितंविजयंप्रति २ दृष्ट्वादु
र्योधनोराजारणेपार्थस्यविक्रमम् ॥ त्वरमाणःसमभ्येत्यसर्वांस्तानब्रवीन्नृपान् ३ तेषांतुप्रमुखेशूरंसुशर्माणंमहाबलम् ॥ मध्येसर्वस्यसैन्यस्यभृशंसंहर्षयन्निव ४

तंप्रयांतंरणेवीरंसर्वसैन्येनभारतम् ॥ संयत्ताःसमरेसर्वेपालयध्वंपितामहम् ६
एषभीष्मःशान्तनवोयोद्धुकामोधनंजयम् ॥ सर्वात्मनाकुरुश्रेष्ठस्त्यक्त्वाजीवितमात्मनः ५ तंप्रयांतंरणेवीरंसर्वसैन्येनभारतम् ॥ संयत्ताःसमरेसर्वेपालयध्वंपितामहम् ६ ततःप्रयातःसहसाभीष्मःशांतनवोऽर्जुनम् ॥ रणेभारतमायांतमाससाद
बाढमित्येवमुक्त्वातुतान्यनीकानिसर्वशः ॥ नरेन्द्राणांमहाराजसमाजग्मुःपितामहम् ७ ततःप्रयातःसहसाभीष्मःशांतनवोऽर्जुनम् ॥ रणेभारतमायांतमाससाद
महाबलः ८ महाश्वेताश्वयुक्तेनभीमवानरकेतुना ॥ महतामेघनादेनरथेनातिविराजता ९ समरेसर्वसैन्यानामुपयान्तंधनंजयम् ॥ अभवत्तुमुलोनादोभयाद्दृष्ट्वा
किरीटिनम् १० अभीषुहस्तंकृष्णंचदृष्ट्वाऽऽदित्यमिवापरम् ॥ मध्यंदिनगतंसंख्येनशेकुःप्रतिवीक्षितुम् ११ तथाशांतनवंभीष्मंश्वेताश्वंश्वेतकार्मुकम् ॥ नशेकुः
पाण्डवाद्रष्टुंश्वेतंग्रहमिवोदितम् १२ ससर्वतःपरिवृतस्त्रिगर्तैःसुमहात्मभिः ॥ भ्रातृभिःसहपुत्रैश्चतथान्यैश्चमहारथैः १३ भारद्वाजस्तुसमरेमत्स्यंविव्याधपत्रिणा ॥
ध्वजंचास्यशरेणाजौधनुश्चैकेनचिच्छिदे १४ तदपास्यधनुश्छिन्नंविराटोवाहिनीपतिः ॥ अन्यदादत्तवेगेनधनुर्भारसहंदृढम् १५ शरांश्चाशीविषाकारान्ज्वलितान्
पन्नगानिव ॥ द्रोणंत्रिभिश्चविव्याधचतुर्भिश्चास्यवाजिनः १६ ध्वजमेकेनविव्याधसारथिंचास्यपंचभिः ॥ धनुरेकेषुणाऽविध्यत्तत्राकुध्यद्द्विजर्षभः १७ तस्य
द्रोणोऽवधीदश्वान्शरैःसन्नतपर्वभिः ॥ अष्टाभिर्भरतश्रेष्ठसूतमेकेनपत्रिणा १८ सहताश्वादवप्लुत्यस्यंदनाद्धतसारथिः ॥ आरुरोहरथंतूर्णंपुत्रस्यरथिनांवरः १९ तत
स्तुतौपितापुत्रौभारद्वाजंरथेस्थितौ ॥ महताशरवर्षेणवारयामासतुर्बलात् २० भारद्वाजस्ततःक्रुद्धःशरमाशीविषोपमम् ॥ चिक्षेपसमरेतूर्णंशंखंप्रतिजनेश्वरः २१
सतस्यहृदयंभित्वापीत्वाशोणितमाहवे ॥ जगामधरणींबाणोलोहितार्द्रवरच्छदः २२ सपपातरणेतूर्णंभारद्वाजशराहतः ॥ धनुस्त्यक्त्वाशरांश्चैवपितुरेवसमीपतः
२३ हतंतमात्मजंदृष्ट्वाविराटःप्राद्रवद्भयात् ॥ उत्सृज्यसमरेद्रोणंव्यात्ताननमिवांतकम् २४ भारद्वाजस्ततस्तूर्णंपांडवानांमहाचमूम् ॥ दारयामाससमरेशतशोऽथ
सहस्रशः २५ शिखंडीतुमहाराजद्रौणिमासाद्यसंयुगे ॥ आजघानभ्रुवोर्मध्येनाराचैस्त्रिभिराशुगैः २६ सबभौरथशार्दूलोललाटेसंस्थितैस्त्रिभिः ॥ शिखरैःकांचनम
यैर्मेरुस्त्रिभिरिवोच्छ्रितैः २७ अश्वत्थामाततःक्रुद्धोनिमेषार्धाच्छिखंडिनः ॥ ध्वजंसूतमथोराजंस्तुरगानायुधानिच २८ शरैर्बहुभिराच्छिद्यपातयामाससंयुगे ॥ सहता
श्वादवप्लुत्यरथाच्छ्रेरथिनांवरः २९ खड्गमादायसुशितंविमलंचशरावरम् ॥ श्येनवद्व्यचरत्क्रुद्धःशिखंडीशत्रुतापनः ३० सखड्गस्यमहाराजचरतस्तस्यसंयुगे ॥ नांतरं
ददृशेद्रौणिस्तदद्भुतमिवाभवत् ३१ ततःशरसहस्राणिबहूनिभरतवर्षभ ॥ प्रेषयामाससमरेद्रौणिःपरमकोपनः ३२ तामापतंतींसमरेशरवृष्टिंसुदारुणाम् ॥ असिना
तीक्ष्णधारेणचिच्छेदबलिनांवरः ३३ ततोस्यविमलंद्रौणिःशतचन्द्रंमनोरमम् ॥ चर्माच्छिनदसिंचास्यखंडयामाससंयुगे ३४ शितैस्तुबहुशोराजन्तंचविव्याधपत्रिभिः ॥
शिखंडीतुततःखड्गंखंडितंतेनसायकैः ३५

आविध्यव्यसृजत्तूर्णंज्वलंतमिवपन्नगम् ॥ तमापतंतंसहसाकालानलसमप्रभम् ३६ चिच्छेदसमरेद्रौणिर्दर्शयन्पाणिलाघवम् ॥ शिखंडिनंचविव्याधशरैर्बहुभिरायसैः ३७
शिखंडीतुभृशंराजंस्ताड्यमानःशितैःशरैः ॥ आरुरोहरथंतूर्णंमाधवस्यमहात्मनः ३८ सात्यकिश्चापिसंक्रुद्धोराक्षसंक्रूरमाहवे ॥ अलंबुषंशरैस्तीक्ष्णैर्विव्याधबलिनांवरः
३९ राक्षसेंद्रस्ततस्तस्यधनुश्चिच्छेदभारत ॥ अर्धचंद्रेणसमरेतंचविव्याधसायकैः ४० मायांचराक्षसींकृत्वाशरवर्षैरवाकिरत् ॥ तत्राद्भुतमपश्यामशैनेयस्यपराक्रमम्
४१ असंभ्रमस्तुसमरेवध्यमानःशितैःशरैः ॥ ऐंद्रमस्त्रंचवार्ष्णेयोयोजयामासभारत ४२ विजयाद्यदनुप्राप्तंमाधवेनयशस्विना ॥ तदस्त्रंभस्मसात्कृत्वामायांतांरा
क्षसींतदा ४३ अलंबुषंशरैरन्यैरभ्याकिरतसर्वतः ॥ पर्वतंवारिधाराभिःप्रावृषीवबलाहकः ४४ तत्तथापीडितंतेनमाधवेनयशस्विना ॥ प्रदुद्रावभयाद्रक्षस्त्यक्त्वासात्य
किमाहवे ४५ तमजेयंराक्षसेंद्रंसंख्येमघवताअपि ॥ शैनेयःप्राणदज्जित्वायोधानांतवपश्यताम् ४६ न्यहनत्तावकांश्चापिसात्यकिःसत्यविक्रमः ॥ निशितैर्बहुभिर्बाणै
स्तेऽद्रवंतभयार्दिताः ४७ एतस्मिन्नेवकालेतुद्रुपदस्यात्मजोबली ॥ धृष्टद्युम्नोमहाराजपुत्रंतवजनेश्वरम् ४८ छादयामाससमरेशरैःसन्नतपर्वभिः ॥ सच्छाद्यमानो
विशिखैर्धृष्टद्युम्नेनभारत ४९ विव्यथेनचराजेन्द्रतवपुत्रोजनेश्वर ॥ धृष्टद्युम्नंचसमरेतूर्णंविव्याधपत्रिभिः ५० षष्ट्याचत्रिंशताचैवतदद्भुतमिवाभवत् ॥ तस्यसेनापतिः
क्रुद्धोधनुश्चिच्छेदमारिष ५१ हयांश्चचतुरःशीघ्रंनिजघानमहाबलः ॥ शरैश्चैनंसुनिशितैःक्षिप्रंविव्याधसप्तभिः ५२ सहताश्वान्महाबाहुरवप्लुत्यरथाद्बली ॥ पदा
तिरसिमुद्यम्यप्राद्रवत्पार्षतंप्रति ५३ शकुनिस्तंसमभ्येत्यराजगृद्धीमहाबलः ॥ राजानंसर्वलोकस्यरथमारोपयत्स्वकम् ५४ ततोनृपंपराजित्यपार्षतःपरवीरहा ॥
न्यहनत्तावकंसैन्यंवज्रपाणिरिवासुरान् ५५ कृतवर्मारणेभीमंशरैरार्छन्महारथः ॥ प्रच्छादयामासचतंमहामेघोरविंयथा ५६ ततःप्रहस्यसमरेभीमसेनःपरंतपः ॥
प्रेषयामाससंक्रुद्धःसायकान्कृतवर्मणे ५७ तैरर्द्यमानोऽतिरथःसात्वतःसत्यकोविदः ॥ नाकंपतमहाराजभीमंचार्छच्छितैःशरैः ५८ तस्याश्वांश्चतुरोहत्वाभीमसेनो
महारथः ॥ सारथिंपातयामाससध्वजंसुपरिष्कृतम् ५९ शरैर्बहुविधैश्चैनमाचिनोत्परवीरहा ॥ शकलीकृतसर्वांगोहताश्वःप्रत्यदृश्यत ६० हताश्वश्चततस्तूर्णंवृषक
स्यरथंययौ ॥ स्यालस्यतेमहाराजतवपुत्रस्यपश्यतः ६१ भीमसेनोऽपिसंक्रुद्धस्तवसैन्यमुपाद्रवत् ॥ निजघानचसंक्रुद्धोदंडपाणिरिवांतकः ॥ ६२ ॥ इतिश्रीमहा
भारतेभीष्मपर्वणि भीष्मवधप० द्वैरथे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ बहूनिहिविचित्राणिद्वैरथानिस्मसंजय ॥ पांडूनांमामकैःसार्धम
श्रौषंतवजल्पतः १ नचैवमामकंकिंचिद्धृष्टंशंससिसंजय ॥ नित्यंपांडुसुतान्हृष्टानभग्नान्संप्रशंससि २ जीयमानान्विमनसोमामकान्विगतौजसः ॥ वदसेसंयुगे
सूतदिष्टमेतन्नसंशयः ३

४।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२ नागराजःकौरव्यस्तस्यसुताउलूपीतस्याःसुतइरावान् २३।२४।२५।२६।२७।२८।२९।३० निष्ठानकःसव्यथःशब्दः

॥ संजयउवाच ॥ यथाशक्तियथोत्साहंयुद्धेचेष्टंतितावकाः ॥ दर्शयानाःपरंशक्त्यापौरुषंपुरुषर्षभ ४ गंगायाःसुरनद्यावैस्वादुभूत्वायथोदकम् ॥ महोदधेर्गुणाभ्या
साल्लवणत्वंनिगच्छति ५ तथातत्पौरुषंराजंस्तावकानांपरंतप ॥ प्राप्यपांडुसुतान्वीरान्व्यर्थंभवतिसंयुगे ६ घटमानान्यथाशक्तिकुर्वाणान्कर्मदुष्करम् ॥ नदोषेण
कुरुश्रेष्ठकौरवान्गंतुमर्हसि ७ तवापराधात्सुमहान्सपुत्रस्यविशांपते ॥ पृथिव्याःप्रक्षयोघोरोयमराष्ट्रविवर्धनः ८ आत्मदोषात्समुत्पन्नंशोचितुंनार्हसेनृप ॥ नहिरक्षं
तिराजानःसर्वथाऽत्रापिजीवितम् ९ युद्धेसुकृतिनांलोकानिच्छंतोवसुधाधिपाः ॥ चमूंविगाह्ययुद्ध्यंतेनित्यंस्वर्गपरायणाः १० पूर्वाह्णेतुमहाराजप्रावर्ततजनक्षयः ॥
तत्वमेकमनाभूत्वाशृणुदेवासुरोपमम् ११ आवंत्यौतुमहेष्वासौमहासेनौमहाबलौ ॥ इरावंतमभिप्रेक्ष्यसमेयातांरणोत्कटौ १२ तेषांप्रववृतेयुद्धंसुमहल्लोमहर्षणम् ॥
इरावांस्तुसुसंक्रुद्धोभ्रातरौदेवरूपिणौ १३ विव्याधनिशितैस्तूर्णंशरैःसन्नतपर्वभिः ॥ तावेनंप्रत्यविध्येतांसमरेचित्रयोधिनौ १४ युध्यतांहितथाराजन्विशेषोनव्यदृश्य
त ॥ यततांशत्रुनाशायकृतप्रतिकृतैषिणाम् १५ इरावांस्तुततोराजन्ननुविंदस्यसायकैः ॥ चतुर्भिश्चतुरोवाहाननयद्यमसादनम् १६ भल्लाभ्यांचसुतीक्ष्णाभ्यांधनुः
केतुंचमारिष ॥ चिच्छेदसमरेराजंस्तदद्भुतमिवाभवत् १७ त्यक्त्वाऽनुविंदोऽथरथंविंदस्यरथमास्थितः ॥ धनुर्गृहीत्वापरमंभारसाधनमुत्तमम् १८ तावेकस्थौरणेवीरा
वावंत्यौरथिनांवरौ ॥ शरान्मुमुचतुस्तूर्णमिरावतिमहात्मनि १९ ताभ्यांमुक्तामहावेगाःशराःकांचनभूषणाः ॥ दिवाकरपथंप्राप्यच्छादयामासुरंबरम् २० इरावां
स्तुरणेक्रुद्धौभ्रातरौतौमहारथौ ॥ ववर्षशरवर्षेणसारथिंचाप्यपातयत् २१ तस्मिंस्तुपतितेभूमौगतसत्वेतुसारथौ ॥ रथःप्रदुद्रावदिशःसमुद्भ्रांतहयस्ततः २२ तौसजि
त्वामहाराजनागराजसुतासुतः ॥ पौरुषंख्यापयंस्तूर्णंव्यधमत्तववाहिनीम् २३ साबध्यमानासमरेधार्तराष्ट्रीमहाचमूः ॥ वेगान्बहुविधांश्चक्रेविषंपीत्वेवमानवः २४
हैडिंबोराक्षसेंद्रस्तुभगदत्तंसमाद्रवत् ॥ रथेनादित्यवर्णेनसध्वजेनमहाबलः २५ ततःप्राग्ज्योतिषोराजानागराजंसमास्थितः ॥ यथावज्रधरःपूर्वंसंग्रामेतारकामये २६
तत्रदेवाःसगंधर्वाऋषयश्चसमागताः ॥ विशेषंनस्मविविदुर्हैडिंबभगदत्तयोः २७ यथासुरपतिःशक्रस्त्रासयामासदानवान् ॥ तथैवसमरेराजाद्रावयामासपांडवान् २८
तेनविद्राव्यमाणास्तेपांडवाःसर्वतोदिशम् ॥ त्रातारंनाभ्यगच्छंतःस्वेष्वनीकेषुभारत २९ भैमसेनिंरथस्थंतुतत्रापश्यामभारत ॥ शेषाविमनसोभूत्वाप्राद्रवंतमहारथाः
३० निवृत्तेषुतुपांडूनांपुनःसैन्येषुभारत ॥ आसीन्निष्ठानकोघोरस्तवसैन्यस्यसंयुगे ३१ घटोत्कचस्ततोराजन्भगदत्तंमहारणे ॥ शरैःप्रच्छादयामासमेरुंगिरिमिवांबु
बुदः ३२ निहत्यतान्शरान्राजाराक्षसस्यधनुश्च्युतान् ॥ भैमसेनिंरणेतूर्णंसर्वमर्मस्वताडयत् ३३ सताड्यमानोबहुभिःशरैःसन्नतपर्वभिः ॥ नविव्यथेराक्षसेंद्रोभिद्य
मानइवाचलः ३४ ३१।३२।३३।३४

३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ ॥ इतिभीष्मपर्वणि नीलकंठीये भा०
तस्यप्राग्ज्योतिषःक्रुद्धस्तोमरांश्चचतुर्दश ॥ प्रेषयामाससमरेतांश्चिच्छेदसराक्षसः ३५ सतांश्छित्वामहाबाहुस्तोमरान्निशितैःशरैः ॥ भगदत्तंचविव्याधसप्तत्याकंक
पत्रिभिः ३६ ततःप्राग्ज्योतिषोराजाप्रहसन्निवभारत ॥ तस्याश्वांश्चतुरःसंख्येपातयामाससायकैः ३७ सहताश्वेरथेतिष्ठन्राक्षसेंद्रःप्रतापवान् ॥ शक्तिंचिक्षेपवेगे
नप्राग्ज्योतिषगजंप्रति ३८ तामापतंतींसहसाहेमदंडांसुवेगिनीम् ॥ त्रिधाचिच्छेदनृपतिःसाव्यकीर्यतमेदिनीम् ३९ शक्तिंविनिहतांदृष्ट्वाहैडिंबःप्राद्रवद्भयात् ॥
यथेंद्रस्यरणात्पूर्वंनमुचिर्दैत्यसत्तमः ४० तंविजित्यरणेशूरंविक्रांतंख्यातपौरुषम् ॥ अजेयंसमरेवीरंयमेनवरुणेनच ४१ पांडवींसमरेसेनांसममर्दसकुंजरः ॥ यथा
वनगजोराजन्मृद्नंश्चरतिपद्मिनीम् ४२ मद्रेश्वरस्तुसमरेयमाभ्यांसमसज्जत ॥ स्वस्रीयौछादयांचक्रेशरौघैःपांडुनंदनौ ४३ सहदेवस्तुसमरेमातुलंदृश्यसंगतम् ॥
अवारयच्छरौघेणमेघोयद्वद्दिवाकरम् ४४ छाद्यमानःशरौघेणहृष्टरूपतरोऽभवत् ॥ तयोश्चाप्यभवत्प्रीतिरतुलामातृकारणात् ४५ ततःप्रहस्यसमरेनकुलस्यमहा
रथः ॥ अश्वांश्चचतुरोराजंश्चतुर्भिःसायकोत्तमैः ४६ प्रेषयामाससमरेयमस्यसदनंप्रति ॥ हताश्वात्तुरथात्तूर्णमवप्लुत्यमहारथः ४७ आरुरोहततोयानंभ्रातुरेवयश
स्विनः ॥ एकस्थौतुरणेशूरौदृढेविक्षिप्यकार्मुके ४८ मद्रराजरथंतूर्णंछादयामासतुःक्षणात् ॥ सच्छाद्यमानोबहुभिःशरैःसन्नतपर्वभिः ४९ स्वस्रीयाभ्यांनरव्याघ्रो
नाकंपतयथाऽचलः ॥ प्रहसन्निवतांचापिशस्त्रवृष्टिंजघानह ५० सहदेवस्ततःक्रुद्धःशरमुद्गृह्यवीर्यवान् ॥ मद्रराजमभिप्रेक्ष्यप्रेषयामासभारत ५१ सशरःप्रेषितस्तेन
गरुडानिलवेगवान् ॥ मद्रराजंविनिर्भिद्यनिपपातमहीतले ५२ सगाढविद्धोव्यथितोरथोपस्थेमहारथः ॥ निषसादमहाराजकश्मलंचजगामह ५३ तंविसंज्ञंनिपति
तंसूतःसंप्रेक्ष्यसंयुगे ॥ अपोवाहरथेनाजौयमाभ्यामभिपीडितम् ५४ दृष्ट्वामद्रेश्वररथंधार्तराष्ट्राःपराङ्मुखम् ॥ सर्वेविमनसोभूत्वानेदमस्तीत्यचिंतयन् ५५ निर्जित्य
मातुलंसंख्येमाद्रीपुत्रौमहारथौ ॥ दध्मतुर्मुदितौशंखौसिंहनादंचनेदतुः ५६ अभिदुद्रुवतुर्हृष्टौतवसैन्यंविशांपते ॥ यथादैत्यचमूंराजन्निन्द्रोपेन्द्राविवामरौ ५७ ॥ इति
श्रीमहाभारते भीष्मपर्वणि भीष्मवधप० द्वंद्वयुद्धेत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ संजयउवाच ॥ ततोयुधिष्ठिरोराजामध्यंप्राप्तेदिवाकरे ॥ श्रुतायुषमभिप्रेक्ष्यप्रेषया
मासवाजिनः १ अभ्यधावत्ततोराजाश्रुतायुषमरिन्दमम् ॥ विनिघ्नन्सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः २ ससंवार्यरणेराजाप्रेषितान्धर्मसूनुना ॥ शरान्सप्तमहेष्वासः
कौन्तेयायसमार्पयत् ३ ततस्यकवचंभित्वापपुःशोणितमाहवे ॥ असूनिवविचिन्वन्तोदेहेतस्यमहात्मनः ४ पांडवस्तुभृशंक्रुद्धोविद्धस्तेनमहात्मना ॥ रणेवराहकर्णेन
राजानंहृद्यविध्यत ५ अथापरेणभल्लेनकेतुंतस्यमहात्मनः ॥ रथश्रेष्ठोरथात्तूर्णंभूमौपार्थोन्यपातयत् ६

भावदीपे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ सततइति १ । २ । ३ । ४ । ५ । ६

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ करकर्षः शिशुपालपुत्रः ३२ । ३३ । ३४ । ३५ । ३६ । ३७

केतुंनिपतितंदृष्ट्वाश्रुतायुःसतुपार्थिवः ॥ पाण्डवंविशिखैस्तीक्ष्णैराजन्विव्याधसप्तभिः ७ ततःक्रोधात्प्रजज्वालधर्मपुत्रोयुधिष्ठिरः ॥ यथायुगांतेभूतानिदिधक्षुरि
वपावकः ८ क्रुद्धंतुपांडवंदृष्ट्वादेवगंधर्वराक्षसाः ॥ प्रविव्यथुर्महाराजव्याकुलंचाप्यभूज्जगत् ९ सर्वेषांचैवभूतानामिदमासीन्मनोगतम् ॥ त्रींल्लोकानद्यसंक्रुद्धोनृपो
ऽयंधक्ष्यतीतिवै १० ऋषयश्चैवदेवाश्चचक्रुःस्वस्त्ययनंमहत् ॥ लोकानांनृपशांत्यर्थंक्रोधितेपांडवेतदा ११ सचक्रोधसमाविष्टःसृक्किणीपरिसंलिहन् ॥ दधारात्मवपुर्घोरं
युगांतादित्यसन्निभम् १२ ततःसैन्यानिसर्वाणितावकानिविशांपते ॥ निराशान्यभवंस्तत्रजीवितंप्रतिभारत १३ सतुधैर्येणतंकोपंसन्निवार्यमहायशाः ॥ श्रुतायुषः
प्रचिच्छेदमुष्टिदेशेमहाधनुः १४ अथैनंछिन्नधन्वानंनाराचेनस्तनांतरे ॥ निर्बिभेदरणेराजासर्वसैन्यस्यपश्यतः १५ सत्वरंचरणेराजन्तस्यवाहान्महात्मनः ॥ निज
घानशरैःक्षिप्रंसूतंचसुमहाबलः १६ हताश्वंतुरथंत्यक्त्वादृष्ट्वाराज्ञोऽस्यपौरुषम् ॥ विप्रदुद्राववेगेनश्रुतायुःसमरेतदा १७ तस्मिन्जितेमहेष्वासेधर्मपुत्रेणसंयुगे ॥ दुर्योध
नबलंराजन्सर्वमासीत्पराङ्मुखम् १८ एतत्कृत्वामहाराजधर्मपुत्रोयुधिष्ठिरः ॥ व्यात्ताननोयथाकालस्तवसैन्यंजघानह १९ चेकितानस्तुवार्ष्णेयोगौतमंरथिनांव
रम् ॥ प्रेक्षतांसर्वसैन्यानांछादयामाससायकैः २० सन्निवार्यशरांस्तांस्तुकृपःशारद्वतोयुधि ॥ चेकितानंरणेयत्तंराजन्विव्याधपत्रिभिः २१ अथापरेणभल्लेनधनुश्चि
च्छेदमारिष ॥ सारथिंचास्यसमरेक्षिप्रहस्तोन्यपातयत् २२ अश्वांश्चास्यावधीद्राजन्नुभौतौपार्ष्णिसारथी ॥ सोऽवप्लुत्यरथात्तूर्णंगदांजग्राहसात्वतः २३ सतयावीर
घातिन्यागदयागदिनांवरः ॥ गौतमस्यहयान्हत्वासारथिंचन्यपातयत् २४ भूमिष्ठोगौतमस्तस्यशरांश्चिक्षेपषोडश ॥ शरास्तेसात्वतंभित्वाप्राविशन्धरणीतलम्
२५ चेकितानस्ततःक्रुद्धःपुनश्चिक्षेपतांगदाम् ॥ गौतमस्यवधाकांक्षीवृत्रस्येवपुरंदरः २६ तामापतंतींविमलामश्मगर्भांमहागदाम् ॥ शरैरनेकसाहस्रैर्वारयामासगौ
तमः २७ चेकितानस्ततःखड्गंक्रोधादुद्धृत्यभारत ॥ लाघवंपरमास्थायगौतमंसमुपाद्रवत् २८ गौतमोऽपिधनुस्त्यक्त्वाप्रगृह्यासिंसुसंयतः ॥ वेगेनमहताराजंश्चेकिता
नमुपाद्रवत् २९ तावुभौबलसंपन्नौनिस्त्रिंशवरधारिणौ ॥ निस्त्रिंशाभ्यांसुतीक्ष्णाभ्यामन्योन्यंसंततक्षतुः ३० निस्त्रिंशवेगाभिहतौततस्तौपुरुषर्षभौ ॥ धरणींसमनुप्रा
प्तौसर्वभूतनिषेविताम् ३१ मूर्छयाऽभिपरीतांगौव्यायामेनतुमोहितौ ॥ ततोऽभ्यधावद्वेगेनकरकर्षःसुहृत्तया ३२ चेकितानंतथाभूतंदृष्ट्वासमरदुर्मदः ॥ रथमा
रोपयच्चैनंसर्वसैन्यस्यपश्यतः ३३ तथैवशकुनिःशूरःस्यालस्तवविशांपते ॥ आरोपयद्रथंतूर्णंगौतमंरथिनांवरम् ३४ सौमदत्तिंतथाक्रुद्धोधृष्टकेतुर्महाबलः ॥ नवत्या
सायकैःक्षिप्रंराजन्विव्याधवक्षसि ३५ सौमदत्तिरुरःस्थैस्तैर्भृशंबाणैरशोभत ॥ मध्यंदिनेमहाराजरश्मिभिस्तपनोयथा ३६ भूरिश्रवास्तुसमरेधृष्टकेतुंमहारथम् ॥
हतसूतहयंचक्रेविरथंसायकोत्तमैः ३७

२९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ अपविद्धानिपतितानि ४८।४९।५०।५१।५२।५३।५४।५५।५६।५७।५८।५९

ततःप्रदुद्रुवुःशेषास्तवपुत्रामहाहवे ॥ तंकालमिवमन्यन्तोभीमसेनंमहाबलम् २९ द्रोणस्तुसमरेवीरंनिर्दहंतंसुतांस्तव ॥ यथाद्रिंवारिधाराभिःसमंताद्व्यकिरच्छरैः ३०
तत्राद्भुतमपश्यामकुंतीपुत्रस्यपौरुषम् ॥ द्रोणेनवार्यमाणोऽपिनिजघ्नेयत्सुतांस्तव ३१ यथागोवृषभोवर्षंसंधारयतिखात्पतत् ॥ भीमस्तथाद्रोणमुक्तंशरवर्षमदीधरत्
३२ अद्भुतंचमहाराजतत्रचक्रेवृकोदरः ॥ यत्पुत्रांस्तेऽवधीत्संख्येद्रोणंचैवन्यवारयत् ३३ पुत्रेषुतववीरेषुचिक्रीडार्जुनपूर्वजः ॥ मृगेष्विवमहाराजचरन्व्याघ्रोमहाबलः
३४ यथाहिपशुमध्यस्थोदारयेतपशून्वृकः ॥ वृकोदरस्तवसुतांस्तथाव्यद्रावयद्रणे ३५ गांगेयोभगदत्तश्चगौतमश्चमहारथाः ॥ पांडवंरभसंयुद्धेवारयामासुरर्जुनम् ३६
अस्त्रैरस्त्राणिसंवार्यतेषांसोऽतिरथोरणे ॥ प्रवीरांस्तवसैन्येषुप्रेषयामासमृत्यवे ३७ अभिमन्युस्तुराजानमंबष्ठंलोकविश्रुतम् ॥ विरथंरथिनांश्रेष्ठंवारयामाससायकैः ३८
विरथोवध्यमानस्तुसौभद्रेणयशस्विना ॥ अवप्लुत्यरथात्तूर्णमंबष्ठोवसुधाधिपः ३९ असिंचिक्षेपसमरेसौभद्रस्यमहात्मनः ॥ आरुरोहरथंचैवहार्दिक्यस्यमहाबलः ४०
आपतंतंतुनिस्त्रिंशंयुद्धमार्गविशारदः ॥ लाघवाद्व्यंसयामाससौभद्रःपरवीरहा ४१ व्यंसितंवीक्ष्यनिस्त्रिंशंसौभद्रेणरणेतदा ॥ साधुसाध्वितिसैन्यानांप्रणादोऽभूद्विशां
पते ४२ धृष्टद्युम्नमुखास्त्वन्येतवसैन्यमयोधयन् ॥ तथैवतावकाःसर्वेपांडुसैन्यमयोधयन् ४३ तत्राक्रन्दोमहानासीत्तवतेषांचभारत ॥ निघ्नतांदृढमन्योन्यंकुर्वतांकर्म
दुष्करम् ४४ अन्योन्यंहिरणेशूराःकेशेष्वाक्षिप्यमानिनः ॥ नखदन्तैरयुध्यंतमुष्टिभिर्जानुभिस्तथा ४५ तलैश्चैवाथनिस्त्रिंशैर्बाहुभिश्चसुसंस्थितैः ॥ विवरंप्राप्यचान्यो
न्यमनयन्यमसादनम् ४६ न्यहनच्चपितापुत्रंपुत्रश्चपितरंतथा ॥ व्याकुलीकृतसर्वांगायुयुधुस्तत्रमानवाः ४७ रणेचारुणिचापानिहेमपृष्ठानिमारिष ॥ हतानामपवि
द्धानिकलापाश्चमहाधनाः ४८ जातरूपमयैःपुंखैराजतैर्निशिताःशराः ॥ तैलधौताव्यराजंतनिर्मुक्तभुजगोपमाः ४९ हस्तिदन्तत्सरून्खड्गान्जातरूपपरिष्कृतान् ॥
चर्माणिचापविद्धानिरुक्मचित्राणिधन्विनाम् ५० सुवर्णविकृतप्रासान्पट्टिशान्हेमभूषितान् ॥ जातरूपमयाश्चर्ष्टीःशक्तीश्चकनकोज्ज्वलाः ५१ सुसन्नाहाश्चपतिता
मुसलानिगुरूणिच ॥ परिघान्पट्टिशांश्चैवभिंदिपालांश्चमारिष ५२ पतितान्विविधांश्चापांश्चित्रान्हेमपरिष्कृतान् ॥ कुथाबहुविधाकाराश्चामराव्यजनानिच ५३
नानाविधानिशस्त्राणिप्रगृह्यपतितानराः ॥ जीवन्तइवदृश्यन्तेगतसत्वामहारथाः ५४ गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकाः ॥ गजवाजिरथक्षुण्णाःशेरतेस्मनराःक्षितौ
५५ तथैवाश्वनृनागानांशरीरैर्विबभौतदा ॥ संछन्नावसुधाराजन्पर्वतैरिवसर्वशः ५६ समरेपतितैश्चैवशक्त्यृष्टिशरतोमरैः ॥ निस्त्रिंशैःपट्टिशैःप्रासैरयस्कुन्तैःपरश्वधैः
५७ परिघैर्भिन्दिपालैश्चशतघ्नीभिश्चमारिष ॥ शरीरैःशस्त्रनिर्भिन्नैःसमास्तीर्यतमेदिनी ५८ विशब्दैरल्पशब्दैश्चशोणितौघपरिप्लुतैः ॥ गतासुभिरमित्रघ्नविबभौ
निचितामही ५९

सतल्त्रैःसकेयूरैर्बाहुभिश्चंदनोक्षितैः ॥ हस्तिहस्तोपमैश्छिन्नैरूरुभिश्चतरस्विनाम् ६० बद्धचूडामणिवरैःशिरोभिश्चसकुंडलैः ॥ पातितैर्ऋषभाक्षाणांबभौभार
तमेदिनी ६१ कवचैःशोणितादिग्धैर्विप्रकीर्णैश्चकांचनैः ॥ रराजसुभृशंभूमिःशांतार्चिभिरिवानलैः ६२ विप्रविद्धैःकलापैश्चपतितैश्चशरासनैः ॥ विप्रकीर्णैः
शरैश्चैवरुक्मपुंखैःसमंततः ६३ रथैश्चसर्वतोभग्नैःकिंकिणीजालभूषितैः ॥ वाजिभिश्चहतैर्बाणैःस्रस्तजिह्वैःसशोणितैः ६४ अनुकर्षैःपताकाभिरुपासंगैर्ध्वजैरपि ॥
प्रवीराणांमहाशंखैर्विप्रकीर्णैश्चपांडुरैः ६५ स्रस्तहस्तैश्चमातंगैःशयानैर्विबभौमही ॥ नानारूपैरलंकारैःप्रमदेवाभ्यलंकृता ६६ दंतिभिश्चापरैस्तत्रसप्रासैर्गाढवे
दनैः ॥ करैःशब्दंविमुंचद्भिःशीकरंचमुहुर्मुहुः ६७ विबभौतद्रणस्थानंस्यंदमानैरिवाचलैः ॥ नानारागैःकंबलैश्चपरिस्तोमैश्चदंतिनाम् ६८ वैडूर्यमणिदंडैश्चपति
तैरंकुशैःशुभैः ॥ घंटाभिश्चगजेंद्राणांपतिताभिःसमंततः ६९ विपाटितविचित्राभिःकुथाभिरंकुशैस्तथा ॥ ग्रैवेयैश्चविरूपैश्चरुक्मकक्ष्याभिरेवच ७० यंत्रैश्च
बहुधाच्छिन्नैस्तोमरैश्चापिकांचनैः ॥ अश्वानांरेणुकपिलैरुक्मच्छन्नैरुरश्छदैः ७१ सादिनांभुजगैश्छिन्नैःपतितैःसांगदैस्तथा ॥ प्रासैश्चविमलैस्तीक्ष्णैर्विमला
भिस्तथर्ष्टिभिः ७२ उष्णीषैश्चतथाचित्रैर्विप्रविद्धैस्ततस्ततः ॥ विचित्रैर्बाणवर्षैश्चजातरूपपरिष्कृतैः ७३ अश्वास्तरपरिस्तोमैराङ्कवैर्मृदितैस्तथा ॥ नरेन्द्रचूडा
मणिभिर्विचित्रैश्चमहाधनैः ७४ छत्रैस्तथाऽपविद्धैश्चचामरैर्व्यजनैरपि ॥ पद्मेन्दुद्युतिभिश्चैववदनैश्चारुकुंडलैः ७५ क्लृप्तश्मश्रुभिरत्यर्थंवीराणांसमलंकृतैः ॥
अपविद्धैर्महाराजसुवर्णोज्ज्वलकुंडलैः ७६ ग्रहनक्षत्रशबलाद्यौरिवासीद्वसुंधरा ॥ एवमेतेमहासेनेमृदितेतत्रभारत ७७ परस्परंसमासाद्यतवतेषांचसंयुगे ॥
तेषुश्रांतेषुभग्नेषुमृदितेषुचभारत ७८ रात्रिःसमभवत्तत्रनापश्यामततोऽनुगान् ॥ ततोऽवहारंसैन्यानांप्रचक्रुःकुरुपांडवाः ७९ रजनीमुखेसुरौद्रेतुवर्तमानेमहा
भये ॥ अवहारंततःकृत्वासहिताःकुरुपांडवाः ॥ न्यविशंतयथाकालंगत्वास्वशिबिरंतदा ॥ ८० ॥ इतिश्रीमहाभा० भीष्मपर्वणिभीष्मवध० अष्टमदिवसयु
द्धावहारेषण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ ॥ संजयउवाच ॥ ॥ ततोदुर्योधनोराजाशकुनिश्चापिसौबलः ॥ दुःशासनश्चपुत्रस्तेसूतपुत्रश्चदुर्जयः
१ समागम्यमहाराजमंत्रंचक्रुर्विवक्षितम् ॥ कथंपांडुसुताःसंख्येजेतव्याःसगणाइति २ ततोदुर्योधनोराजासर्वांस्तानाहमंत्रिणः ॥ सूतपुत्रंसमाभाष्यसौबलंचम
हाबलम् ३ द्रोणोभीष्मःकृपःशल्यःसौमदत्तिश्चसंयुगे ॥ नपार्थान्प्रतिबाधंतेनजानेतच्चकारणम् ४ अवध्यमानास्तेचापिक्षपयंतिबलंमम ॥ सोऽस्मिक्षीणबलः
कर्णक्षीणशस्त्रश्चसंयुगे ५ निकृतःपांडवैःशूरैरवध्यैर्दैवतैरपि ॥ सोऽहंसंशयमापन्नःप्रहरिष्येकथंरणे ६ तमब्रवीन्महाराजसूतपुत्रोनराधिपम् ॥ ॥ कर्णउवाच ॥
माशोचभरतश्रेष्ठकरिष्येऽहंप्रियंतव ७ भीष्मःशांतनवस्तूर्णमपयातुमहारणात् ॥ निवृत्तेयुधिगांगेयेन्यस्तशस्त्रेचभारत ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ इयंहययानं रथमितियावत् १९ । २० भंडीपुष्पंमंजिष्ठापुष्पम् २१ । २२ । २३ । २४ । २५ । २६



अहंपार्थान्हनिष्यामिसहितान्सर्वसोमकैः ॥ पश्यतोयुधिभीष्मस्यशपेसत्येनतेनृप ९ पांडवेषुदयांनित्यंसहिभीष्मःकरोतिवै ॥ अशक्तश्चरणेभीष्मोजेतुमे
तान्महारथान् १० अभिमानीरणेभीष्मोनित्यंचापिरणप्रियः ॥ सकथंपांडवान्युद्धेजेष्यतेतातसंगतान् ११ सत्वंशीघ्रमितोगत्वाभीष्मस्यशिबिरंप्रति ॥
अनुमान्यगुरुंवृद्धंशस्त्रंन्यासयभारत १२ न्यस्तशस्त्रेततोभीष्मेनिहतान्पश्यपांडवान् ॥ मयैकेनरणेराजन्ससुहृद्गणबांधवान् १३ एवमुक्तस्तुकर्णेनपुत्रोदुर्योधनस्तव ॥
अब्रवीद्भ्रातरंतत्रदुःशासनमिदंवचः १४ अनुयात्रंयथासर्वंसज्जोभवतिसर्वशः ॥ दुःशासनतथाक्षिप्रंसर्वमेवोपपादय १५ एवमुक्त्वाततोराजन्कर्णमाहजनेश्वरः ॥
अनुमान्यरणेभीष्ममेषोऽहंद्विपदांवरम् १६ आगमिष्येततःक्षिप्रंत्वत्सकाशमरिंदम ॥ अपक्रान्तेततोभीष्मेप्रहरिष्यसिसंयुगे १७ निष्पपातततस्तूर्णंपुत्रस्तव
विशांपते ॥ सहितोभ्रातृभिस्तैस्तुदेवैरिवशतक्रतुः १८ ततस्तंनृपशार्दूलंशार्दूलसमविक्रमम् ॥ आरोहयद्धयंतूर्णंभ्रातादुःशासनस्तदा १९ अंगदीबद्धमुकुटो
हस्ताभरणवान्नृप ॥ धार्तराष्ट्रोमहाराजविबभौसपथिव्रजन् २० भंडीपुष्पनिकाशेनतपनीयनिभेनच ॥ अनुलिप्तःपरार्ध्येनचन्दनेनसुगंधिना २१ अरजोंबरसं
वीतःसिंहखेलगतिर्नृप ॥ शुशुभेविमलार्चिष्मान्नभसीवदिवाकरः २२ तंप्रयांतंनरव्याघ्रंभीष्मस्यशिबिरंप्रति ॥ अनुजग्मुर्महेष्वासाःसर्वलोकस्यधन्विनः २३
भ्रातरश्चमहेष्वासास्त्रिदशाइववासवम् ॥ हयानन्येसमारुह्यगजानन्येचभारत २४ रथानन्येनरश्रेष्ठंपरिवव्रुःसमंततः ॥ आत्तशस्त्राश्चसुहृदोरक्षणार्थंमहीपतेः २५
प्रादुर्बभूवुःसहिताःशक्रस्येवामरादिवि ॥ सपूज्यमानःकुरुभिःकौरवाणांमहाबलः २६ प्रययौसदनंराजागांगेयस्ययशस्विनः ॥ अन्वीयमानःसततंसोदरैःपरिवा
रितः २७ दक्षिणंदक्षिणःकालेसंभृत्यस्वभुजंतदा ॥ हस्तिहस्तोपमंशैक्षंसर्वशत्रुनिबर्हणम् २८ प्रगृह्णन्नंजलीन्नृणामुद्यतान्सर्वतोदिशः ॥ शुश्रावमधुरावाचोना
नादेशनिवासिनाम् २९ संस्तूयमानःसूतैश्चमागधैश्चमहायशाः ॥ पूजयानश्चतान्सर्वान्सर्वलोकेश्वरेश्वरः ३० प्रदीपैःकांचनैस्तत्रगंधतैलावसेचितैः ॥ परिवव्रु
र्महाराजंप्रज्वलद्भिःसमंततः ३१ सतैःपरिवृतोराजाप्रदीपैःकांचनैर्ज्वलन् ॥ शुशुभेचंद्रमायुक्तोदीप्तैरिवमहाग्रहैः ३२ कांचनोष्णीषिणस्तत्रवेत्रझर्झरपाणयः ॥
प्रोत्साहयंतःशनकैस्तंजनंसर्वतोदिशम् ३३ संप्राप्यतुततोराजाभीष्मस्यसदनंशुभम् ॥ अवतीर्यहयात्तस्मादपिभीष्मंप्राप्यजनेश्वरः ३४ अभिवाद्यततोभीष्मंनिषण्णः
परमासने ॥ कांचनेसर्वतोभद्रेस्पर्द्ध्यास्तरणसंवृते ३५ उवाचप्रांजलिर्भीष्मंबाष्पकंठोऽश्रुलोचनः ॥ त्वांवयंहिसमाश्रित्यसंयुगेशत्रुसूदन ३६ उत्सहेमरणे
जेतुंसेन्द्रानपिसुरासुरान् ॥ किमुपांडुसुतान्वीरान्ससुहृद्गणबांधवान् ३७ तस्मादर्हसिगांगेयकृपांकर्तुंमयिप्रभो ॥ जहिपांडुसुतान्वीरान्महेन्द्रइवदानवान् ३८

अन्वीयमानःअनुगम्यमानः २७ दक्षिणंस्वभुजंसंभृत्यसमुद्धृत्य शैक्षंशस्त्रादिशिक्षासंपन्नम् । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

३९ । ४० । ४१ । ४३ ॥ इतिभी० नी० भा० सप्तनवतितमोऽध्यायः ॥ ९७ ॥ वाक्शल्यैरिति १ । २ । ३ । ४ पर्याप्तंप्राप्तं ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

अहंसर्वान्महाराजनिहनिष्यामिसोमकान् ॥ पंचालान्केकयैःसार्धंकरूषांश्चेतिभारत ३९ त्वद्वचःसत्यमेवास्तुजहिपार्थान्समागतान् ॥ सोमकांश्चमहेष्वासान्सत्य
वाग्भवभारत ४० दययायदिवाराजन्द्वेष्यभावान्ममप्रभो ॥ मंदभाग्यतयावापिममरक्षसिपांडवान् ४१ अनुजानीहिसमरेकर्णमाहवशोभिनम् ॥ सजेष्यतिरणेपा
र्थान्ससुहृद्गणबांधवान् ४२ सएवमुक्त्वानृपतिःपुत्रोदुर्योधनस्तव ॥ नोवाचवचनंकिंचिद्भीष्मंसत्यपराक्रमम् ४३ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधप० भीष्मं
प्रतिदुर्योधनवाक्येसप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ ॥ संजयउवाच ॥ वाक्शल्यैस्तवपुत्रेणसोऽतिविद्धोमहामनाः ॥ दुःखेनमहताऽऽविष्टोनोवाचाप्रियमण्वपि १
सध्यात्वासुचिरंकालंदुःखरोषसमन्वितः ॥ श्वसमानोयथानागःप्रणुन्नोवाक्शलाकया २ उद्वृत्यचक्षुषीकोपान्निर्दहन्निवभारत ॥ सदेवासुरगंधर्वंलोकंलोकविदांवरः ३
अब्रवीत्तवपुत्रंससामपूर्वमिदंवचः ॥ किंत्वंदुर्योधनैवंमांवाक्शल्यैरपकृंतसि ४ घटमानंयथाशक्तिकुर्वाणंचतवप्रियम् ॥ जुह्वानंसमरेप्राणांस्तववैप्रियकाम्यया ५ यदातु
पांडवःशूरःखांडवेऽग्निमतर्पयत् ॥ पराजित्यरणेशक्रंपर्याप्तंतन्निदर्शनम् ६ यदाचत्वांमहाबाहोगन्धर्वैर्हृतमोजसा ॥ अमोचयत्पांडुसुतःपर्याप्तंतन्निदर्शनम् ७ द्रवमाणेषु
शूरेषुसोदरेषुतवप्रभो ॥ सूतपुत्रेचराधेयेपर्याप्तंतन्निदर्शनम् ८ यच्चनःसहितान्सर्वान्विराटनगरेतदा ॥ एकएवसमुद्यातःपर्याप्तंतन्निदर्शनम् ९ द्रोणंचयुधिसंरब्धंमांचनिर्जि
त्यसंयुगे ॥ वासांसिससमादत्तपर्याप्तंतन्निदर्शनम् १० तथाद्रौणिंमहेष्वासंशारद्वतमथापिच ॥ गोग्रहेजितवान्पूर्वंपर्याप्तंतन्निदर्शनम् ११ विजित्यचयदाकर्णंसदा
पुरुषमानिनम् ॥ उत्तरायैददौवस्त्रंपर्याप्तंतन्निदर्शनम् १२ निवातकवचान्युद्धेवासवेनापिदुर्जयान् ॥ जितवान्समरेपार्थःपर्याप्तंतन्निदर्शनम् १३ कोहिशक्तोरणेजेतुं
पांडवंरभसंतदा ॥ यस्यगोप्ताजगद्गोप्ताशंखचक्रगदाधरः १४ वासुदेवोऽनन्तशक्तिःसृष्टिसंहारकारकः ॥ सर्वेश्वरोदेवदेवःपरमात्मासनातनः १५ उक्तोऽसिबहुशो
राजन्नारदाद्यैर्महर्षिभिः ॥ त्वंतुमोहान्नजानीषेवाच्यावाच्यंसुयोधन १६ मुमूर्षुर्हिनरःसर्वान्वृक्षान्पश्यतिकांचनान् ॥ तथात्वमपिगांधारेविपरीतानिपश्यसि १७ स्वयंवै
रंमहत्कृत्वापांडवैःसहसृंजयैः ॥ युद्धचस्वतानद्यरणेपश्यामःपुरुषोभव १८ अहंतुसोमकान्सर्वान्पंचालांश्चसमागतान् निहनिष्येनरव्याघ्रवर्जयित्वाशिखंडिनम् १९
तैर्वाऽहंनिहतःसंख्येगमिष्येयमसादनम् ॥ तान्वानिहत्यसमरेप्रीतिंदास्याम्यहंतव २० पूर्वंहिस्त्रीसमुत्पन्नाशिखंडीराजवेश्मनि ॥ वरदानात्पुमान्जातःसैषावैस्त्रीशि
खंडिनी २१ तमहंनहनिष्यामिप्राणत्यागेऽपिभारत ॥ याऽसौप्राङ्निर्मिताधात्रासैषावैस्त्रीशिखंडिनी २२ सुखंस्वपिहिगांधारेश्वोऽस्मिकर्तामहारणम् ॥ यंजनाः
कथयिष्यंतियावत्स्थास्यतिमेदिनी २३ एवमुक्तस्तवसुतोनिर्जगामजनेश्वर ॥ अभिवाद्यगुरुंमूर्ध्नाप्रययौस्वंनिवेशनम् २४

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

आगम्यतुततोराजाविसृज्यचमहाजनम् ॥ प्रविवेशततस्तूर्णंक्षयंशत्रुक्षयंकरः २५ प्रविष्टःसनिशांतांचगमयामासपार्थिव ॥ प्रभातायांचशर्वर्यांप्रातरुत्थायतान्नृपः २६
॥ १२५ ॥ राज्ञःसमाज्ञापयतसेनांयोजयतेतिह ॥ अद्यभीष्मोरणेक्रुद्धोनिहनिष्यतिसोमकान् २७ दुर्योधनस्यतच्छ्रुत्वारात्रौविलपितंबहु ॥ मन्यमानःसतंराजन्प्रत्यादेश अ०
मिवात्मनः २८ निर्वेदंपरमंगत्वाविनिंद्यपरवश्यताम् ॥ दीर्घंदध्यौशांतनवोयोद्धुकामोऽर्जुनंरणे २९ इंगितेनतुतज्ज्ञात्वागांगेयेनविचिंतितम् ॥ दुर्योधनोमहाराज ९८
दुःशासनमचोदयत् ३० दुःशासनरथास्तूर्णंयुज्यंतांभीष्मरक्षिणः ॥ द्वाविंशतिमनीकानिसर्वाण्येवाभिचोदय ३१ इदंहिसमनुप्राप्तंवर्षपूगाभिचिंतितम् ॥ पांडवा
नांससैन्यानांवधोराज्यस्यचागमः ३२ तत्रकार्यतमंमन्येभीष्मस्यैवाभिरक्षणम् ॥ सनोगुप्तःसहायःस्याद्धन्यात्पार्थांश्चसंयुगे ३३ अब्रवीद्धिविशुद्धात्मानाहंहन्यां
शिखंडिनम् ॥ स्त्रीपूर्वकोह्यसौराजंस्तस्माद्वर्ज्योमयारणे ३४ लोकस्तद्वेदयदहंपितुःप्रियचिकीर्षया ॥ राज्यंस्फीतंमहाबाहोस्त्रियश्चत्यक्तवान्पुरा ३५ नैवचाहंस्त्रि
यंजातुनस्त्रीपूर्वंकथंचन ॥ हन्यांयुधिनरश्रेष्ठसत्यमेतद्ब्रवीमिते ३६ अयंस्त्रीपूर्वकोराजञ्छिखंडीयदितेश्रुतः ॥ उद्योगेकथितंयत्ततथाजाताशिखंडिनी ३७ कन्या
भूत्वापुमान्जातःसचमांयोधयिष्यति ॥ तस्याहंप्रमुखेबाणान्नमुंचेयंकथंचन ३८ युद्धेहिक्षत्रियांस्तातपांडवानांजयैषिणः ॥ सर्वानन्यान्हनिष्यामिसंप्राप्तान्रणमू
र्धनि ३९ एवंमांभरतश्रेष्ठगांगेयःप्राहशास्त्रवित् ॥ तत्रसर्वात्मनामन्येगांगेयस्यैवपालनम् ४० अरक्ष्यमाणंहिवृकोहन्यात्सिंहंमहाहवे ॥ मावृकेणेवगांगेयंघातयेम
शिखंडिना ४१ मातुलःशकुनिःशल्यःकृपोद्रोणोविविंशतिः ॥ यत्तारक्षंतुगांगेयंतस्मिन्गुप्तेध्रुवोजयः ४२ एतच्छ्रुत्वातुतेसर्वेदुर्योधनवचस्तदा ॥ सर्वतोरथवंशेनगां
गेयंपर्यवारयन् ४३ पुत्राश्चतवगांगेयंपरिवार्यययुर्मुदा ॥ कंपयंतोभुवंद्यांचक्षोभयंतश्चपांडवान् ४४ तैरथैःसुप्रसंयुक्तैर्दन्तिभिश्चमहारथाः ॥ परिवार्यरणेभीष्मंदंशि
ताःसमवस्थिताः ४५ यथादेवासुरेयुद्धेत्रिदशावज्रधारिणम् ॥ सर्वेतेस्मव्यतिष्ठंतरक्षंतस्तंमहारथम् ४६ ततोदुर्योधनोराजापुनर्भ्रातरमब्रवीत् ॥ सव्यंचक्रंयुधामन्युरुत्त
मौजाश्चदक्षिणम् ४७ गोप्तारावर्जुनस्यैतावर्जुनोऽपिशिखंडिनः ॥ रक्ष्यमाणःसपार्थेनतथाऽस्माभिर्विवर्जितः ४८ यथाभीष्मंननोहन्याद्दुःशासनतथाकुरु ॥ भ्रातुस्त
द्वचनंश्रुत्वापुत्रोदुःशासनस्तव ४९ भीष्मंप्रमुखतःकृत्वाप्रययौसहसेनया ॥ भीष्मंतुरथवंशेनदृष्ट्वासमभिसंवृतम् ५० अर्जुनोरथिनांश्रेष्ठोधृष्टद्युम्नमुवाचह ॥
शिखंडिनंनरव्याघ्रंभीष्मस्यप्रमुखेनृप ॥ स्थापयस्वाद्यपांचाल्यतस्यगोप्ताहमित्युत ५१ इतिश्रीमहाभारतेभीष्मप० भीष्मवधपर्वणि भीष्मदुर्योधनसंवादेअष्टनव
तितमोऽध्यायः ॥ ९८ ॥ ॥ ॥ संजयउवाच ॥ ॥ ततःशांतनवोभीष्मोनिर्ययौसहसेनया ॥ व्यूहंचाव्यूहतमहत्सर्वतोभद्रमात्मनः १ ॥ १२५ ॥

२। ३। ४ ।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६ बलवायसाःबलोदग्राःकाकाः २७।२८ महा

कृपश्चकृतवर्माचशैब्यश्चैवमहारथः ॥ शकुनिःसैन्धवश्चैवकांबोजश्चसुदक्षिणः २ भीष्मेणसहिताःसर्वेपुत्रैश्चतवभारत ॥ अग्रतःसर्वसैन्यानांव्यूहस्यप्रमुखेस्थिताः ३
द्रोणोभूरिश्रवाःशल्योभगदत्तश्चमारिष ॥ दक्षिणंपक्षमाश्रित्यस्थिताव्यूहस्यदंशिताः ४ अश्वत्थामासोमदत्तश्चावंत्यौचमहारथौ ॥ महत्यासेनयायुक्तावामंपक्षमपा
लयन् ५ दुर्योधनोमहाराजत्रिगर्तैःसर्वतोवृतः ॥ व्यूहमध्येस्थितोराजन्पांडवान्प्रतिभारत ६ अलम्बुषोरथश्रेष्ठःश्रुतायुश्चमहारथः ॥ पृष्ठतःसर्वसैन्यानांस्थितौव्यूहस्य
दंशितौ ७ एवंचतंतदाव्यूहंकृत्वाभारततावकाः ॥ सन्नद्धाःसमदृश्यन्तप्रतपन्तइवाग्नयः ८ ततोयुधिष्ठिरोराजाभीमसेनश्चपांडवः ॥ नकुलःसहदेवश्चमाद्रीपुत्रावुभावपि
९ अग्रतःसर्वसैन्यानांस्थिताव्यूहस्यदंशिताः ॥ धृष्टद्युम्नोविराटश्चसात्यकिश्चमहारथः १० स्थिताःसैन्येनमहतापरानीकविनाशनाः ॥ शिखंडीविजयश्चैवराक्षसश्च
घटोत्कचः ११ चेकितानोमहाबाहुःकुंतिभोजश्चवीर्यवान् ॥ स्थितारणेमहाराजमहत्यासेनयावृताः १२ अभिमन्युर्महेष्वासोद्रुपदश्चमहाबलः ॥ युयुधानोमहेष्वासो
युधामन्युश्चवीर्यवान् १३ केकयाभ्रातरश्चैवस्थितायुद्धायदंशिताः ॥ एवंतेऽपिमहाव्यूहंप्रतिव्यूह्यसुदुर्जयम् १४ पांडवाःसमरेशूराःस्थितायुद्धायदंशिताः ॥ ताव
कास्तुरणेयत्ताःसहसेनानराधिपाः १५ अभ्युद्ययूरणेपार्थान्भीष्मंकृत्वाऽग्रतोनृप ॥ तथैवपांडवाराजन्भीमसेनपुरोगमाः १६ भीष्मंयोद्धमभीप्संतःसंग्रामेविजयै
षिणः ॥ क्ष्वेडाःकिलकिलाःशंखान्क्रकचान्गोविषाणिकाः १७ भेरीमृदंगपणवान्नादयंतश्चपुष्करान् ॥ पांडवाअभ्यवर्तंतनदंतोभैरवान्रवान् १८ भेरीमृदंगशंखानां
दुंदुभीनांचनिःस्वनैः ॥ उत्कृष्टसिंहनादैश्चवल्गितैश्चपृथग्विधैः १९ वयंप्रतिनदंतस्तानगच्छामत्वरान्विताः ॥ सहसैवाभिसंक्रुद्धास्तदासीत्तुमुलंमहत् २० ततोऽन्यो
न्यंप्रधावंतःसंप्रहारंप्रचक्रिरे ॥ ततःशब्देनमहताप्रचकंपेवसुंधरा २१ पक्षिणश्चमहाघोरंव्याहरंतोविबभ्रमुः ॥ सप्रभश्चोदितःसूर्योनिष्प्रभःसमपद्यत २२ ववुश्चवाता
स्तुमुलाःशंसंतःसुमहद्भयम् ॥ घोराश्चघोरनिर्ह्रादाःशिवास्तत्रववाशिरे २३ वेदयंत्योमहाराजमहद्वैशसमागतम् ॥ दिशःप्रज्वलिताराजन्पांसुवर्षंपपातच २४ रुधि
रेणसमुन्मिश्रमस्थिवर्षंतथैवच ॥ रुदतांवाहनानांचनेत्रेभ्यःप्रापतज्जलम् २५ सुस्रुवुश्चशकृन्मूत्रंप्रध्यायंतोविशांपते ॥ अंतर्हितामहानादाःश्रूयन्तेभरतर्षभ २६ रक्ष
सांपुरुषादानांनदतांभैरवान्रवान् ॥ संपतंतश्चदृश्यन्तेगोमायुबलवायसाः २७ श्वानश्चविविधैर्नादैर्वाशंतस्तत्रमारिष ॥ ज्वलिताश्चमहोल्कावैसमाहत्यदिवाकरम् ॥
निपेतुःसहसाभूमौवेदयंत्योमहद्भयम् २८ महांत्यनीकानिमहासमुच्छ्रयेततस्तयोःपांडवधार्तराष्ट्रयोः ॥ चकंपिरेशंखमृदङ्गनिःस्वनैःप्रकंपितानीववनानिवायुना २९
नरेंद्रनागाश्वसमाकुलानामभ्यायतीनामशिवेमुहूर्ते ॥ बभूवघोषस्तुमुलश्चमूनांवातोद्धतानामिवसागराणाम् ३० ॥ इतिश्रीमहाभारतेभी० भी० परस्परव्यूहरचना
यांउत्पातदर्शनेऊनशततमोऽध्यायः ॥ ९९ ॥



समुच्छ्रयेमहतियुद्धे । 'युद्धेसमुच्छ्रयःपुमान्'इतिमेदिनी २९ अभ्यायतीनामभिमुखमागच्छंतीनाम् ३० ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे ऊनशततमोऽध्यायः ॥ ९९ ॥ ॥ ॥ ॥

अभिमन्युरिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ लघुमुष्टुचशीघ्रंशोभनंचयथास्यात्तथा १६ । १७ । १८ । १९ । २० । २१ । २२ आर्ष्यशृंगिमलंबुषं

॥ संजयउवाच ॥ अभिमन्यूरथोदारःपिशंगैस्तुरगोत्तमैः ॥ अभिदुद्रावतेजस्वीदुर्योधनबलंमहत् १ विकिरन्शरवर्षाणिवारिधाराइवांबुदः ॥ नशेकुःसमरेक्रुद्धंसौभद्रम
रिसूदनम् २ शस्त्रौघिणंगाहमानंसेनासागरमक्षयम् ॥ निवारयितुमप्याजौत्वदीयाःकुरुनंदन ३ तेनमुक्तारणेराजन्शराःशत्रुनिबर्हणाः ॥ क्षत्रियानानयन्शूरान्प्रेत
राजनिवेशनम् ४ यमदंडोपमान्घोरान्ज्वलिताशीविषोपमान् ॥ सौभद्रःसमरेक्रुद्धःप्रेषयामाससायकान् ५ सरथान्रथिनस्तूर्णंहयांश्चैवससादिनः ॥ गजारोहांश्चस
गजान्दारयामासफाल्गुनिः ६ तस्यतत्कुर्वतःकर्ममहत्संख्येमहीभृतः ॥ पूजयांचक्रिरेहृष्टाःप्रशशंसुश्चफाल्गुनिम् ७ तान्यनीकानिसौभद्रोद्रावयामासभारत ॥ तूल
राशीनिवाकाशेमारुतःसर्वतोदिशम् ८ तेनविद्राव्यमाणानितवसैन्यानिभारत ॥ त्रातारंनाध्यगच्छंतपंकेमग्नाइवद्विपाः ९ विद्राव्यसर्वसैन्यानितावकानिनरोत्तम ॥
अभिमन्युःस्थितोराजन्विधूमोऽग्निरिवज्वलन् १० नचैनंतावकाराजन्विषेहुररिघातिनम् ॥ प्रदीप्तंपावकंयद्वत्पतंगाःकालचोदिताः ११ प्रहरन्सर्वशत्रुभ्यःपांडवानां
महारथः ॥ अदृश्यतमहेष्वासःसवज्रइववासवः १२ हेमपृष्ठंधनुश्चास्यददृशेविचरद्दिशः ॥ तोयदेषुयथाराजन्राजमानाशतह्रदा १३ शराश्चनिशिताःपीतानिश्चरंति
स्मसंयुगे ॥ वनात्फुल्लद्रुमाद्राजन्भ्रमराणामिवव्रजाः १४ तथैवचरतस्तस्यसौभद्रस्यमहात्मनः ॥ रथेनकांचनांगेनददृशुर्नान्तरंजनाः १५ मोहयित्वाकृपंद्रोणंद्रौणिंच
सबृहद्बलम् ॥ सैन्धवंचमहेष्वासोव्यचरल्लघुसुष्टुच १६ मंडलीकृतमेवास्यधनुःपश्याममारत ॥ सूर्यमंडलसंकाशंदहतस्तववाहिनीम् १७ तंदृष्ट्वाक्षत्रियाःशूराःप्रतपंतं
तरस्विनम् ॥ द्विफाल्गुनमिमंलोकंमेनिरेतस्यकर्मभिः १८ तेनार्दितामहाराजभारतीसामहाचमूः ॥ व्यभ्रमत्तत्रतत्रैवयोषिन्मदवशादिव १९ द्रावयित्वामहासैन्यंकंप
यित्वामहारथान् ॥ नंदयामाससुहृदोमयंजित्वेववासवः २० तेनविद्राव्यमाणानितवसैन्यानिसंयुगे ॥ चक्रुरार्तस्वनंघोरंपर्जन्यनिनदोपमम् २१ तंश्रुत्वानिनदंघोरंत
वसैन्यस्यभारत ॥ मारुतोद्धतवेगस्यसागरस्येवपर्वणि २२ दुर्योधनस्तदाराजन्नार्ष्यशृंगिमभाषत ॥ एषकार्ष्णिर्महाबाहोद्वितीयइवफाल्गुनः २३ चमूंद्रावयतेक्रोधा
द्वृत्रोदेवचमूमिव ॥ तस्यचान्यन्नपश्यामिसंयुगेभेषजंमहत् २४ ऋतेत्वांराक्षसश्रेष्ठंसर्वविद्यासुपारगम् ॥ सगत्वात्वरितंवीरंजहिसौभद्रमाहवे २५ वयंपार्थंहनिष्यामो
भीष्मद्रोणपुरोगमाः ॥ सएवमुक्तोबलवान्राक्षसेन्द्रःप्रतापवान् २६ प्रययौसमरेतूर्णंतवपुत्रस्यशासनात् ॥ नर्दमानोमहानादंप्रावृषीवबलाहकः २७ तस्यशब्देनमह
तापांडवानांबलंमहत् ॥ प्राचलत्सर्वतोराजन्वातोद्धूतइवार्णवः २८ बहवश्चमहाराजतस्यनादेनभीषिताः ॥ प्रियान्प्राणान्परित्यज्यनिपेतुर्धरणीतले २९ कार्ष्णिश्चा
पिमुदायुक्तःप्रगृह्यसशरंधनुः ॥ नृत्यन्निवरथोपस्थेतद्रक्षःसमुपाद्रवत् ३० ततःसराक्षसःक्रुद्धःसंप्राप्यैवार्जुनिंरणे ॥ नातिदूरेस्थितांतस्यद्रावयामाससैवचमूम् ३१

२३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ सर्वपारशवैःसर्वलोहमयैः ३९ संस्यूतोग्रथितः ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४

तांवध्यमानांचतथापांडवानांमहाचमूम् ॥ प्रत्युद्ययौरणेरक्षोदेवसेनांयथाबलः ३१ विमर्दःसुमहानासीत्तस्यसैन्यस्यमारिष ॥ रक्षसाघोररूपेणवध्यमानस्यसं
युगे ३२ ततःशरसहस्रैस्तांपांडवानांमहाचमूम् ॥ व्यद्रावयद्रणेरक्षोदर्शयन्स्वपराक्रमम् ३४ सावध्यमानाचतथापांडवानामनीकनी ॥ रक्षसाघोररूपेणप्रदु
द्रावरणेभयात् ३५ प्रमृद्यचरणेसेनांपद्मिनींवारणोयथा ॥ ततोऽभिदुद्रावरणेद्रौपदेयान्महाबलान् ३६ तेतुक्रुद्धामहेष्वासाद्रौपदेयाःप्रहारिणः ॥ राक्षसंदुद्रुवुःसं
ख्येग्रहाःपंचरविंयथा ३७ वीर्यवद्भिस्ततस्तैस्तुपीडितोराक्षसोत्तमः ॥ यथायुगक्षयेघोरेचंद्रमाःपंचभिर्ग्रहैः ३८ प्रतिविंध्यस्ततोरक्षोबिभेदनिशितैःशरैः ॥
सर्वपारशवैस्तूर्णैरकुंठाग्रैर्महाबलः ३९ सतैर्भिन्नतनुत्राणःशुशुभेराक्षसोत्तमः ॥ मरीचिभिरिवार्कस्यसंस्यूतोजलदोमहान् ४० विषक्तैःसशरैश्चापितपनीयपरिच्छ
दैः ॥ आर्ष्यशृंगिर्बभौराजन्दीप्तशृंगइवाचलः ४१ ततस्तेभ्रातरःपंचराक्षसेन्द्रंमहाहवे ॥ विव्यधुर्निशितैर्बाणैस्तपनीयविभूषितैः ४२ सनिर्भिन्नःशरैर्घोरैर्भुज
गैःकोपितैरिव ॥ अलंबुषोभृशंराजन्नागेन्द्रइवचुकुधे ४३ सोऽतिविद्धोमहाराजमुहूर्तमथमारिष ॥ प्रविवेशतमोदीर्घंपीडितस्तैर्महारथैः ४४ प्रतिलभ्यततःसं
ज्ञांक्रोधेनद्विगुणीकृतः ॥ चिच्छेदसायकांस्तेषांध्वजांश्चैवधनूंषिच ४५ एकैकंपंचभिर्बाणैराजघानस्मयन्निव ॥ अलम्बुषोरथोपस्थेनृत्यन्निवमहारथः ४६ त्वरमा
णःसुसंरब्धोहयांस्तेषांमहात्मनाम् ॥ जघानराक्षसःक्रुद्धःसारथींश्चमहाबलः ४७ बिभेदचसुसंरब्धःपुनश्चैनान्सुसंशितैः ॥ शरैर्बहुविधाकारैःशतशोऽथसहस्रशः
४८ विरथांश्चमहेष्वासान्कृत्वातत्रसराक्षसः ॥ अभिदुद्राववेगेनहन्तुकामोनिशाचरः ४९ तानर्दितान्रणेतेनराक्षसेनदुरात्मना ॥ दृष्ट्वाऽर्जुनसुतःसंख्येराक्षसंस
मुपाद्रवत् ५० तयोःसमभवद्युद्धंवृत्रवासवयोरिव ॥ ददृशुस्तावकाःसर्वेपांडवाश्चमहारथाः ५१ तौसमेतौमहायुद्धेक्रोधदीप्तौपरस्परम् ॥ महाबलौमहाराजक्रो
धसंरक्तलोचनौ ५२ परस्परमवेक्षेतांकालानलसमौयुधि ॥ तयोःसमागमोघोरोबभूवकटुकोदयः ५३ यथादेवासुरेयुद्धेशक्रशंबरयोःपुरा ५४ ॥ ॥ इतिश्री
महाभा०भीष्मपर्वणिभीष्मव०अलंबुषाभिमन्युसमागमेशततमोऽध्यायः ॥ १०० ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ आर्जुनिंसमरेशूरंविनिघ्नन्तंमहारथान् ॥
अलंबुषःकथंयुद्धेप्रत्ययुध्यतसंजय १ आर्ष्यशृंगिंकथंचैवसौभद्रःपरवीरहा ॥ तन्ममाचक्ष्वतत्त्वेनयथावृत्तंस्मसंयुगे २ धनंजयश्चकिंचक्रेममसैन्येषुसंयुगे ॥ भीमो
वारथिनांश्रेष्ठोराक्षसोवाघटोत्कचः ३ नकुलःसहदेवोवासात्यकिर्वामहारथः ॥ एतदाचक्ष्वमेसत्यंकुशलोह्यसिसंजय ४ ॥ संजयउवाच ॥ हंततेऽहंप्रवक्ष्यामिसंग्रा
मंलोमहर्षणम् ॥ यथाऽभूद्राक्षसेन्द्रस्यसौभद्रस्यचमारिष ५ अर्जुनश्चयथासंख्येभीमसेनश्चपांडवः ॥ नकुलःसहदेवश्चरणेचक्रुःपराक्रमम् ६ तथैवतावकाःसर्वे
भीष्मद्रोणपुरःसराः ॥ अद्भुतानिविचित्राणिचक्रुःकर्माण्यभीतवत् ७

॥ इति० भी०नी०भा० शततमोऽध्यायः ॥ १०० ॥ आर्जुनिमिति ॥ १ । २ । ३ । ४ । ५ । ६ । ७

अलंबुषस्तुसमरेअभिमन्युंमहारथम् ॥ विनद्यसुमहानादंतर्जयित्वामुहुर्मुहुः ८ अभिदुद्राववेगेनतिष्ठतिष्ठेतिचाब्रवीत् ॥ अभिमन्युश्चवेगेनसिंहवद्विनदन्मुहुः
९ आर्ष्यशृंगिंमहेष्वासंपितुरत्यंतवैरिणम् ॥ ततःसमीयतुःसंख्येत्वरितौनरराक्षसौ १० रथाभ्यांरथिनौश्रेष्ठौयथावैदेवदानवौ ॥ मायावीराक्षसश्रेष्ठोदिव्यास्त्र
श्चैवफाल्गुनिः ११ ततःकार्ष्णिर्महाराजनिशितैःसायकैस्त्रिभिः ॥ आर्ष्यशृंगिंरणेविध्वापुनर्विव्याधपंचभिः १२ अलंबुषोऽपिसंक्रुद्धःकार्ष्णिंनवभिराशुगैः ॥
हृदिविव्याधवेगेनतोत्रैरिवमहाद्विपम् १३ ततःशरसहस्रेणक्षिप्रकारीनिशाचरः ॥ अर्जुनस्यसुतंसंख्येपीडयामासभारत १४ अभिमन्युस्ततःक्रुद्धोनवभिर्न
तपर्वभिः ॥ बिभेदनिशितैर्बाणैराक्षसेन्द्रंमहोरसि १५ तेतस्यविविशुस्तूर्णंकायंनिर्भिद्यमर्मसु ॥ सतैर्विभिन्नसर्वांगःशुशुभेराक्षसोत्तमः १६ पुष्पितैःकिंशुकैराज
न्संस्तीर्णइवपर्वतः ॥ संधारयाणश्चशरान्हेमपुंखान्महाबलः १७ विबभौराक्षसश्रेष्ठःसज्वालइवपर्वतः ॥ ततःक्रुद्धोमहाराजआर्ष्यशृंगिरमर्षणः १८ महेंद्रप्रति
मंकार्ष्णिंछादयामासपत्रिभिः ॥ तेनतेविशिखामुक्तायमदंडोपमाःशिताः १९ अभिमन्युंविनिर्भिद्यप्राविशंतधरातलम् ॥ तथैवार्जुनिनामुक्ताःशराःकनकभू
षणाः २० अलंबुषंविनिर्भिद्यप्राविशंतधरातलम् ॥ सौभद्रस्तुरणेरक्षःशरैःसन्नतपर्वभिः २१ चक्रेविमुखमासाद्यमयंशक्रइवाहवे ॥ विमुखंचरणेरक्षोवध्यमा
नंरणेऽरिणा २२ प्रादुश्चक्रेमहामायांतामसींपरतापनाम् ॥ ततस्तेतमसासर्वेवृताश्चासन्महीपते २३ नाभिमन्युमपश्यंतनैवस्वान्नपरान्रणे ॥ अभिमन्युश्च
तद्दृष्ट्वाघोररूपंमहत्तमः २४ प्रादुश्चक्रेऽस्त्रमत्युग्रंभास्करंकुरुनंदनः ॥ ततःप्रकाशमभवज्जगत्सर्वंमहीपते २५ तांचाभिजघ्निवान्मायांराक्षसस्यदुरात्मनः ॥
संक्रुद्धश्चमहावीर्योराक्षसेन्द्रंनरोत्तमः २६ छादयामाससमरेशरैःसन्नतपर्वभिः ॥ बह्वीस्तथान्यामायाश्चप्रयुक्तास्तेनरक्षसा २७ सर्वास्त्रविदमेयात्मावारयामास
फाल्गुनिः ॥ हतमायंततोरक्षोवध्यमानंचसायकैः २८ रथंतत्रैवसंत्यज्यप्राद्रवन्महतोभयात् ॥ तस्मिन्विनिर्जितेतूर्णंकूटयोधिनिराक्षसे २९ आर्जुनिःस
मरेसैन्यंतावकंसंममर्दह ॥ मदांधोवनगंधनागेंद्रःसपद्मांमब्जिनीमिव ३० ततःशांतनवोभीष्मःसैन्यंदृष्ट्वाऽभिविद्रुतम् ॥ महताशरवर्षेणसौभद्रंपर्यवारयत् ३१ कोष्ठी
कृत्यचतंवीरंधार्तराष्ट्रामहारथाः ॥ एकंसुबहवोयुद्धेततक्षुःसायकैर्दृढम् ३२ सतेषांरथिनांवीरःपितुस्तुल्यपराक्रमः ॥ सदृशोवासुदेवस्यविक्रमेणबलेनच ३३ उभयोः
सदृशंकर्मसपितुर्मातुलस्यच ॥ रणेबहुविधंचक्रेसर्वशस्त्रभृतांवरः ३४ ततोधनंजयोवीरोविनिघ्नंस्तवसैनिकान् ॥ आससादरणेभीष्मंपुत्रप्रेप्सुरमर्षणः ३५ तथैवसम
रेराजन्पितादेवव्रतस्तव ॥ आससादरणेपार्थंस्वर्भानुरिवभास्करम् ३६ ततःसरथनागाश्वाःपुत्रास्तवजनेश्वर ॥ परिवव्रूरणेभीष्मंजुगुपुश्चसमंततः ३७ तथैवपांडवा
राजन्परिवार्यधनंजयम् ॥ रणायमहतेयुक्तादंशिताभरतर्षभ ३८

शारद्वतस्ततोराजन्भीष्मस्यप्रमुखेस्थितम् ॥ अर्जुनंपंचविंशत्यासायकानांसमाचिनोत् ३९ प्रत्युद्गम्याथविव्याधसात्यकिस्तंशितैःशरैः ॥ पांडवप्रियकामार्थंशा
र्दूलइवकुंजरम् ४० गौतमोऽपित्वरायुक्तोमाधवंनवभिःशरैः ॥ हृदिविव्याधसंक्रुद्धःकंकपत्रपरिच्छदैः ४१ शैनेयोऽपिततःक्रुद्धश्चापमानम्यवेगवान् ॥ गौतमांत
करंतूर्णंसमाधत्तशिलीमुखम् ४२ तमापतंतंवेगेनशक्राशनिसमद्युतिम् ॥ द्विधाचिच्छेदसंक्रुद्धोद्रौणिःपरमकोपनः ४३ समुत्सृज्याथशैनेयोगौतमंरथिनांवरः ॥ अ
भ्यद्रवद्रणेद्रौणिंराहुःखेशशिनंयथा ४४ तस्यद्रोणसुतश्चापंद्विधाचिच्छेदभारत ॥ अथैनंछिन्नधन्वानंताडयामाससायकैः ४५ सोऽन्यत्कार्मुकमादायशत्रुघ्नंभा
रसाधनम् ॥ द्रौणिंषष्ट्यामहाराजबाह्वोरुरसिचार्पयत् ४६ सविद्धोव्यथितश्चैवमुहूर्तंकश्मलायुतः ॥ निषसादरथोपस्थेध्वजयष्टिंसमाश्रितः ४७ प्रतिलभ्यततः
संज्ञांद्रोणपुत्रःप्रतापवान् ॥ वार्ष्णेयंसमरेक्रुद्धोनाराचेनसमार्पयत् ४८ शैनेयंसतुनिर्भिद्यप्राविशद्धरणीतलम् ॥ वसंतकालेबलवान्बिलंसर्पशिशुर्यथा ४९ अथापरे
णभल्लेनमाधवस्यध्वजोत्तमम् ॥ चिच्छेदसमरेद्रौणिःसिंहनादंमुमोचह ५० पुनश्चैनंशरैर्घोरैश्छादयामासभारत ॥ निदाघांतेमहाराजयथामेघोदिवाकरम् ५१ सा
त्यकोऽपिमहाराजशरजालंनिहत्यतत् ॥ द्रौणिमभ्यकिरत्तूर्णंशरजालैरनेकधा ५२ तापयामाससचद्रौणिंशैनेयःपरवीरहा ॥ विमुक्तोमेघजालेनयथैवतपनस्तथा
५३ शराणांचसहस्रेणपुनरेवसमुद्यतः ॥ सात्यकिश्छादयामासननादचमहाबलः ५४ दृष्ट्वापुत्रंचतंग्रस्तंराहुणेवनिशाकरम् ॥ अभ्यद्रवतशैनेयंभारद्वाजःप्रतापवान्
५५ विव्याधचसुतीक्ष्णेनपृषत्केनमहामृधे ॥ परीप्सन्स्वसुतंराजन्वार्ष्णेयेनाभिपीडितम् ५६ सात्यकिस्तुरणेहित्वागुरुपुत्रंमहारथम् ॥ द्रोणंविव्याधविंशत्यासर्वपारशवैः
शरैः ५७ तदंतरममेयात्माकौन्तेयःशत्रुतापनः ॥ अभ्यद्रवद्रणेक्रुद्धोद्रोणंप्रतिमहारथः ५८ ततोद्रोणश्चपार्थश्चसमेयेतांमहामृधे ॥ यथाबुधश्चशुक्रश्चमहाराजनभ
स्तले ५९ ॥ इतिश्रीम० भीष्म० भीष्मव० अलंबुषाभिमन्युयुद्धेएकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ धृतराष्ट्रउवाच ॥ कथंद्रोणोमहेष्वासःपांडवश्चधनं
जयः ॥ समीयतूरणेयत्तौतावुभौपुरुषर्षभौ १ प्रियोहिपांडवोनित्यंभारद्वाजस्यधीमतः ॥ आचार्यश्चरणेनित्यंप्रियःपार्थस्यसंजय २ तावुभौरथिनौसंख्येहृष्टौसिंहावि
वोत्कटौ ॥ कथंसमीयतुर्यत्तौभारद्वाजधनंजयौ ३ ॥ संजयउवाच ॥ नद्रोणःसमरेपार्थंजानीतेप्रियमात्मनः ॥ क्षत्रधर्मंपुरस्कृत्यपार्थोवागुरुमाहवे ४ नक्षत्रियारणे
राजन्वर्जयंतिपरस्परम् ॥ निर्मर्यादंहियुध्यंतेपितृभिर्भ्रातृभिःसह ५ रणेभारतपार्थेनद्रोणोविद्धस्त्रिभिःशरैः ॥ नाचिंतयच्चतान्बाणान्पार्थचापच्युतान्युधि ६ शरवृ
ष्ट्यापुनःपार्थश्छादयामासतंरणे ॥ सप्रजज्वालरोषेणगहनेऽग्निरिवोर्जितः ७ ततोऽर्जुनंरणेद्रोणःशरैःसन्नतपर्वभिः ॥ छादयामासराजेन्द्रनचिरादेवभारत ८ ततोदुर्यो
धनोराजासुशर्माणमचोदयत् ॥ द्रोणस्यसमरेराजन्पार्ष्णिग्रहणकारणात् ९

१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६।२७।२८।२९।३० ३१।३२।३३।३४।३५।३६।३७ ३८।३९ इतिभी०नी० भारतभावदीपे

त्रिगर्तराडपिक्रुद्धोभृशमायम्यकार्मुकम् ॥ छादयामाससमरेपार्थंबाणैरयोमुखैः १० ताभ्यांमु[illegible]ाःशराराजन्नन्तरिक्षेविरेजिरे ॥ हंसाइवमहाराजशरत्कालेनभस्तले
११ तेशराःप्राप्यकौन्तेयंसमंताद्विविशुःप्रभो ॥ फलभारनतंयद्वत्स्वादुवृक्षंविहंगमाः १२ अर्जुनस्तुरणेनादंविनद्यरथिनांवरः ॥ त्रिगर्तराजंसमरेसपुत्रंविव्यधेशरैः १३
तेवध्यमानाःपार्थेनकालेनेवयुगक्षये ॥ पार्थमेवाभ्यवर्ततमरणेकृतनिश्चयाः १४ मुमुचुःशरवृष्टिंचपांडवस्यरथंप्रति ॥ शरवृष्टिंततस्तांतुशरवर्षैःसमंततः १५ प्रतिज
ग्राहराजेंद्रतोयवृष्टिमिवाचलः ॥ तत्राद्भुतमपश्यामबीभत्सोर्हस्तलाघवम् १६ विमुक्तांबहुभिर्योधैःशस्त्रवृष्टिंदुरासदाम् ॥ यदेकोवारयामासमारुतोऽभ्रगणानिव १७
कर्मणातेनपार्थस्यतुतुषुर्देवदानवाः ॥ अथक्रुद्धोरणेपार्थस्त्रिगर्तान्प्रतिभारत १८ मुमोचास्त्रंमहाराजवायव्यंपृतनामुखे ॥ प्रादुरासीत्ततोवायुःक्षोभयाणोनभस्तलम्
१९ पातयन्वैतरुगणान्विनिघ्नंश्चैवसैनिकान् ॥ ततोद्रोणोऽभिवीक्ष्यैववायव्यास्त्रंसुदारुणम् २० शैलमन्यन्महाराजघोरमस्त्रंमुमोचह ॥ द्रोणेनयुधिनिर्मुक्तेतस्मिन्नस्त्रे
नराधिप २१ प्रशशामततोवायुःप्रसन्नाश्चदिशोदश ॥ ततःपांडुसुतोवीरस्त्रिगर्तस्यरथव्रजान् २२ निरुत्साहान्रणेचक्रेविमुखान्विपराक्रमान् ॥ ततोदुर्योधनश्चैवकृप
श्चरथिनांवरः २३ अश्वत्थामातथाशल्यःकांबोजश्चसुदक्षिणः ॥ विंदानुविंदावावन्त्यौवाह्लिकःसहबाल्हिकैः २४ महतारथवंशेनपार्थस्यावारयन्दिशः ॥ तथैवभग
दत्तश्चश्रुतायुश्चमहाबलः २५ गजानीकेनभीमस्यतावारयतांदिशः ॥ भूरिश्रवाःशलश्चैवसौबलश्चविशांपते २६ शरौघैर्विमलैस्तीक्ष्णैर्माद्रीपुत्राववारयन् ॥
भीष्मस्तुसंहतःसंख्येधार्तराष्ट्रैःससैनिकैः २७ युधिष्ठिरंसमासाद्यसर्वतःपर्यवारयत् ॥ आपतंतंगजानीकंदृष्ट्वापार्थोवृकोदरः २८ लेलिहन्सृक्किणीवीरोमृगराडिवका
नने ॥ भीमस्तुरथिनांश्रेष्ठोगदांगृह्यमहाहवे २९ अवप्लुत्यरथात्तूर्णंतवसैन्यान्यभीषयत् ॥ तमुद्वीक्ष्यगदाहस्तंततस्तेगजसादिनः ३० परिवव्रूरणेयत्ताभीमसेनंसमं
ततः ॥ गजमध्यमनुप्राप्तःपांडवःसव्यराजत ३१ मेघजालस्यमहतोयथामध्यगतोरविः ॥ व्यधमत्सगजानीकंगदयापांडवर्षभः ३२ महाभ्रजालमतुलंमातरिश्वेवसंत
तम् ॥ तेवध्यमानाबलिनाभीमसेनेनदंतिनः ३३ आर्तनादंरणेचक्रुर्गर्जन्तोजलदाइव ॥ बहुधादारितश्चैवविषाणैस्तत्रदन्तिभिः ३४ फुल्लाशोकनिभःपार्थःशुशुभेरण
मूर्धनि ॥ विषाणेदंतिनंगृह्यनिर्विषाणमथाकरोत् ३५ विषाणेनचतेनैवकुंभेऽभ्याहत्यदंतिनम् ॥ पातयामाससमरेदंडहस्तइवांतकः ३६ शोणिताक्तांगदांबिभ्रन्मेदो
मज्जाकृतच्छविः ॥ कृताभ्यंगःशोणितेनरुद्रवत्प्रत्यदृश्यत ३७ एवंतेवध्यमानाश्चहतशेषामहागजाः ॥ प्राद्रवंतदिशोराजन्विमृद्नंतःस्वकंबलम् ३८ द्रवद्भिस्तैर्महानागैः
समंताद्भरतर्षभ ॥ दुर्योधनबलंसर्वंपुनरासीत्पराङ्मुखम् ३९ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणिभीमपराक्रमेद्व्यधिकशततमोऽध्यायः ॥ १०२

द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

मध्यंदिनइति १ । २ । ३ । ४ । ५ । ६ स्त्रीमयं अयंभीष्मःस्त्रींध्यात्वाचिंतयित्वा यद्वास्त्रीमयंस्त्रार्थमयद् ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१

॥ संजयउवाच ॥ मध्यंदिनेमहाराजसंग्रामःसमपद्यत ॥ लोकक्षयकरोरौद्रोभीष्मस्यसहसोमकैः १ गांगेयोरथिनांश्रेष्ठःपांडवानामनीकिनीम् ॥ व्यधमन्निशि
तैर्बाणैःशतशोऽथसहस्रशः २ संममर्दचतत्सैन्यंपितादेवव्रतस्तव ॥ धान्यानामिवलूनानांप्रकरंगोगणाइव ३ धृष्टद्युम्नःशिखंडीचविराटोद्रुपदस्तथा ॥ भीष्ममा
साद्यसमरेशरैर्जघ्नुर्महारथम् ४ धृष्टद्युम्नंततोविध्वाविराटंचशरैस्त्रिभिः ॥ द्रुपदस्यचनाराचंप्रेषयामासभारत ५ तेनविद्धामहेष्वासाभीष्मेणामित्रकर्षिणा ॥ चुक्रु
धुःसमरेराजन्पादस्पृष्टाइवोरगाः ६ शिखंडीतंचविव्याधभरतानांपितामहम् ॥ स्त्रीमयंमनसाध्यात्वानास्मैप्राहरदच्युतः ७ धृष्टद्युम्नस्तुसमरेक्रोधेनाग्निरिव
ज्वलन् ॥ पितामहंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत् ८ द्रुपदःपंचविंशत्याविराटोदशभिःशरैः ॥ शिखंडीपंचविंशत्याभीष्मंविव्याधसायकैः ९ सोऽतिविद्धोमहारा
जशोणितौघपरिप्लुतः ॥ वसंतेपुष्पशबलोरक्ताशोकइवाबभौ १० तान्प्रत्यविध्यद्गांगेयस्त्रिभिस्त्रिभिरजिह्मगैः ॥ द्रुपदस्यचभल्लेनधनुश्चिच्छेदमारिष ११ सोऽन्यत्कार्मु
कमादायभीष्मंविव्याधपंचभिः ॥ सारथिंचत्रिभिर्बाणैःसुशितैरणमूर्धनि १२ तथाभीमोमहाराजद्रौपद्याःपंचचात्मजाः ॥ केकयाभ्रातरःपंचसात्यकिश्चैवसात्वतः
१३ अभ्यद्रवंतगांगेयंयुधिष्ठिरपुरोगमाः ॥ रिरक्षिषंतःपांचाल्यंधृष्टद्युम्नपुरोगमाः १४ तथैवतावकाःसर्वेभीष्मरक्षार्थमुद्यताः ॥ प्रत्युद्ययुःपांडुसेनांसहसैन्यानरा
धिप १५ तत्रासीत्सुमहद्युद्धंतववतेषांचसंकुलम् ॥ नराश्वरथनागानांयमराष्ट्रविवर्धनम् १६ रथीरथिनमासाद्यप्राहिणोद्यमसादनम् ॥ तथेतरान्समासाद्यनरनागा
श्वसादिनः १७ अनयन्परलोकायशरैःसन्नतपर्वभिः ॥ शरैश्चविविधैर्घोरैस्तत्रतत्रविशांपते १८ रथास्तुरथिभिर्हीनाहतसारथयस्तथा ॥ विप्रद्रुताश्वसमरेदिशो
जग्मुःसमंततः १९ मृद्नंतस्तेनरान्राजन्हयांश्चसुबहून्रणे ॥ वातायमानादृश्यंतेगंधर्वनगरोपमाः २० रथिनश्चरथैर्हीनावर्मिणस्तेजसायुताः ॥ कुण्डलोष्णीषिणः
सर्वेनिष्कांगदविभूषणाः २१ देवपुत्रसमाःसर्वेशौर्येशक्रसमायुधि ॥ ऋद्ध्यावैश्रवणंचातिनयेनचबृहस्पतिम् २२ सर्वलोकेश्वराःशूरास्तत्रतत्रविशांपते ॥ विप्रद्रुताव्य
दृश्यंतप्राकृताइवमानवाः २३ दंतिनश्चनरश्रेष्ठहीनाःपरमसादिभिः ॥ मृद्नंतःस्वान्यनीकानिनिपेतुःसर्वशब्दगाः २४ चर्मभिश्चामरैश्चित्रैःपताकाभिश्चमारिष ॥
छत्रैःसितैर्हेमदण्डैश्चामरैश्चसमंततः २५ विशीर्णैर्विप्रधावंतोदृश्यंतेस्मदिशोदश ॥ नवमेघप्रतीकाशाजलदोपमनिःस्वनाः २६ तथैवदंतिभिर्हीनागजारोहाविशां
पते ॥ प्रधावंतोऽन्वदृश्यंततववतेषांचसंकुले २७ नानादेशसमुत्थांश्चतुरगान्हेमभूषितान् ॥ वातायमानानद्राक्षंशतशोऽथसहस्रशः २८ अश्वारोहान्हतैरश्वैर्गृहीता
सीन्समंततः ॥ द्रवमाणानपश्यामद्राव्यमाणांश्चसंयुगे २९ गजोगजंसमासाद्यद्रवमाणंमहाहवे ॥ ययौप्रमृद्यतरसापादातान्वाजिनस्तथा ३०


वैश्रवणंकुबेरंचातिअतिक्रांताः २२ । २३ । २४ । २५ । २६ । २७ अद्राक्षमहंसंजयः २८ । २९ । ३०

३१ । ३२ । ३३ । ३४ । । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । आगस्कृदपराधी ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ॥ इतिभीष्मपर्वणि नीलकंठीये भारतभावदीपे त्र्यधिकशततमोऽध्यायः

तथैवचरथान्राजन्प्रममर्दरणेगजः ॥ रथाश्चैवसमासाद्यपतितांस्तुरगान्भुवि ३१ व्यमृद्नन्समरेराजंस्तुरगांश्चनरान्रणे ॥ एवंतेबहुधाराजन्प्रत्यमृद्नन्परस्प
रम् ३२ तस्मिन्रौद्रेतथायुद्धेवर्तमानेमहाभये ॥ प्रावर्ततनदीघोराशोणितांत्रतरंगिणी ३३ अस्थिसंघातसंबाधाकेशशैवलशाद्वला ॥ रथह्रदाशरावर्ताहयमी
नादुरासदा ३४ शीर्षोपलसमाकीर्णाहस्तिग्राहसमाकुला ॥ कवचोष्णीषफेनौघाधनुर्वेगासिकच्छपा ३५ पताकाध्वजवृक्षाढ्यामर्त्यकूलापहारिणी ॥
क्रव्यादहंससंकीर्णायमराष्ट्रविवर्धनी ३६ तांनदींक्षत्रियाःशूरारथनागहयप्लवैः ॥ प्रतेरुर्बहवोराजन्भयंत्यक्तामहारथाः ३७ अपोवाहरणेभीरून्कश्मलेनाभिसं
वृतान् ॥ यथावैतरणीप्रेतान्प्रेतराजपुरंप्रति ३८ प्राक्रोशन्क्षत्रियास्तत्रदृष्ट्वातद्वैशसंमहत् ॥ दुर्योधनापराधेनगच्छंतिक्षत्रियाःक्षयम् ३९ गुणवत्सुकथंद्वेषंधृ
तराष्ट्रोजनेश्वरः ॥ कृतवान्पांडुपुत्रेषुपापात्मालोभमोहितः ४० एवंबहुविधावाचःश्रूयन्तेस्मपरस्परम् ॥ पांडवस्तवसंयुक्ताःपुत्राणांतेसुदारुणाः ४१ तानि
शम्यततोवाचःसर्वयोधैरुदाहृताः ॥ आगस्कृत्सर्वलोकस्यपुत्रोदुर्योधनस्तव ४२ भीष्मंद्रोणंकृपंचैवशल्यंचोवाचभारत ॥ युध्यध्वमनहंकाराःकिंचिरंकुरुथे
तिच ४३ ततःप्रववृतेयुद्धंकुरूणांपांडवैःसह ॥ अक्षद्यूतकृतंराजन्सुघोरंवैशसंतदा ४४ यत्पुरानिगृह्णासिवार्यमाणोमहात्मभिः ॥ वैचित्रवीर्यतस्येदंफलंप
श्यसुदारुणम् ४५ नहिपांडुसुताराजन्ससैन्याःसपदानुगाः ॥ रक्षंतिसमरेप्राणान्कौरवावापिसंयुगे ४६ एतस्मात्कारणाद्घोरोवर्ततेस्वजनक्षयः ॥ दैवाद्वापुरु
षव्याघ्रतवचापनयान्नृप ४७ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणिसंकुलयुद्धेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ ॥ संजयउवाच ॥
अर्जुनस्तान्नरव्याघ्रःसुशर्मानुचरान्नृपान् ॥ अनयत्प्रेतराजस्यसदनंसायकैःशितैः १ सुशर्माऽपिततोबाणैःपार्थंविव्याधसंयुगे ॥ वासुदेवंचसप्तत्यापार्थंचनव
भिःपुनः २ तंनिवार्यशरौघेणशक्रसूनुर्महारथः ॥ सुशर्मणोरणेयोधान्प्राहिणोद्यमसादनम् ३ तेवध्यमानाःपार्थेनकालेनेवयुगक्षये ॥ व्यद्रवंतरणेराजन्भये
जातेमहारथः ४ उत्सृज्यतुरगान्केचिद्रथान्केचिच्चमारिष ॥ गजानन्येसमुत्सृज्यप्राद्रवंतदिशोदश ५ अपरेतुतदाऽऽदायवाजिनागरथान्रणे ॥ त्वरयापरयायु
क्ताःप्राद्रवंतविशांपते ६ पादाताश्चापिशस्त्राणिसमुत्सृज्यमहारणे ॥ निरपेक्षाव्यधावंततेनतेनस्मभारत ७ वार्यमाणाःसुबहुशस्त्रैगर्तेनसुशर्मणा ॥ तथाऽन्यैः
पार्थिवश्रेष्ठैर्नव्यतिष्ठंतसंयुगे ८ तद्बलंप्रद्रुतंदृष्ट्वापुत्रोदुर्योधनस्तव ॥ पुरस्कृत्यरणेभीष्मंसर्वसैन्यपुरस्कृतः ९ सर्वोद्योगेनमहताधनंजयमुपाद्रवत् ॥ त्रिगर्ताधिपते
रर्थेजीवितस्यविशांपते १० सएकःसमरेतस्थौकिरन्बहुविधान्शरान् ॥ भ्रातृभिःसहितःसर्वैःशेषाहिप्रद्रुतानराः ११

॥ १०३ ॥ अर्जुनइति १ । २ । ३ । ४ । ५ । ६ तेनतेनपथा ७ । ८ । ९ । १० । ११

१२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ महामात्रौश्रेष्ठौ २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ भारतंभीष्मम् । लोमवाहिभिःलोमच्छेदकैः २९ । ३० । ३१ । ३२

तथैवपांडवाराजन्सर्वोद्योगेनदंशिताः ॥ प्रययुःफाल्गुनार्थाययत्रभीष्मोऽव्यतिष्ठत १२ ज्ञायमानारणेवीर्यंघोरंगांडीवधन्वनः ॥ हाहाकारकृतोत्साहाभीष्मंजग्मुःसमं
ततः १३ ततस्तालध्वजःशूरःपांडवानांवरूथिनीम् ॥ छादयामाससमरेशरैःसन्नतपर्वभिः १४ एकीभूतास्ततःसर्वेकुरवःसहपांडवैः ॥ अयुध्यंतमहाराजमध्यंप्राप्तेदिवाकरे
१५ सात्यकिःकृतवर्माणंविध्वापंचभिराशुगैः ॥ अतिष्ठदाहवेशूरःकिरन्बाणान्सहस्रशः १६ तथैवद्रुपदोराजाद्रोणंविद्धाशितैःशरैः ॥ पुनर्विव्याधसप्तत्यासारथिंचास्य
पंचभिः १७ भीमसेनस्तुराजानंबाल्हीकंप्रपितामहम् ॥ विद्धानदन्महानादंशार्दूलइववकानने १८ आर्जुनिश्चित्रसेनेनविद्धोबहुभिराशुगैः ॥ अतिष्ठदाहवेशूरःकिरन्बा
णान्सहस्रशः १९ चित्रसेनंत्रिभिर्बाणैर्विव्याधसमरेभृशम् ॥ समागतौतौतुरणेमहामात्रौव्यरोचताम् २० यथादिविमहाघोरौराजन्बुधशनैश्चरौ ॥ तस्याश्वांश्चतुरोह
त्वासूतंचनवभिःशरैः २१ ननादबलवान्नादंसौभद्रःपरवीरहा ॥ हताश्वात्तुरथात्तूर्णंसोऽवप्लुत्यमहारथः २२ आरुरोहरथंतूर्णंदुर्मुखस्यविशांपते ॥ द्रोणश्चद्रुपदंभित्त्वा
शरैःसन्नतपर्वभिः २३ सारथिंचास्यविव्याधत्वरमाणःपराक्रमी ॥ पीड्यमानस्ततोराजाद्रुपदोवाहिनीमुखे २४ अपायाज्जवनैरश्वैःपूर्ववैरमनुस्मरन् ॥ भीमसेनस्तु
राजानंमुहूर्तादिवबाह्लिकम् २५ व्यश्वसूतरथंचक्रेसर्वसैन्यस्यपश्यतः ॥ ससंभ्रमोमहाराजसंशयंपरमंगतः २६ अवप्लुत्यततोवाहाद्बाह्लीकःपुरुषोत्तमः ॥ आरुरोह
रथंतूर्णंलक्ष्मणस्यमहारणे २७ सात्यकिःकृतवर्माणंवारयित्वामहारणे ॥ शरैर्बहुविधैराजन्नाससादपितामहम् २८ सविध्वाभारतंषष्ट्यानिशितैर्लोमवाहिभिः ॥ नृत्य
न्निवरथोपस्थेविधुन्वानोमहद्धनुः २९ तस्यायसींमहाशक्तिंचिक्षेपाथपितामहः ॥ हेमचित्रांमहावेगांनागकन्योपमांशुभाम् ३० तामापतंतींसहसामृत्युकल्पांसुदुर्ज
याम् ॥ व्यंसयामासवार्ष्णेयोलाघवेनमहायशाः ३१ अनासाद्यतुवार्ष्णेयंशक्तिःपरमदारुणा ॥ न्यपतद्धरणीपृष्ठेमहोल्केवमहाप्रभा ३२ वार्ष्णेयस्तुततोराजन्स्वांश
क्तिंकनकप्रभाम् ॥ वेगवद्गृह्यचिक्षेपपितामहरथंप्रति ३३ वार्ष्णेयभुजवेगेनप्रणुन्नासामहाहवे ॥ अभिदुद्राववेगेनकालरात्रिर्यथानरम् ३४ तामापतंतींसहसाद्विधाचि
च्छेदभारतः ॥ क्षुरप्राभ्यांसुतीक्ष्णाभ्यांसाव्यशीर्यतमेदिनीम् ३५ छित्वाशक्तिंतुगांगेयःसात्यकिंनवभिःशरैः ॥ आजघानोरसिक्रुद्धःप्रहसञ्छत्रुकर्शनः ३६ ततःसर
थनागाश्वाःपांडवाःपांडुपूर्वजाः ॥ परिवव्रूरणेभीष्मंमाधवत्राणकारणात् ३७ ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणम् ॥ पांडवानांकुरूणांचसमरेविजयैषिणाम् ३८ ॥
इतिश्रीमहाभारते भीष्मपर्वणि भीष्मवधपर्वणि वार्ष्णेययुद्धेचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ ॥ ॥ संजयउवाच ॥ दृष्ट्वाभीष्मंरणेक्रुद्धंपांडवैरभिसंवृ
तम् ॥ यथामेघैर्महाराजतपांतेदिविभास्करम् १

३३ । ३४ मेदिनींप्राप्येतिशेषः ३५ । ३६ माधवःसात्यकिः ३७ । ३८ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ ॥ दृष्ट्वेति १

२।३।४।५।६। ७ ततइति। सैन्येनेतिपूर्वस्मादनुकृष्यते हयानांसैन्येनपरिवार्यन्यवारयदितितृतीयेनान्वयः ८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३

दुर्योधनोमहाराजदुःशासनमभाषत ॥ एषशूरोमहेष्वासोभीष्मःशूरनिषूदनः २ छादितःपांडवैःशूरैःसमंताद्भरतर्षभ ॥ तस्यकार्यंत्वयावीररक्षणंसुमहात्मनः ३ रक्ष्य
माणोहिसमरेभीष्मोऽस्माकंपितामहः ॥ निहन्यात्समरेयत्तान्पंचालान्पांडवैःसह ४ तत्रकार्यतमंमन्येभीष्मस्यैवाभिरक्षणम् ॥ गोप्ताह्येषमहेष्वासोभीष्मोऽस्माकं
महाव्रतः ५ सभवान्सर्वसैन्येनपरिवार्यपितामहम् ॥ समरेकर्मकुर्वाणंदुष्करंपरिरक्षतु ६ सएवमुक्तःसमरेपुत्रोदुःशासनस्तव ॥ परिवार्यस्थितोभीष्मंसैन्येनमहतावृतः
७ ततःशतसहस्राणांहयानांसुबलात्मजः ॥ विमलप्रासहस्तानामृष्टितोमरधारिणाम् ८ दर्पितानांसुवेशानांबलस्थानांपताकिनाम् ॥ शिक्षितैर्युद्धकुशलैरुपेतानांनरो
त्तमैः ९ नकुलंसहदेवंचधर्मराजंचपांडवम् ॥ न्यवारयन्नरश्रेष्ठान्परिवार्यसमंततः १० ततोदुर्योधनोराजाशूराणांहयसादिनाम् ॥ अयुतंप्रेषयामासपांडवानांनिवारणे
११ तैःप्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे ॥ खुराहताधराराजंश्चकम्पेचननादच १२ खुरशब्दश्चसुमहान्वाजिनांशुश्रुवेतदा ॥ महावंशवनस्येवदह्यमानस्यपर्वते १३
उत्पतद्भिश्चतैस्तत्रसमुद्भूतंमहद्रजः ॥ दिवाकररथंप्राप्यच्छादयामासभास्करम् १४ वेगवद्भिर्हयैस्तैस्तुक्षोभितापांडवीचमूः ॥ निपतद्भिर्महावेगैर्हंसैरिवमहत्सरः १५
हेषतांचैवशब्देननप्राज्ञायतकिंचन ॥ ततोयुधिष्ठिरोराजामाद्रीपुत्रौचपांडवौ १६ प्रत्यघ्नंस्तरसावेगंसमरेहयसादिनाम् ॥ उद्वृत्तस्यमहाराजप्रावृट्काले ऽतिपूर्यतः १७ पौर्ण
मास्यामंबुवेगंयथावेलामहोदधेः ॥ ततस्तेरथिनोराजन्शरैःसन्नतपर्वभिः १८ न्यकृंतन्नुत्तमांगानिशरेणहयसादिनाम् ॥ तेनिपेतुर्महाराजनिहतादृढधन्विभिः १९
नागैरिवमहानागायथावद्गिरिगह्वरे ॥ तेऽपिप्रासैःसुनिशितैःशरैःसन्नतपर्वभिः २० न्यकृंतन्नुत्तमांगानिविचरंतोदिशोदश ॥ अभ्याहताहयारोहाऋष्टिभिर्भरतर्षभ २१
अत्यजन्नुत्तमांगानिफलानीवमहाद्रुमाः ॥ ससादिनोहयाराजंस्तत्रतत्रनिषूदिताः २२ पतिताःपात्यमानाश्चप्रत्यदृश्यंतसर्वशः ॥ वध्यमानाहयाश्चैवप्राद्रवंतभयार्दिताः
२३ यथासिंहंसमासाद्यमृगाःप्राणपरायणाः ॥ पांडवाश्चमहाराजजित्वाशत्रून्महामृधे २४ दध्मुःशंखांश्चभेरीश्चताडयामासुराहवे ॥ ततोदुर्योधनोदीनोदृष्ट्वासैन्यंपरा
जितम् २५ अब्रवीद्भरतश्रेष्ठमद्रराजमिदंवचः ॥ एषपांडुसुतोज्येष्ठोयमाभ्यांसहितोरणे २६ पश्यतांवोमहाबाहोसेनांद्रावयतिप्रभो ॥ तंवारयमहाबाहोवेलेवमकराल
यम् २७ त्वंहिसंश्रूयसेऽत्यर्थमसह्यबलविक्रमः ॥ पुत्रस्यतवतद्वाक्यंश्रुत्वाशल्यःप्रतापवान् २८ सययौरथवंशेनयत्रराजायुधिष्ठिरः ॥ तदाऽऽपतद्वैसहसाशल्यस्यसु
महद्बलम् २९ महौघवेगंसमरेवारयामासपांडवः ॥ मद्रराजंचसमरेधर्मराजोमहारथः ३० दशभिःसायकैस्तूर्णमाजघानस्तनांतरे ॥ नकुलःसहदेवश्चतंसप्तभिरजिह्मगैः
३१ मद्रराजोऽपितान्सर्वानाजघानत्रिभिस्त्रिभिः ॥ युधिष्ठिरंपुनःषष्ट्याविव्याधनिशितैःशरैः ३२

२४।२५।२६।२७।२८।२९।३०।३१।३२

३३ । ३४ । ३५ ॥ इतिभीष्मपर्वणिनी० भा० पंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ततइति १ । २ । ३ द्वादशाख्यैःद्वादशसंख्यैः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

माद्रीपुत्रौचसंभ्रांतौद्वाभ्यांद्वाभ्यामताडयत् ॥ ततोभीमोमहाबाहुर्दृष्ट्वाराजानमाहवे ३३ मद्रराजरथंप्राप्तंमृत्योरास्यगतंयथा ॥ अभ्यपद्यतसंग्रामेयुधिष्ठिर
ममित्रजित् ३४ ततोयुद्धंमहाघोरंप्रावर्ततसुदारुणम् ॥ अपरांदिशमास्थायपतमानेदिवाकरे ३५ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणिपंचा
धिकशततमोऽध्यायः ॥ १०५ ॥ ॥ संजयउवाच ॥ ॥ ततःपितातवक्रुद्धोनिशितैःसायकोत्तमैः ॥ आजघानरणेपार्थान्सहसेनान्समंततः १ भीमंद्वाद
शभिर्विद्ध्वासात्यकिंनवभिःशरैः ॥ नकुलंचत्रिभिर्विद्ध्वासहदेवंचसप्तभिः २ युधिष्ठिरंद्वादशभिर्बाह्वोरुरसिचार्पयत् ॥ धृष्टद्युम्नंततोविध्वाननादसुमहाबलः ३
तंद्वादशाख्यैर्नकुलोमाधवश्चत्रिभिःशरैः ॥ धृष्टद्युम्नश्चसप्तत्याभीमसेनश्चसप्तभिः ४ युधिष्ठिरोद्वादशभिःप्रत्यविध्यत्पितामहम् ॥ द्रोणस्तुसात्यकिंविध्वाभी
मसेनमविध्यत ५ एकैकंपंचभिर्बाणैर्यमदंडोपमैःशितैः ॥ तौचतंप्रत्यविध्येतांत्रिभिस्त्रिभिरजिह्मगैः ६ तौत्रेरिवमहानागंद्रोणंब्राह्मणपुंगवम् ॥ सौवीराःकितवाः
प्राच्याःप्रतीच्योदीच्यमालवाः ७ अभीषाहाःशूरसेनाःशिवयोऽथवसातयः ॥ संग्रामेनाजहुर्भीष्मंवध्यमानाःशितैःशरैः ८ तथैवान्येमहीपालानानादेशसमा
गताः ॥ पांडवानभ्यवर्तंतविविधायुधपाणयः ९ तथैवपांडवाराजन्परिवव्रुःपितामहम् ॥ ससमंतात्परिवृतोरथौघैरपराजितः १० गहनेऽग्निरिवोत्सृष्टःप्रज
ज्वालदहन्परान् ॥ रथाग्न्यगारश्चापार्चिरसिशक्तिगदेंधनः ११ शरस्फुलिंगोभीष्माग्निर्ददाहक्षत्रियर्षभान् ॥ सुवर्णपुंखैरिषुभिर्गार्ध्रपक्षैःसुतेजनैः १२ कर्णिना
लीकनाराचैश्छादयामासतद्बलम् ॥ अपातयत्ध्वजांश्चैवरथिनश्चशितैःशरैः १३ मुंडतालवनानीवचकाररसरथव्रजान् ॥ निर्मनुष्यान्रथान्राजन्गजानश्वांश्च
संयुगे १४ अकरोत्समहाबाहुःसर्वशस्त्रभृतांवरः ॥ तस्यज्यातलनिर्घोषंविस्फूर्जितमिवाशनेः १५ निशम्यसर्वभूतानिसमकंपंतभारत ॥ अमोघाह्यपतन्बा
णाःपितुस्तेभरतर्षभ १६ नासज्जंततनुत्रेषुभीष्मचापच्युताःशराः ॥ हतवीरान्रथान्राजन्संयुक्तान्जवनैर्हयैः १७ अपश्याममहाराजह्रियमाणान्रणाजिरे ॥
चेदिकाशिकरूषाणांसहस्राणिचतुर्दश १८ महारथाःसमाख्याताःकुलपुत्रास्तनुत्यजः ॥ अपरावर्तिनःसर्वेसुवर्णविकृतध्वजाः १९ संग्रामेभीष्ममासाद्यव्या
दितास्यमिवांतकम् ॥ निमग्नाःपरलोकायसवाजिरथकुंजराः २० भग्नाक्षोपस्करान्कांश्चिद्भग्नचक्रांश्चभारत ॥ अपश्याममहाराजशतशोऽथसहस्रशः २१ सव
रूथैरथैर्भग्नैरथिभिश्चनिपातितैः ॥ शरैःसुकवचैश्छिन्नैःपट्टिशैश्चविशांपते २२ गदाभिर्भिंदिपालैश्चनिशितैश्चशिलीमुखैः ॥ अनुकर्षैरुपासंगैश्चक्रैर्भग्नैश्चमारिष
२३ बाहुभिःकार्मुकैःखड्गैःशिरोभिश्चसकुंडलैः ॥ तलत्रैरंगुलित्रैश्चध्वजैश्चविनिपातितैः २४ चापैश्चबहुधाच्छिन्नैःसमास्तीर्यतमेदिनी ॥ हतारोहागजाराज
न्हयाश्चहयसादिनः २५ न्यपतंतगतप्राणाःशतशोऽथसहस्रशः ॥ यतमानाश्चतेवीराद्रवमाणान्महारथान् २६ नाशक्नुवन्वारयितुंभीष्मबाणप्रपीडितान् ॥
महेंद्रसमवीर्येणवध्यमानामहाचमूः २७ १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७

अभज्यतमहाराजनचद्धौसहधावतः ॥ आविद्धरथनागाश्वंपतितध्वजसंकुलम् २८ अनीकंपांडुपुत्राणांहाहाभूतमचेतनम् ॥ जघानात्रपितापुत्रंपुत्रश्चपितरंतथा
२९ प्रियंसखायंचाक्रंदेसखादैवबलात्कृतः ॥ विमुच्यकवचानन्येपांडुपुत्रस्यसैनिकाः ३० प्रकीर्यकेशान्धावंतःप्रत्यदृश्यंतसर्वशः ॥ तद्गोकुलमिवोद्भ्रां
तमुद्भ्रांतरथकूबरम् ३१ ददृशेपांडुपुत्रस्यसैन्यमार्तस्वरंतदा ॥ प्रभज्यमानंसैन्यंतुदृष्ट्वायादवनंदनः ३२ उवाचपार्थंबीभत्सुंनिगृह्यरथमुत्तमम् ॥ अयंसका
लःसंप्राप्तःपार्थयःकांक्षितस्तव ३३ प्रहरास्मिन्नरव्याघ्रनचेन्मोहाद्विमुह्यसे ॥ यत्पुराकथितंवीरराज्ञांतेषांसमागमे ३४ विराटनगरेतातसंजयस्यसमीपतः ॥
भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्यसैनिकान् ३५ सानुबंधान्हनिष्यामियेमांयोत्स्यंतिसंगरे ॥ इतितत्कुरुकौन्तेयसत्यंवाक्यमरिंदम ३६ क्षत्रधर्ममनुस्मृत्य
युध्यस्वविगतज्वरः ॥ इत्युक्तोवासुदेवेनतिर्यग्दृष्टिरधोमुखः ३७ अकामइवबीभत्सुरिदंवचनमब्रवीत् ॥ अवध्यानांवधंकृत्वाराज्यंवानरकोत्तरम् ३८ दुःखा
निवनवासेवाकिंनुमेसुकृतंभवेत् ॥ चोदयाश्वान्यतोभीष्मःकरिष्येवचनंतव ३९ पातयिष्यामिदुर्धर्षंभीष्मंकुरुपितामहम् ॥ सचाश्वान्रजतप्रख्यांश्चोदयामा
समाधवः ४० यतोभीष्मस्ततोराजन्दुष्प्रेक्ष्योरश्मिवानिव ॥ ततस्तत्पुनरावृत्तंयुधिष्ठिरबलंमहत् ४१ दृष्ट्वापार्थंमहाबाहुंभीष्मायोद्यतमाहवे ॥ ततोभीष्मः
कुरुश्रेष्ठःसिंहवद्विनदन्मुहुः ४२ धनंजयरथंशीघ्रंशरवर्षैरवाकिरत् ॥ क्षणेनसरथस्तस्यसहयःसहसारथिः ४३ शरवर्षेणमहतानप्राज्ञायतभारत ॥ वासुदेव
स्त्वसंभ्रांतोधैर्यमास्थायसत्वरः ४४ चोदयामासतानश्वान्विनुन्नान्भीष्मसायकैः ॥ ततःपार्थोधनुर्गृह्यदिव्यंजलदनिःस्वनम् ४५ पातयामासभीष्मस्यधनु
श्छित्वाशितैःशरैः ॥ सच्छिन्नधन्वाकौरव्यःपुनरन्यन्महद्धनुः ४६ निमेषांतरमात्रेणसज्यंचक्रेपितातव ॥ चकर्षचततोदोर्भ्यांधनुर्जलदनिःस्वनम् ४७ अथा
स्यतदपिक्रुद्धश्चिच्छेदधनुरर्जुनः ॥ तस्यतत्पूजयामासलाघवंशांतनोःसुतः ४८ गांगेयस्त्वब्रवीत्पार्थंधन्विश्रेष्ठमरिंदम ॥ साधुसाधुमहाबाहोसाधुकुंतीसुते
तिच ४९ समाभाष्यैवमपरंप्रगृह्यरुचिरंधनुः ॥ मुमोचसमरेभीष्मःशरान्पार्थरथंप्रति ५० अदर्शयद्वासुदेवोहययानेपरंबलम् ॥ मोघान्कुर्वन्शरांस्तस्यमंड
लानिनिदर्शयन् ५१ शुशुभातेनरव्याघ्रौतौभीष्मशरविक्षतौ ॥ गोवृषाविवसंरब्धौविषाणोल्लिखितांकितौ ५२ वासुदेवस्तुसंप्रेक्ष्यपार्थस्यमृदुयुद्धताम् ॥ भीष्मं
चशरवर्षाणिसृजंतमनिशंयुधि ५३ प्रतपंतमिवादित्यंमध्यमासाद्यसेनयोः ॥ वरान्वरान्विनिघ्नंतंपांडुपुत्रस्यसैनिकान् ५४ युगांतमिवकुर्वाणंभीष्मंयौधिष्ठिरेबले ॥
नामृष्यतमाहाबाहुर्माधवःपरवीरहा ५५ उत्सृज्यरजतप्रख्यान्हयान्पार्थस्यमारिष ॥ वासुदेवस्ततोयोगीप्रचस्कंदमहारथात् ५६ अभिदुद्रावभीष्मंसभुजप्रहरणो
बली ॥ प्रतोदपाणिस्तेजस्वीसिंहवद्विनदन्मुहुः ५७ दारयन्निवपद्भ्यांसजगतीजगदीश्वरः ॥ क्रोधताम्रेक्षणःकृष्णोजिघांसुरमितद्युतिः ५८

५९ । ६० मणिरिंद्रनीलः ६१ । ६२ । ६३ । ६४ । ६५ । सर्वतःइहामुत्रच ६६ अन्वक्पश्चाद्गामी ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ आपूर्णकलाभिरितिशेषः ७५ । ७६

ग्रसंतइवचेतांसितावकानांमहाहवे ॥ दृष्ट्वामाधवमाक्रन्देभीष्मायोद्यतमंतिके ५९ हतोभीष्मोहतोभीष्मस्तत्रतत्रवचोमहत् ॥ अश्रूयतमहाराजवासुदेवभयात्तदा ६०
पीतकौशेयसंवीतोमणिश्यामोजनार्दनः ॥ शुशुभेविद्रवन्भीष्मंविद्युन्मालीयथाऽम्बुदः ६१ ससिंहइवमातंगंयूथर्षभइवर्षभम् ॥ अभिदुद्राववेगेनविनदन्यादवर्षभः ६२
तमापतन्तंसंप्रेक्ष्यपुंडरीकाक्षमाहवे ॥ असंभ्रमंरणेभीष्मोविचकर्षमहद्धनुः ६३ उवाचचैवगोविंदमसंभ्रान्तेनचेतसा ॥ एह्येहिपुंडरीकाक्षदेवदेवनमोऽस्तुते ६४ मा
मद्यसात्वतश्रेष्ठपातयस्वमहाहवे ॥ त्वयाहिदेवसंग्रामेहतस्यापिममानघ ६५ श्रेयएवपरंकृष्णलोकेभवतिसर्वतः ॥ संभावितोऽस्मिगोविंदत्रैलोक्येनाद्यसं
युगे ६६ प्रहरस्वयथेष्टंवैदासोऽस्मितवचानघ ॥ अन्वगेवततःपार्थःसमभिद्रुत्यकेशवम् ६७ निजग्राहमहाबाहुर्बाहुभ्यांपरिगृह्यवै ॥ निगृह्यमाणःपार्थेनकृष्णो
राजीवलोचनः ६८ जगामैवैनमादायवेगेनपुरुषोत्तमः ॥ पार्थस्तुविष्टभ्यबलाच्चरणौपरवीरहा ६९ निजग्राहहृषीकेशंकथंचिद्दशमेपदे ॥ ततएनमुवाचा
र्तःक्रोधपर्याकुलेक्षणम् ७० निःश्वसंतंयथानागमर्जुनःप्रणयात्सखा ॥ निवर्तस्वमहाबाहोनानृतंकर्तुमर्हसि ७१ यत्त्वयाकथितंपूर्वंनयोत्स्यामीतिकेशव ॥
मिथ्यावादीतिलोकास्त्वांकथयिष्यंतिमाधव ७२ ममैषभारःसर्वोहिहनिष्यामिपितामहम् ॥ शपेकेशवशस्त्रेणसत्येनसुकृतेनच ७३ अन्तंयथागमिष्यामिशत्रूणां
शत्रुसूदन ॥ अद्यैवपश्यदुर्धर्षंपात्यमानंमहारथम् ७४ तारापतिमिवापूर्णमंतकालेयदृच्छया ॥ माधवस्तुवचःश्रुत्वाफाल्गुनस्यमहात्मनः ७५ नाकिंचिदु
क्त्वासक्रोधआरुरोहरथंपुनः ॥ तौरथस्थौनरव्याघ्रौभीष्मःशांतनवःपुनः ७६ ववर्षशरवर्षेणमेघोवृष्ट्यायथाऽचलौ ॥ प्राणानादत्तयोधानांपितादेवव्रतस्तव ७७
गभस्तिभिरिवादित्यस्तेजांसिशिशिरात्यये ॥ यथाकुरूणांसैन्यानिबभंजुर्युधिपांडवाः ७८ तथापांडवसैन्यानिबभंजयुधितेपिता ॥ हतविद्रुतसैन्यास्तुनिरुत्साहावि
चेतसः ७९ निरीक्षितुंनशेकुस्तेभीष्ममप्रतिमंरणे ॥ मध्यंगतमिवादित्यंप्रतपन्तंस्वतेजसा ८० तेवध्यमानाभीष्मेणशतशोऽथसहस्रशः ॥ कुर्वाणंसमरेकर्माण्यति
मानुषविक्रमम् ८१ वीक्षांचक्रुर्महाराजपांडवाभयपीडिताः ॥ तथापांडवसैन्यानिद्राव्यमाणानिभारत ८२ त्रातारंनाध्यगच्छंतगावःपंकगताइव ॥ पिपीलिका
इवक्षुण्णादुर्बलाबलिनारणे ८३ महारथंभारतदुष्प्रकंपंशरौघिणंप्रतपंतंनरेन्द्रान् ॥ भीष्मंनशेकुःप्रतिवीक्षितुंतेशरार्चिषंसूर्यमिवातपंतम् ८४ विमृद्नतस्तस्यतु
पांडुसेनामस्तंजगामाथसहस्ररश्मिः ॥ ततोबलानांश्रमकर्शितानांमनोऽवहारंप्रतिसंबभूव ८५ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भीष्मवधपर्वणि नवमदिवस
युद्धसमाप्तौ षडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

७७ । ७८ । ७९ । ८० । ८१ ८२ । ८३ । ८४ । ८५ ॥ ॥ इतिभीष्मपर्वणि नीलकंठीये भारतभावदीपे षडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ ॥ ॥ ॥ ॥

युद्धयतामिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ एकतइतिद्वितीयांतात्तसिः एकंकेवलंमृत्युमेवाभ्येतीत्यर्थः २० । २१

संजयउवाच ॥ युध्यतामेवतेषांतुभास्करेऽस्तमुपागते ॥ संध्यासमभवद्धोरानापश्यामततोरणम् १ ततोयुधिष्ठिरोराजासंध्यांसंदृश्यभारत ॥ वध्यमानंचभीष्मे
णत्यक्तास्त्रंभयविह्वलम् २ स्वसैन्यंचपरावृत्तंपलायनपरायणम् ॥ भीष्मंचयुधिसंरब्धंपीडयंतंमहारथम् ३ सोमकांश्चजितान्दृष्ट्वानिरुत्साहान्महारथान् ॥
चिंतयित्वाततोराजाअवहारमरोचयत् ४ ततोऽवहारंसैन्यानांचक्रेराजायुधिष्ठिरः ॥ तथैवतवसैन्यानामवहारोह्यभूत्तदा ५ ततोऽवहारंसैन्यानांकृत्वातत्रमहा
रथाः ॥ न्यविशंतकुरुश्रेष्ठसंग्रामेक्षतविक्षताः ६ भीष्मस्यसमरेकर्मचिंतयानास्तुपांडवाः ॥ नालभंततदाशांतिंभीष्मबाणप्रपीडिताः ७ भीष्मोऽपिसमरेजित्वा
पांडवान्सहसृंजयान् ॥ पूज्यमानस्तवसुतैर्वंद्यमानश्चभारत ८ न्यविशत्कुरुभिःसार्धंहृष्टरूपैःसमंततः ॥ ततोरात्रिःसमभवत्सर्वभूतप्रमोहिनी ९ तस्मिन्रात्रिमु
खेघोरेपांडवावृष्णिभिःसह ॥ सृंजयाश्चदुराधर्षामंत्रायसमुपाविशन् १० आत्मनिःश्रेयसंसर्वेप्राप्तकालंमहाबलाः ॥ मंत्रयामासुरव्यग्रामंत्रनिश्चयकोविदाः ११
ततोयुधिष्ठिरोराजामंत्रयित्वाचिरंनृप ॥ वासुदेवंसमुद्वीक्ष्यवचनंचेदमाददे १२ कृष्णपश्यमहात्मानंभीष्मंभीमपराक्रमम् ॥ गजंनलवनानीवविमृद्नन्तंबलंमम
१३ नचैवैनंमहात्मानमुत्सहामोनिरीक्षितुम् ॥ लेलिह्यमानंसैन्येषुप्रवृद्धमिवपावकम् १४ यथाघोरोमहानागस्तक्षकोवैविषोल्बणः ॥ तथाभीष्मोरणेक्रुद्ध
स्तीक्ष्णशस्त्रःप्रतापवान् १५ गृहीतचापःसमरेप्रमुंचन्निशिताञ्छरान् ॥ शक्योजेतुंयमःक्रुद्धोवज्रपाणिश्चदेवराट् १६ वरुणःपाशभृच्चापिसगदोवाधनेश्वरः ॥
नतुभीष्मःसुसंक्रुद्धःशक्योजेतुंमहाहवे १७ सोऽहमेवंगतेकृष्णनिमग्नःशोकसागरे ॥ आत्मनोबुद्धिदौर्बल्याद्भीष्ममासाद्यसंयुगे १८ वनंयास्यामिदुर्धर्षश्रेयो
वैतत्रमेगतम् ॥ नयुद्धंरोचतेकृष्णहंतिभीष्मोहिनःसदा १९ यथाप्रज्वलितंवह्निंपतंगःसमभिद्रवन् ॥ एकतोमृत्युमभ्येतितथाऽहंभीष्ममीयिवान् २० क्षयंनी
तोऽस्मिवार्ष्णेयराज्यहेतोःपराक्रमी ॥ भ्रातरश्चैवमेशूराःसायकैर्भृशपीडिताः २१ मत्कृतेभ्रातृसौहार्दाद्राज्यभ्रष्टावनंगताः ॥ परिक्लिष्टातथाकृष्णामत्कृतेमधु
सूदन २२ जीवितंबहुमन्येऽहंजीवितंह्यद्यदुर्लभम् ॥ जीवितस्याद्यशेषेणचरिष्येधर्ममुत्तमम् २३ यदितेऽहमनुग्राह्योभ्रातृभिःसहकेशव ॥ स्वधर्मस्याविरोधेन
हितंव्याहरकेशव २४ एवंश्रुत्वावचस्तस्यकारुण्याद्बहुविस्तरम् ॥ प्रत्युवाचततःकृष्णःसांत्वयानोयुधिष्ठिरम् २५ धर्मपुत्रविषादंत्वंमाकृथाःसत्यसंगर ॥ ॥ यस्य
तेभ्रातरःशूरादुर्जयाःशत्रुसूदनाः २६ अर्जुनोभीमसेनश्चवाय्वग्निसमतेजसौ ॥ माद्रीपुत्रौचविक्रांतौत्रिदशानामिवेश्वरौ २७ मांवानियुंक्ष्वसौहार्दाद्योत्स्येभीष्मेण
पांडव ॥ त्वत्प्रयुक्तोमहाराजकिंनकुर्यांमहाहवे २८ हनिष्यामिरणेभीष्ममाहूयपुरुषर्षभम् ॥ पश्यतांधार्तराष्ट्राणांयदिनेच्छतिफाल्गुनः २९ यदिभीष्मेहतेवी
रेजयंपश्यसिपांडव ॥ हंताऽस्म्येकरथेनाद्यकुरुवृद्धंपितामहम् ३० पश्यमेविक्रमंराजन्महेन्द्रस्येवसंयुगे ॥ विमुंचन्तंमहास्त्राणिपातयिष्यामितंरथात् ३१

२२ अथेदानीं २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

यःशत्रुःपांडुपुत्राणांमच्छत्रुःसनसंशयः ॥ मदर्थाभवदीयायेयेमदीयास्तवैवते ३२ तवभ्रातामसखासंबंधीशिष्यएवच ॥ मांसान्युत्कृत्यदास्यामिफाल्गुनार्थेमही
पते ३३ एषचापिनरव्याघ्रोमत्कृतेजीवितंत्यजेत् ॥ एषनःसमयस्तातताराऱ्येमपरस्परम् ३४ समांनियुंक्ष्वराजेन्द्रयथायोद्धाभवाम्यहम् ॥ प्रतिज्ञातमुपप्लव्येयत्तत्पार्थे
नपूर्वतः ३५ घातयिष्यामिगांगेयमितिलोकस्यसन्निधौ ॥ परिरक्ष्यमिदंतावद्वचःपार्थस्यधीमतः ३६ अनुज्ञातंतुपार्थेनमयाकार्यंनसंशयः ॥ अथवाफाल्गुनस्यैष
भारःपरिमितोरणे ३७ सहनिष्यतिसंग्रामेभीष्मंपरपुरंजयम् ॥ अशक्यमपिकुर्याद्धिरणेपार्थःसमुद्यतः ३८ त्रिदशान्वासमुद्युक्तान्सहितान्दैत्यदानवैः ॥ निहन्याद
र्जुनःसंख्येकिमुभीष्मंनराधिप ३९ विपरीतोमहावीर्योगतसत्वोऽल्पजीवनः ॥ भीष्मःशांतनवोनूनंकर्तव्यंनावबुध्यते ४० ॥ युधिष्ठिरउवाच ॥ एवमेतन्महाबाहो
यथावदसिमाधव ॥ सर्वेह्येतेनपर्याप्तास्तववेगविधारणे ४१ नियतंसमवाप्स्यामिसर्वमेतद्यथेप्सितम् ॥ यस्यमेपुरुषव्याघ्रभवान्पक्षेव्यवस्थितः ४२ सेन्द्रानपिरणेदेवा
न्जयेयंजयतांवर ॥ त्वयानाथेनगोविंदकिमुभीष्मंमहारथम् ४३ नतुत्वामनृतंकर्तुमुत्सहेस्वात्मगौरवात् ॥ अयुध्यमानःसाहाय्यंयथोक्तंकुरुमाधव ४४ समयस्तु
कृतःकश्चिन्ममभीष्मेणसंयुगे ॥ मंत्रयिष्येतवार्थायनतुयोत्स्येकथंचन ४५ दुर्योधनार्थेयोत्स्यामिसत्यमेतदितिप्रभो ॥ सहिराज्यस्यमेदातामंत्रस्यैवचमाधव ४६
तस्माद्देवव्रतंभूयोवधोपायार्थमात्मनः ॥ भवतासहिताःसर्वेप्रयाममधुसूदन ४७ तद्वयंसहितागत्वाभीष्ममाशुनरोत्तमम् ॥ नचिरात्सर्वेवार्ष्णेयमंत्रंपृच्छामकौरवम् ४८
सवक्ष्यतिहितंवाक्यंसत्यमस्मान्जनार्दन ॥ यथाचवक्ष्यतेकृष्णतथाकर्ताऽस्मिसंयुगे ४९ सनोजयस्यदातास्यान्मंत्रस्यचदृढव्रतः ॥ बालाःपित्राविहिनाश्चतेनसंवर्धि
तावयम् ५० तंचेत्पितामहंवृद्धंहंतुमिच्छामिमाधव ॥ पितुःपितरमिष्टंचधिगस्तुक्षत्रजीविकाम् ५१ ॥ संजयउवाच ॥ ततोऽब्रवीन्महाराजवार्ष्णेयःकुरुनंदनम् ॥
रोचतेमेमहाप्राज्ञराजेन्द्रतवभाषितम् ५२ देवव्रतःकृतीभीष्मःप्रेक्षितेनापिनिर्दहेत् ॥ गम्यतांसवधोपायंप्रष्टुंसागरगासुतः ५३ वक्तुमर्हतिसत्यंसत्वयापृष्टोविशेषतः ॥
तेवयंतत्रगच्छामःप्रष्टुंकुरुपितामहम् ५४ गत्वाशांतनवंवृद्धंमंत्रंपृच्छामभारत ॥ सवोदास्यतिमंत्रंयंतेनयोत्स्यामहेपरान् ५५ एवमामंत्र्यतेवीराःपांडवाःपांडुपूर्व
जम् ॥ जग्मुस्तेसहिताःसर्वेवासुदेवश्चवीर्यवान् ५६ विमुक्तशस्त्रकवचाभीष्मस्यसदनंप्रति ॥ प्रविश्यचतदाभीष्मंशिरोभिःप्रणिपेदिरे ५७ पूजयंतोमहाराजपांडवा
भरतर्षभम् ॥ प्रणम्यशिरसाचैनंभीष्मंशरणमभ्ययुः ५८ तानुवाचमहाबाहुर्भीष्मःकुरुपितामहः ॥ स्वागतंतववार्ष्णेयस्वागतंतेधनंजय ५९ स्वागतंधर्मपुत्राय
भीमाययमयोस्तथा ॥ किंवाकार्यंकरोम्यद्ययुष्माकंप्रीतिवर्धनम् ६० सर्वात्मनाऽपिकर्ताऽस्मियदपिस्यात्सुदुष्करम् ॥ तथाब्रुवाणंगाङ्गेयंप्रीतियुक्तंपुनःपुनः ६१
उवाचराजादीनात्माप्रीतियुक्तमिदंवचः ॥ कथंजयेमसर्वज्ञकथंराज्यंलभेमहि ६२

६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१

प्रजानांसंशयोनस्यात्कथंतन्मेवदप्रभो ॥ भवान्हिनोवधोपायंब्रवीतुस्वयमात्मनः ६३ भवंतंसमरेवीरविषहेमकथंवयम् ॥ नहितेसूक्ष्ममप्यस्तिरन्ध्रंकुरुपितामह ६४
मंडलेनैवधनुषादृश्यसेसंयुगेसदा ॥ आददानंसंदधानंविकर्षन्तंधनुर्नच ६५ पश्यामस्त्वांमहाबाहोरथेसूर्यमिवापरम् ॥ रथाश्वनरनागानांहंतारंपरवीरहन् ६६ कोऽथ
वोत्सहतेजेतुंत्वांपुमान्भरतर्षभ ॥ वर्षताशरवर्षाणिसंयुगेवैशसंकृतम् ६७ क्षयंनीताहिपृतनासंयुगेमहतीमम ॥ यथायुधिजयेमत्वांयथाराज्यंभवेच्छमम ६८ ममसैन्य
स्यचक्षेमंतन्मेब्रूहिपितामह ॥ ततोऽब्रवीच्छांतनवःपांडवान्पांडुपूर्वजः ६९ नकथंचनकौन्तेयमयिजीवतिसंयुगे ॥ जयोभवतिसर्वज्ञसत्यमेतद्ब्रवीमिते ७० निर्जिते
मयियुद्धेनरणेजेष्यथपांडवाः ॥ क्षिप्रंमयिप्रहरध्वंयदीच्छथरणेजयम् ७१ अनुजानामिवःपार्थाःप्रहरध्वंयथासुखम् ॥ एवंहिसुकृतंमन्येभवतांविदितोह्यहम् ७२ हते
मयिहतंसर्वंतस्मादेवंविधीयताम् ॥ युधिष्ठिरउवाच ॥ ब्रूहितस्मादुपायंनोयथायुद्धेजयेमहि ७३ भवंतंसमरेक्रुद्धंदंडहस्तमिवांतकम् ॥ शक्योवज्रधरोजेतुंवरुणोऽथय
मस्तथा ७४ नभवान्समरेशक्यःसेन्द्रैरपिसुरासुरैः ॥ भीष्मउवाच ॥ सत्यमेतन्महाबाहोयथावदसिपांडव ७५ नाहंजेतुंरणेशक्यःसेन्द्रैरपिसुरासुरैः ॥ आत्तशस्त्रोरणे
यत्तोगृहीतवरकार्मुकः ७६ ततोमांन्यस्तशस्त्रंतुएतेहन्युर्महारथाः ॥ निक्षिप्तशस्त्रेपतितेविमुक्तकवचध्वजे ७७ द्रवमाणेचभीतेचतवास्मीतिचवादिनि ॥ स्त्रियांस्त्रीना
मधेयेचविकलेचैकपुत्रिणि ७८ अप्रशस्तेनरेचैवनयुद्धंरोचतेमम ॥ इमंमेशृणुराजेन्द्रसंकल्पंपूर्वचिंतितम् ७९ अमंगल्यध्वजंदृष्ट्वानयुध्येयंकदाचन ॥ यएषद्रौपदोराजं
स्तवसैन्येमहारथः ८० शिखंडीसमरामर्षीशूरश्चसमितिंजयः ॥ यथाऽभवच्चस्त्रीपूर्वंपश्चात्पुंस्त्वंसमागतः ८१ जानंतिचभवंतोऽपिसर्वमेतद्यथातथम् ॥ अर्जुनःसमरे
शूरःपुरस्कृत्यशिखंडिनम् ८२ मामेवविशिखैस्तीक्ष्णैरभिद्रवतुदंशितः ॥ अमंगल्यध्वजेतस्मिन्स्त्रीपूर्वेचविशेषतः ८३ नप्रहर्तुमभीप्सामिगृहीतेषुःकथंचन ॥ तदंतरं
समासाद्यपांडवोमांधनंजयः ८४ शरैर्घातयतुक्षिप्रंसमंताद्भरतर्षभ ॥ नतंपश्यामिलोकेषुमांहन्याद्यःसमुद्यतम् ८५ ऋतेकृष्णान्महाभागात्पांडवाद्वाधनंजयात् ॥ एष
तस्मात्पुरोधायकंचिदन्यंममाग्रतः ८६ आत्तशस्त्रोरणेयत्तोगृहीतवरकार्मुकः ॥ मांपातयतुबीभत्सुरेवंतवजयोध्रुवम् ८७ एतत्कुरुष्वकौन्तेययथोक्तंममसुव्रत ॥ सं
ग्रामेधार्तराष्ट्रांश्चहन्याःसर्वान्समागतान् ८८ ॥ संजयउवाच ॥ तेतुज्ञात्वाततःपार्थाजग्मुःस्वशिबिरंप्रति ॥ अभिवाद्यमहात्मानंभीष्मंकुरुपितामहम् ८९ तथोक्तव
तिगांगेयेपरलोकायदीक्षिते ॥ अर्जुनोदुःखसंतप्तःसव्रीडमिदमब्रवीत् ९० गुरुणाकुरुवृद्धेनकृतप्रज्ञेनधीमता ॥ पितामहेनसंग्रामेकथंयोद्धाऽस्मिमाधव ९१ क्रीडता
हिमयाबाल्येवासुदेवमहामनाः ॥ पांसुरूषितगात्रेणमहात्मापरुषीकृतः ९२



परुषीकृतःरूक्षीकृतः ९२

९३ । ९४ । ९५ । ९६ युद्धदुर्मदंयुद्धोत्सुकं ९७ गमिष्यतियमक्षयंभीष्मइतिशेषः ९८ । ९९ । १०० आततायिनमित्यस्यघातकमितिविशेषणमन्येभ्यआततायिभ्योव्यवच्छेदायोक्तं १ । २ निधनंनिध

यस्याहमधिरुह्यांकंबालःकिलगदाग्रज ॥ तातेत्यवोचंपितरंपितुःपांडोर्महात्मनः ९३ नाहंतातस्तवपितुस्तातोऽस्मितवभारत ॥ इतिमामब्रवीद्बाल्येयःसवध्यःकथंमया
९४ काममंवध्यतुसैन्यंमेनाहंयोत्स्येमहात्मना ॥ जयोवाऽस्तुवधोवामेकथंवाकृष्णमन्यसे ९५ ( कथमस्मद्विधःकृष्णजानन्धर्मंसनातनम् ॥ न्यस्तशस्त्रेचवृद्धेचप्रहरे
द्धिपितामहे ) ॥ वासुदेवउवाच ॥प्रतिज्ञायवधंजिष्णोपुराभीष्मस्यसंयुगे ॥ क्षत्रधर्मेस्थितःपार्थकथंनैनंहनिष्यसि ९६ पातयैनंरथात्पार्थक्षत्रियंयुद्धदुर्मदम् ॥ नाहत्वायु
धिगांगेयंविजयस्तेभविष्यति ९७ दृष्टमेतत्पुरादेवैर्गमिष्यतियमक्षयम् ॥ यद्दृष्टंहिपुरापार्थतत्तथानतदन्यथा ९८ नहिभीष्मंदुराधर्षंव्यात्ताननमिवांतकम् ॥ त्वदन्यः
शक्नुयाद्योद्धुमपिवज्रधरःस्वयम् ९९ जहिभीष्मंस्थिरोभूत्वाशृणुचेदंवचोमम ॥ यथोवाचपुराशक्रंमहाबुद्धिर्बृहस्पतिः १०० ज्यायांसमपिचेद्वृद्धंगुणैरपिसमन्वि
तम् ॥ आततायिनमायांतंहन्याद्घातकमात्मनः १०१ शाश्वतोऽयंस्थितोधर्मःक्षत्रियाणांधनंजय ॥ योद्धव्यंरक्षितव्यंचयष्टव्यंचानसूयुभिः १०२ ॥ अर्जुनउवाच ॥
शिखंडीनिधनंकृष्णभीष्मस्यभविताध्रुवम् ॥ दृष्ट्वैवहिसदाभीष्मःपांचाल्यंविनिवर्तते १०३ तेवयंप्रमुखेतस्यपुरस्कृत्यशिखंडिनम् ॥ गाङ्गेयंपातयिष्यामउपायेने
तिमेमतिः १०४ अहमन्यान्महेष्वासान्वारयिष्यामिसायकैः ॥ शिखंड्यपियुधांश्रेष्ठंभीष्ममेवाभियोधयेत् १०५ श्रुतंहिकुरुमुख्यस्यनाहंहन्यांशिखंडिनम् ॥ कन्या
ह्येषापुराभूत्वापुरुषःसमपद्यत १०६ इत्येवंनिश्चयंकृत्वापांडवाःसहमाधवाः ॥ अनुमान्यमहात्मानंप्रययुर्हृष्टमानसाः ॥ शयनानियथास्वानिभेजिरेपुरुषर्षभाः
१०७ इतिश्रीम०भी०भीष्मवधप०नवमदिवसावहारोत्तरमंत्रे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ धृतराष्ट्रउवाच ॥ कथंशिखंडीगांगेयमभ्यवर्ततसंयुगे ॥
पांडवांश्चकथंभीष्मस्तन्ममाचक्ष्वसंजय १ ॥ सजयउवाच ॥ ततस्तेपांडवाःसर्वेसूर्यस्योदयनंप्रति ॥ ताड्यमानासुभेरीषुमृदंगेष्वानकेषुच २ ध्मायत्सुदधिवर्णेषुजल
जेषुसमंततः ॥ शिखंडिनंपुरस्कृत्यनिर्यातापांडवायुधि ३ कृत्वाव्यूहंमहाराजसर्वशत्रुनिबर्हणम् ॥ शिखंडीसर्वसैन्यानामग्रआसीद्विशांपते ४ चक्ररक्षौततस्तस्य
भीमसेनधनंजयौ ॥ पृष्ठतोद्रौपदेयाश्चसौभद्रश्चैववीर्यवान् ५ सात्यकिश्चेकितानश्चतेषांगोप्तामहारथः ॥ धृष्टद्युम्नस्ततःपश्चात्पंचालैरभिरक्षितः ६ ततोयुधिष्ठिरोराजा
यमाभ्यांसहितःप्रभुः ॥ प्रययौसिंहनादेननादयन्भरतर्षभ ७ विराटस्तुततःपश्चात्स्वेनसैन्येनसंवृतः ॥ द्रुपदश्चमहाबाहोततःपश्चादुपाद्रवत् ८ केकयाभ्रातरःपंचधृष्ट
केतुश्चवीर्यवान् ॥ जघनंपालयामासुःपांडुसैन्यस्यभारत ९ एवंव्यूह्यमहासैन्यंपांडवास्तववाहिनीम् ॥ अभ्यद्रवंतसंग्रामेत्यक्त्वाजीवितमात्मनः १० तथैवकुरवोरा
जन्भीष्मंकृत्वामहारथम् ॥ अग्रतःसर्वसैन्यानांप्रययुःपांडवान्प्रति ११ पुत्रैस्तवदुराधर्षोरक्षितःसुमहाबलैः ॥ ततोद्रोणोमहेष्वासःपुत्रश्चास्यमहाबलः १२

नहेतुः ३ । ४ । ५ । ६ । १०७ ॥ इतिश्री० नीलकंठीये भारतभावदीपे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥कथमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

१३।१४।१५।१६।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६।२७।२८।२९।३०।३१।३२।३३।३४।३५।३६।३७।३८।३९।४०।४१।४२ कामंस्वच्छंदंअभ्यसमक्षिप४३

भगदत्तस्ततःपश्चाद्गजानीकेनसंवृतः ॥ कृपश्चकृतवर्माचभगदत्तमनुव्रतौ १३ कांबोजराजोबलवांस्ततःपश्चात्सुदक्षिणः ॥ मागधश्चजयत्सेनःसौबलश्चबृहद्बलः
१४ तथैवान्येमहेष्वासाःसुशर्मप्रमुखान्नृपाः ॥ जघनंपालयामासुस्तवसैन्यस्यभारत १५ दिवसेदिवसेप्राप्तेभीष्मःशांतनवोयुधि ॥ आसुरानकरोद्व्यूहान्पैशाचानथ
राक्षसान् १६ ततःप्रववृतेयुद्धंतवतेषांचभारत ॥ अन्योन्यंनिघ्नतांराजन्यमराष्ट्रविवर्धनम् १७ अर्जुनप्रमुखाःपार्थाःपुरस्कृत्यशिखंडिनम् ॥ भीष्मंयुद्धेऽभ्यवर्तंतकि
रंतोविविधान्शरान् १८ तत्रभारतभीमेनताडितास्तावकाःशरैः ॥ रुधिरौघपरिक्लिन्नाःपरलोकंययुस्तदा १९ नकुलःसहदेवश्चसात्यकिश्चमहारथः ॥ तवसैन्यंसमा
साद्यपीडयामासुरोजसा २० तेवध्यमानाःसमरेतावकाभरतर्षभ ॥ नाशक्नुवन्वारयितुंपांडवानांमहद्बलम् २१ ततस्तुतावकंसैन्यंवध्यमानंसमंततः॥ सुसंप्राप्तंदशदिशः
काल्यमानंमहारथैः २२ त्रातारंनाध्यगच्छंततावकाभरतर्षभ ॥ वध्यमानाःशितैर्बाणैःपांडवैःसहसृंजयैः २३ ॥ धृतराष्ट्रउवाच ॥ पीड्यमानंबलंदृष्ट्वापार्थैर्भीष्मःप
राक्रमी ॥ यदकार्षीद्रणेक्रुद्धस्तन्ममाचक्ष्वसंजय २४ कथंवापांडवान्युद्धेप्रत्युद्यातःपरंतपः ॥ विनिघ्नन्सोमकान्वीरस्तदाचक्ष्वममानघ २५ ॥ संजयउवाच ॥
आचक्षेतेमहाराजयदकार्षीत्पितातव ॥ पीडितेतवपुत्रस्यसैन्येपांडवसृंजयैः २६ प्रहृष्टमनसःशूराःपाण्डवाःपांडुपूर्वज ॥ अभ्यवर्तंतनिघ्नंतस्तवपुत्रस्यवाहिनीम् २७
तंविनाशंमनुष्येंद्रनरवारणवाजिनाम् ॥ नामृष्यतततदाभीष्मःसैन्यघातंरणेपरैः २८ सपांडवान्महेष्वासःपंचालांश्चैवसृंजयान् ॥ नाराचैर्वत्सदन्तैश्चशितैरंजलिकैस्तथा
२९ अभ्यवर्षतदुर्धर्षस्त्यक्त्वाजीवितमात्मनः ॥ सपांडवानांप्रवरान्पंचराजन्महारथान् ३० आत्तशस्त्रोरणेयत्नाद्वारयामाससायकैः ॥ नानाशस्त्रास्त्रवर्षैस्तान्वीर्याम
र्षप्रवेरितैः ३१ निजघ्नेसमरेक्रुद्धोहस्त्यश्वंचामितंबहु ॥ रथिनोऽपातयद्राजन्रथेभ्यःपुरुषर्षभ ३२ सादिनश्चाश्वपृष्ठेभ्यःपादातांश्चसमागतान् ॥ गजारोहान्गजे
भ्यश्चपरेषांजयकारिणः ३३ तमेकंसमरेभीष्मंत्वरमाणंमहारथम् ॥ पांडवाःसमवर्तंतवज्रहस्तमिवासुराः ३४ शक्राशनिसमस्पर्शान्विमुंचन्निशिताञ्छरान्
३५ दिक्ष्वदृश्यतसर्वासुघोरंसंधारयन्वपुः ॥ मंडलीभूतमेवास्यनित्यंधनुरदृश्यत ३६ संग्रामेयुद्ध्यमानस्यशक्रचापोपमंमहत् ॥ तद्दृष्ट्वासमरेकर्मपुत्रास्तववि
शांपते ३७ विस्मयंपरमंगत्वापितामहमपूजयन् ॥ पार्थाविमनसोभूत्वाप्रैक्षंतपितरंतव ३८ युद्ध्यमानंरणेशूरंविप्रचित्तिमिवामराः ॥ नचैनंवारयामासु
र्व्यात्ताननमिवांतकम् ३९ दशमेऽहनिसंप्राप्तेरथानीकंशिखंडिनः ॥ अदहन्निशितैर्बाणैःकृष्णवर्त्मेवकाननम् ४० तंशिखंडीत्रिभिर्बाणैरभ्यविध्यत्स्तनांतरे ॥
आशीविषमिवक्रुद्धंकालसृष्टमिवांतकम् ४१ सतेनातिभृशंविद्धःप्रेक्ष्यभीष्मःशिखंडिनम् ॥ अनिच्छन्निवसंक्रुद्धःप्रहसन्निदमब्रवित् ४२ काममभ्यसवामावानत्वां
यात्स्येकथंचन ॥ यैवहित्वंकृताधात्रासैवहित्वंशिखंडिनी ४३

४४ । ४५ । ४६ । ४७ । ४८ सुदृष्टःक्रियतांनपुनर्द्रक्ष्यसिलोकमिमंमितिभावः ४९ । ५० । ५१ । ५२ । ५३ । ५४ साश्रयस्त्वस्त्रीकुरुजहिवा ५५ । ५६ । ५७ । ५८ । ५९ । ६० इतिभीष्मपर्वणि

तस्यतद्वचनंश्रुत्वाशिखंडीक्रोधमूर्च्छितः ॥ उवाचैनंतथाभीष्मंसृक्किणीपरिसंलिहन् ४४ जानामित्वांमहाबाहोक्षत्रियाणांक्षयंकरम् ॥ मयाश्रुतंचतेयुद्धंजामदग्न्ये
नवैसह ४५ दिव्यश्चतेप्रभावोऽयंमयाचबहुशःश्रुतः ॥ जानन्नपिप्रभावंतेयोत्स्येऽद्याहंत्वयासह ४६ पांडवानांप्रियंकुर्वन्नात्मनश्चनरोत्तम ॥ अद्यत्वांयोधयिष्या
मिरणेपुरुषसत्तम ४७ ध्रुवंचत्वांहनिष्यामिशपेसत्येनतेऽग्रतः ॥ एतच्छ्रुत्वाचमद्वाक्यंयत्कृत्यंतत्समाचर ४८ काममभ्यसवामावानमेजीवन्प्रमोक्ष्यसे ॥ सुदृष्टः
क्रियतांभीष्मलोकोऽयंसमितिंजय ४९ ॥ संजयउवाच ॥ एवमुक्त्वाततोभीष्मंपंचभिर्नतपर्वभिः ॥ अविध्यतरणेभीष्मंप्रणुन्नंवाक्यसायकैः ५० तस्यतद्वचनंश्रु
त्वासव्यसाचीमहारथः ॥ कालोऽयमितिसंचिंत्यशिखंडिनमचोदयत् ५१ अहंत्वामनुयास्यामिपरान्विद्रावयन्शरैः ॥ अभिद्रवसुसंरब्धोभीष्मंभीमपराक्रम ५२
नहितेसंयुगेपीडांशक्तःकर्तुंमहाबलः ॥ तस्मादद्यमहाबाहोयत्नाद्भीष्ममभिद्रव ५३ अहत्वासमरेभीष्मंयदियास्यसिमारिष ॥ अवहास्योऽस्यलोकस्यभविष्यसि
मयासह ५४ नावहास्यायथावीरभवेमपरमाहवे ॥ तथाकुरुरणेयत्नंसाधयस्वपितामहम् ५५ अहंतेरक्षणंयुद्धेकरिष्यामिमहाबल ॥ वारयन्रथिनःसर्वान्साध
यस्वपितामहम् ५६ द्रोणंचद्रोणपुत्रंचकृपंचाथसुयोधनम् ॥ चित्रसेनंविकर्णंचसैन्धवंचजयद्रथम् ५७ विंदानुविंदावावन्त्यौकांबोजंचसुदक्षिणम् ॥ भगदत्तंतथा
शूरंमागधंचमहाबलम् ५८ सौमदत्तिंतथाशूरमार्ष्यशृंगिंचराक्षसम् ॥ त्रिगर्तराजंचरणेसहसर्वैर्महारथैः ५९ अहमावारयिष्यामिवेलेवमकरालयम् ॥ कुरूंश्च
सहितान्सर्वान्युध्यमानान्महाबलान् ॥ निवारयिष्यामिरणेसाधयस्वपितामहम् ६० ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणिभीष्मशिखंडिसमागमे
अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ॥ ॥ ॥ धृतराष्ट्रउवाच ॥ कथंशिखंडीगांगेयमभ्यधावत्पितामहम् ॥ पांचाल्य समरेक्रुद्धोधर्मात्मानंयतव्रतम् १
केऽरक्षन्पांडवानीकेशिखंडिनमुदायुधाः ॥ त्वरमाणास्त्वराकालेजिगीषंतोमहारथाः २ कथंशांतनवोभीष्मःसतस्मिन्दशमेऽहनि ॥ अयुध्यतमहावीर्यःपांडवैःसह
सृंजयैः ३ नमृष्यामिरणेभीष्मंप्रत्युद्यातंशिखंडिना ॥ कच्चिन्नरथभंगोऽस्यधनुर्वाऽशीर्यतास्यतः ४ ॥ संजयउवाच ॥ नाशीर्यतधनुश्चास्यरथभंगोनचाप्यभूत् ॥
युध्यमानस्यसंग्रामेभीष्मस्यभरतर्षभ ५ निघ्नतःसमरेशत्रून्शरैःसन्नतपर्वभिः ॥ अनेकशतसाहस्रास्तावकानांमहारथाः ६ तथादंतिगणाराजन्हयाश्चैवसुस
ज्जिताः ॥ अभ्यवर्तन्तयुद्धायपुरस्कृत्यपितामहम् ७ यथाप्रतिज्ञंकौरव्यसचापिसमितिंजयः ॥ पार्थानामकरोद्भीष्मःसततंसमितिक्षयम् ८ युध्यमानंमहेष्वासं
विनिघ्नंतंपरान्शरैः ॥ पंचालाःपांडवैःसार्धंसर्वेतेनाभ्यवारयन् ९ दशमेऽहनिसंप्राप्तेततस्तांरिपुवाहिनीम् ॥ कीर्यमाणांशितैर्बाणैःशतशोऽथसहस्रशः १०


नीलकंठीयेभारतभावदीपेअष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ॥ ॥ कथमिति १ । २ । ३ । ४ । ५ । ६ । ७ समितिंजयः संग्रामजित् समितियुद्धे ८ । ९ । १०

११। १२। १३। १४। १५। १६। १७। १८। १९ द्रवतेद्रावयति २०। २१ गतिधामआश्रयमितियावत् स्थानेअवस्थाने २२। २३। २४। २५। २६ आह्निकंदिवसकार्यं २७ शेष्येस्वप्स्यामि

नहिभीष्मंमहेष्वासंपांडवाःपांडुपूर्वज ॥ अशक्नुवन्रणेजेतुंपाशहस्तमिवांतकम् ११ अथोपायान्महाराजसव्यसाचीधनंजयः ॥ त्रासयन्रथिनःसर्वान्बीभत्सुरपरा
जितः १२ सिंहवद्विनदन्नुच्चैर्धनुर्ज्यांविक्षिपन्मुहुः ॥ शरौघान्विसृजन्पार्थोव्यचरत्कालवद्रणे १३ तस्यशब्देनवित्रस्तास्तावकाभरतर्षभ ॥ सिंहस्येवमृगारा
जन्व्यद्रवंतमहाभयात् १४ जयन्तंपांडवंदृष्ट्वात्वत्सैन्यंचाभिपीडितम् ॥ दुर्योधनस्ततोभीष्ममब्रवीद्भृशपीडितः १५ एषपांडुसुतस्तातश्वेताश्वःकृष्णसारथिः ॥
दहतेमामकान्सर्वान्कृष्णवर्त्मेवकाननम् १६ पश्यसैन्यानिगांगेयद्रवमाणानिसर्वशः ॥ पांडवेनयुधांश्रेष्ठकाल्यमानानिसंयुगे १७ यथापशुगणान्पालःसंकाल
यतिकानने ॥ तथेदंमामकंसैन्यंकाल्यतेशत्रुतापन १८ धनंजयशरैर्भग्नंद्रवमाणंततस्ततः ॥ भीमोऽप्येवंदुराधर्षोविद्रावयतिमेबलम् १९ सात्यकिश्चेकितानश्चमाद्रीपुत्रौ
चपांडवौ ॥ अभिमन्युःसुविक्रांतोवाहिनींद्रवतेमम २० धृष्टद्युम्नस्तथाशूरोराक्षसश्चघटोत्कचः ॥ व्यद्रावयेतांसहसासैन्यंममममहारणे २१ वध्यमानस्यसैन्यस्यसर्वैरेतैर्म
हारथैः ॥ नान्यांगतिंप्रपश्यामिस्थानेयुद्धेचभारत २२ ऋतेत्वांपुरुषव्याघ्रदेवतुल्यपराक्रम ॥ पर्याप्तस्तुभवान्क्षिप्रंपीडितानांगतिर्भव २३ ॥ संजयउवाच ॥ एवमुक्तो
महाराजपितादेवव्रतस्तव ॥ चिंतयित्वामुहूर्तंतुकृत्वानिश्चयमात्मनः २४ तवसंधारयन्पुत्रमब्रवीच्छांतनोःसुतः ॥ दुर्योधनविजानीहिस्थिरोभूत्वाविशांपते २५
पूर्वकालंतवमयाप्रतिज्ञातंमहाबल ॥ हत्वादशसहस्राणिक्षत्रियाणांमहात्मनाम् २६ संग्रामाद्व्यपयातव्यमेतत्कर्ममआह्निकम् ॥ इतितत्कृतवांश्चाहंयथोक्तंभरतर्षभ
२७ अद्यचापिमहत्कर्मप्रकरिष्येमहाबल ॥ अहंवाऽद्यहतःशेष्येहनिष्येवाऽद्यपांडवान् २८ अद्यतेपुरुषव्याघ्रप्रतिमोक्ष्येऋणंतव ॥ भर्तृपिंडकृतंराजन्निहतःपृतना
मुखे २९ इत्युक्त्वाभरतश्रेष्ठक्षत्रियान्प्रवपञ्छरैः ॥ आससाददुराधर्षःपांडवानामनीकिनीम् ३० अनीकमध्येतिष्ठंतंगांगेयंभरतर्षभ ॥ आशीविषमिवक्रुद्धंपांडवाःप्र
त्यवारयन् ३१ दशमेऽहनिभीष्मस्तुदर्शयन्शक्तिमात्मनः ॥ राजन्शतसहस्राणिसोऽवधीत्कुरुनंदन ३२ पंचालानांचयेश्रेष्ठाराजपुत्रामहारथाः ॥ तेषामादत्ततेजांसि
जलंसूर्यइवांशुभिः ३३ हत्वादशसहस्राणिकुंजराणांतरस्विनाम् ॥ सारोहाणांमहाराजहयानांचायुतंतथा ३४ पूर्णेशतसहस्रेद्वेपादातानांनरोत्तमः ॥ प्रजज्वा
लरणेभीष्मोविधूमइवपावकः ३५ नचैनंपांडवेयानांकेचिच्छेकुर्निरीक्षितुम् ॥ उत्तरंमार्गमास्थायतपंतमिवभास्करम् ३६ तेपांडवेयाःसंरब्धामहेष्वासेनपीडिताः ॥
वधायाभ्यद्रवन्भीष्मंसृंजयाश्चमहारथाः ३७ संयुद्ध्यमानोबहुभिर्भीष्मःशांतनवस्तथा ॥ अवकीर्णोमहामेरुःशैलोमेघैरिवावृतः ३८ पुत्रास्तुतवगांगेयंसमंतात्प
र्यवारयन् ॥ महत्यासेनयासार्द्धंततोयुद्धमवर्तत ३९ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणिभीष्मदुर्योधनसंवादे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

२८। २९। ३०। ३१। ३२। ३३। ३४। ३५। ३६। ३७। ३८। ३९ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपेनवाधिकशततमोऽध्यायः ॥ १०९ ॥

अर्जुनइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ रभसंकृतोत्साहं १८ । १९ । २० । २१ । २२ । २३ प्रलयानिवप्रलयकालीना

॥ संजयउवाच ॥ अर्जुनस्तुरणेराजन्दृष्ट्वाभीष्मस्यविक्रमम् ॥ शिखंडिनमथोवाचसमभ्येहिपितामहम् १ नचापिभीस्त्वयाकार्याभीष्मादद्यकथंचन ॥ अहमेनंशरै
स्तीक्ष्णैःपातयिष्येरथोत्तमात् २ एवमुक्तस्तुपार्थेनशिखंडीभरतर्षभ ॥ अभ्यद्रवतगांगेयंश्रुत्वापार्थस्यभाषितम् ३ धृष्टद्युम्नस्तथाराजन्सौभद्रश्चमहारथः ॥ हृष्टावाद्र
वतांभीष्मंश्रुत्वापार्थस्यभाषितम् ४ विराटद्रुपदौवृद्धौकुंतिभोजश्चदंशितः ॥ अभ्यद्रवतगांगेयंपुत्रस्यतवपश्यतः ५ नकुलःसहदेवश्चधर्मराजश्चवीर्यवान् ॥ तथेतरा
णिसैन्यानिसर्वाण्येवविशांपते ६ समाद्रवंतगांगेयंश्रुत्वापार्थस्यभाषितम् ॥ प्रत्युद्ययुस्तावकाश्चसमेतांस्तान्महारथान् ७ यथाशक्तियथोत्साहंतन्मेनिगदतःशृणु ॥
चित्रसेनोमहाराजचेकितानंसमभ्ययात् ८ भीष्मप्रेप्सुंरणेयांतंवृषंव्याघ्रशिशुर्यथा ॥ धृष्टद्युम्नंमहाराजभीष्मांतिकमुपागतम् ९ त्वरमाणंरणेयत्तंकृतवर्मान्यवारयत् ॥
भीमसेनंसुसंक्रुद्धंगांगेयस्यवधैषिणम् १० त्वरमाणोमहाराजसौमदत्तिर्न्यवारयत् ॥ तथैवनकुलंशूरंकिरंतंसायकान्बहून् ११ विकर्णोवारयामासइच्छन्भीष्मस्यजीवि
तम् ॥ सहदेवंतथाराजन्यांतंभीष्मरथंप्रति १२ वारयामाससंक्रुद्धःकृपःशारद्वतोयुधि ॥ राक्षसंक्रूरकर्माणंभैमसेनिंमहाबलम् १३ भीष्मस्यनिधनंप्रेप्सुंदुर्मुखोऽभ्यद्र
वद्बली ॥ सात्यकिंसमरेयांतंतवपुत्रोन्यवारयत् १४ अभिमन्युंमहाराजयांतंभीष्मरथंप्रति ॥ सुदक्षिणोमहाराजकांबोजःप्रत्यवारयत् १५ विराटद्रुपदौवृद्धौसमेताव
रिमर्दनौ ॥ अश्वत्थामाततःक्रुद्धोवारयामासभारत १६ तथापांडुसुतंज्येष्ठंभीष्मस्यवधकांक्षिणं ॥ भारद्वाजोरणेयत्तोधर्मपुत्रमवारयत् १७ अर्जुनंरभसंयुद्धेपुरस्कृत्य
शिखंडिनम् ॥ भीष्मप्रेप्सुंमहाराजभासयंतंदिशोदश १८ दुःशासनोमहेष्वासोवारयामाससंयुगे ॥ अन्येचतावकायोधाःपांडवानांमहारथान् १९ भीष्मस्याभिमु
खान्यातान्वारयामासुराहवे ॥ धृष्टद्युम्नस्तुसैन्यानिप्राक्रोशंस्तुपुनःपुनः २० अभ्यद्रवतसंरब्धोभीष्ममेकंमहारथः ॥ एषोऽर्जुनोरणेभीष्मंप्रयातिकुरुनंदन २१ अभ्य
द्रवतमाभैष्टभीष्मोहिप्राप्स्यतेनवः ॥ अर्जुनंसमरेयोद्धुंनोत्सहेतापिवासवः २२ किमुभीष्मोरणेवीरागतसत्वोऽल्पजीवितः ॥ इतिसेनापतेःश्रुत्वापांडवानांमहारथाः
२३ अभ्यद्रवंतसंहृष्टागांगेयस्यरथंप्रति ॥ आगच्छमानान्समरेवार्योघान्प्रलयानिव २४ अवारयंतसंहृष्टास्तावकाःपुरुषर्षभाः ॥ दुःशासनोमहाराजभयंत्यक्त्वामहा
रथः २५ भीष्मस्यजीविताकांक्षीधनंजयमुपाद्रवत् ॥ तथैवपांडवाःशूरागांगेयस्यरथंप्रति २६ अभ्यद्रवंतसंग्रामेतवपुत्रान्महारथाः ॥ तत्राद्भुतमपश्यामचित्ररूपं
विशांपते २७ दुःशासनरथंप्राप्ययत्पार्थोनात्यवर्तत ॥ यथावारयतेवेलाक्षुब्धतोयंमहार्णवम् २८ तथैवपांडवंक्रुद्धंतवपुत्रोन्यवारयत् ॥ उभौतौरथिनांश्रेष्ठावुभौभारत
दुर्जयौ २९ उभौचंद्रार्कसदृशौकांत्यादीप्त्याचभारत ॥ तथातौजातसंरम्भावन्योन्यवधकांक्षिणौ ३०

निव २४ । २५ । २६ अद्भुतंअभूतपूर्वं २७ । २८ । २९ । ३०

३१।३२।३३।३४।३५।३६।३७।३८।३९।४० अप्रैषीत्उपसर्गात्पूर्वोऽडागमस्तुच्छांदसः एवमन्यत्रापि ४१।४२।४३।४४।४५ द्वीपआश्रयः ४६।४७।४८॥ इतिभी० नी० भा० दश

समीयतुर्महासंख्येमयशक्रौयथापुरा ॥ दुःशासनोमहाराजपांडवंविशिखैस्त्रिभिः ३१ वासुदेवंचविंशत्याताडयामाससंयुगे ॥ ततोऽर्जुनोजातमन्युर्वार्ष्णेयंवीक्ष्यपीडि
तम् ३२ दुःशासनंशतेनाजौनाराचानांसमार्पयत् ॥ तेतस्यकवचंभित्वापपुःशोणितमाहवे ३३ दुःशासनस्त्रिभिःक्रुद्धःपार्थंविव्याधपत्रिभिः ॥ ललाटेभरतश्रेष्ठशरैः
सन्नतपर्वभिः ३४ ललाटस्थैस्तुतैर्बाणैःशुशुभेपांडवोरणे ॥ यथामेरुर्महाराजशृंगैरत्यर्थमुच्छ्रितैः ३५ सोऽतिविद्धोमहेष्वासःपुत्रेणतवधन्विना ॥ व्यराजतरणेपार्थः
किंशुकःपुष्पवानिव ३६ दुःशासनंततःक्रुद्धःपीडयामासपांडवः ॥ पर्वणीवसुसंक्रुद्धोराहुःपूर्णंनिशाकरम् ३७ पीड्यमानोबलवतापुत्रस्तवविशांपते ॥ विव्याधसमरे
पार्थंकंकपत्रैःशिलाशितैः ३८ तस्यपार्थोधनुश्छित्वारथंचास्यत्रिभिःशरैः ॥ आजघानततःपश्चात्पुत्रंतेनिशितैःशरैः ३९ सोऽन्यत्कार्मुकमादायभीष्मस्यप्रमुखेस्थि
तः ॥ अर्जुनंपंचविंशत्याबाह्वोरुरसिचार्पयत् ४० तस्यक्रुद्धोमहाराजपांडवःशत्रुतापनः ॥ अप्रैषीद्विशिखान्घोरान्यमदंडोपमान्बहून् ४१ अप्राप्तानेवतान्बाणांश्चि
च्छेदतनयस्तव ॥ यतमानस्यपार्थस्यतदद्भुतमिवाभवत् ४२ पार्थंचनिशितैर्बाणैरविध्यत्तनयस्तव ॥ ततःक्रुद्धोरणेपार्थःशरान्संधायकार्मुके ४३ प्रेषयामाससमरेस्व
र्णपुंखाञ्छिलाशितान् ॥ न्यमज्जंस्तेमहाराजतस्यकायेमहात्मनः ४४ यथाहंसामहाराजतडागंप्राप्यभारत ॥ पीडितश्चैवपुत्रस्तेपांडवेनमहात्मना ४५ हित्वापार्थं
रणेतूर्णंभीष्मस्यरथमाव्रजत् ॥ अगाधेमज्जतस्तस्यद्वीपोभीष्मोऽभवत्तदा ४६ प्रतिलभ्यततःसंज्ञांपुत्रस्तवविशांपते ॥ अवारयत्ततःशूरोभूयएवपराक्रमी ४७ शरैःसुनि
शितैःपार्थंयथावृत्रंपुरंदरः ॥ निर्बिभेदमहाकायोविव्यथेनैवचार्जुनः ४८ ॥ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि भीष्मवधपर्वणि अर्जुनदुःशासनसमागमेदशाधिक
शततमोऽध्यायः ॥ ११० ॥ ॥ ॥ ॥ ॥ ॥ संजयउवाच ॥ सात्यकिंदंशितंयुद्धेभीष्मायाभ्युद्यतंरणे ॥ आर्ष्यशृंगिर्महेष्वासोवारया
माससंयुगे १ माधवस्तुसुसंक्रुद्धोराक्षसंनवभिःशरैः ॥ आजघानरणेराजन्प्रहसन्निवभारत २ तथैवराक्षसोराजन्माधवंनवभिःशरैः ॥ अर्दयामासराजेंद्रसंक्रुद्धःशिनिपुं
गवम् ३ शैनेयःशरसंघंतुप्रेषयामाससंयुगे ॥ राक्षसायसुसंक्रुद्धोमाधवःपरवीरहा ४ ततोरक्षोमहाबाहुंसात्यकिंसत्यविक्रमम् ॥ विव्याधविशिखैस्तीक्ष्णैःसिंहनादंन
नादच ५ माधवस्तुभृशंविद्धोराक्षसेनरणेतदा ॥ वार्यमाणश्चतेजस्वीजहासचननादच ६ भगदत्तस्ततःक्रुद्धोमाधवंनिशितैःशरैः ॥ ताडयामाससमरेतोत्रैरिवमहाग
जम् ७ विहायराक्षसंयुद्धेशैनेयोरथिनांवरः ॥ प्राग्ज्योतिषायचिक्षेपशरान्सन्नतपर्वणः ८ तस्यप्राग्ज्योतिषोराजामाधवस्यमहद्धनुः ॥ चिच्छेदशतधारेणभल्लेनकृतह
स्तवत् ९ अथान्यद्धनुरादायवेगवत्परवीरहा ॥ भगदत्तंरणेक्रुद्धंविव्याधनिशितैःशरैः १० सोऽतिविद्धोमहेष्वासःसृक्किणीपरिसंलिहन् ॥ शक्तिंकनकवैदूर्यभूषिता
मायसींदृढाम् ११

धिकशत तमोऽध्यायः ॥ ११० ॥ सात्यकिमिति १।२।३।४।५।६।७।८।९।१०।११

यमदंडोपमांघोरांचिक्षेपपरमाहवे ॥ तामापतन्तींसहसातस्यबाहुबलेरिताम् १२ सात्यकिःसमरेराजन्द्विधाचिच्छेदसायकैः ॥ ततःपपातसहसामहोल्केवहतप्रभा
१३ शक्तिंविनिहतांदृष्ट्वापुत्रस्तवविशांपते ॥ महतारथवंशेनवारयामाससमाधवम् १४ तथापरिवृतंदृष्ट्वावार्ष्णेयानांमहारथम् ॥ दुर्योधनोभृशंक्रुद्धोभ्रातॄन्सर्वानुवा
चह १५ तथाकुरुतकौरव्यायथावःसात्यकोयुधि ॥ नजीवन्प्रतिनिर्यातिमहतोऽस्माद्रथव्रजात् १६ तस्मिन्हतेहतंमन्येपाण्डवानांमहद्बलम् ॥ तथेतिचवचस्तस्य
परिगृह्यमहारथाः १७ शैनेयंयोधयामासुर्भीष्मायाभ्युद्यतंरणे ॥ काम्बोजराजोबलवान्वारयामाससंयुगे १८ आर्जुनिंनृपतिर्विद्ध्वाशरैःसन्नतपर्वभिः ॥ पुनरेवचतुः
षष्ट्याराजन्विव्याधतंनृप १९ सुदक्षिणस्तुसमरेपुनर्विव्याधपंचभिः ॥ सारथिंचास्यनवभिरिच्छन्भीष्मस्यजीवितम् २० तद्युद्धमासीत्सुमहत्तयोस्तत्रसमागमे ॥
यदाऽभ्यधावद्गांगेयंशिखंडीशत्रुकर्शनः २१ विराटद्रुपदौवृद्धौवारयंतौमहाचमूम् ॥ भीष्मंचयुधिसंरब्धावाद्रवंतौमहारथौ २२ अश्वत्थामारणेक्रुद्धःसमियाद्रथस
त्तमः ॥ ततःप्रववृतेयुद्धंतयोस्तस्यचभारत २३ विराटोदशभिर्भल्लैराजघानपरंतप ॥ यतमानंमहेष्वासंद्रौणिमाहवशोभिनम् २४ द्रुपदश्चत्रिभिर्बाणैर्विव्याधनिशितै
स्तदा ॥ गुरुपुत्रंसमासाद्यप्रहरंतौमहाबलौ २५ अश्वत्थामाततस्तौतुविव्याधबहुभिःशरैः ॥ विराटद्रुपदौवीरौभीष्मंप्रतिसमुद्यतौ २६ तत्राद्भुतमपश्यामवृद्धयोश्चरि
तंमहत् ॥ यद्द्रौणिसायकान्घोरान्प्रत्यवारयतांयुधि २७ सहदेवंतथायांतंकृपःशारद्वतोऽभ्ययात् ॥ यथानागोवनेनागंमत्तोमत्तमुपाद्रवत् २८ कृपश्चसमरेशूरोमाद्री
पुत्रंमहारथम् ॥ आजघानशरैस्तूर्णंसप्तत्यारुक्मभूषणैः २९ तस्यमाद्रीसुतश्चापंद्विधाचिच्छेदसायकैः ॥ अथैनंछिन्नधन्वानंविव्याधनवभिःशरैः ३० सोऽन्यत्कार्मु
कमादायसमरेभारसाधनम् ॥ माद्रीपुत्रंसुसंहृष्टोदशभिर्निशितैःशरैः ३१ आजघानोरसिक्रुद्धइच्छन्भीष्मस्यजीवितम् ॥ तथैवपांडवोराजञ्छारद्वतममर्षणम् ३२
आजघानोरसिक्रुद्धोभीष्मस्यवधकांक्षया ॥ तयोर्युद्धंसमभवद्घोररूपंभयावहम् ३३ नकुलंतुरणेक्रुद्धोविकर्णःशत्रुतापनः ॥ विव्याधसायकैःषष्ट्यारक्षन्भीष्मंमहा
बलम् ३४ नकुलोऽपिभृशंविद्धस्तवपुत्रेणधीमता ॥ विकर्णंसप्तसप्तत्यानिर्बिभेदशिलीमुखैः ३५ तत्रतौनरशार्दूलौभीष्महेतोःपरंतपौ ॥ अन्योन्यंजघ्नतुर्वीरौगोष्ठे
गोवृषभाविव ३६ घटोत्कचंरणेयांतंनिघ्नंतंतववाहिनीम् ॥ दुर्मुखःसमरेप्रायाद्भीष्महेतोःपराक्रमी ३७ हैडिंबस्तुरणेराजन्दुर्मुखंशत्रुतापनम् ॥ आजघानोरसिक्रुद्धःशरे
णानतपर्वणा ३८ भीमसेनसुतंचापिदुर्मुखःसुमुखैःशरैः ॥ षष्ट्यावीरोनदन्हृष्टोविव्याधरणमूर्धनि ३९ धृष्टद्युम्नंतथायांतंभीष्मस्यवधकांक्षिणम् ॥ हार्दिक्योवारया
मासरथश्रेष्ठंमहारथः ४० हार्दिक्यःपार्षतंचापिविद्ध्वापंचभिरायसैः ॥ पुनःपंचाशतातूर्णंतिष्ठतिष्ठेतिचाब्रवीत् ४१ आजघानमहाबाहुःपार्षतंतंमहारथम् ॥ तंचैवपार्षतो
राजन्हार्दिक्यंनवभिःशरैः ४२

विव्याधनिशितैस्तीक्ष्णैःकंकपत्रैरजिह्मगैः ॥ तयोःसमभवद्युद्धंभीष्महेतोर्महाहवे ४३ अन्योन्यातिशयेयुक्तंयथावृत्रमहेन्द्रयोः ॥ भीमसेनंतथायांतंभीष्मंप्रतिमहा
रथम् ४४ भूरिश्रवाभ्ययात्तूर्णंतिष्ठतिष्ठेतिचाब्रवीत् ॥ सौमदत्तिरथोभीममाजघानस्तनांतरे ४५ नाराचेनसुतीक्ष्णेनरुक्मपुंखेनसंयुगे ॥ उरःस्थेनबभौतेनभीमसेनःप्रताप
वान् ४६ स्कंदशक्त्यायथाक्रौञ्चःपुरानृपतिसत्तम ॥ तौशरान्सूर्यसंकाशान्कर्मारपरिमार्जितान् ४७ अन्योन्यस्यरणेक्रुद्धौचिक्षिपातेनरर्षभौ ॥ भीमोभीष्मवधा
कांक्षीसौमदत्तिंमहारथम् ४८ तथाभीष्मजयेगृघ्नुःसौमदत्तिस्तुपांडवम् ॥ कृतप्रतिकृतेयत्तौयोधयामासतूरणे ४९ युधिष्ठिरंतुकौंतेयंमहत्यासेनयावृतम् ॥ भीष्मा
भिमुखमायांतंभारद्वाजोन्यवारयत् ५० द्रोणस्यरथनिर्घोषंपर्जन्यनिनदोपमम् ॥ श्रुत्वाप्रभद्रकाराजन्समकंपंतमारिष ५१ सासेनामहतीराजन्पांडुपुत्रस्यसंयुगे ॥
द्रोणेनवारितायत्तानचचालपदात्पदम् ५२ चेकितानंरणेयत्तंभीष्मंप्रतिजनेश्वर ॥ चित्रसेनस्तवसुतःक्रुद्धरूपमवारयत् ५३ भीष्महेतोःपराक्रांतश्चित्रसेनःपराक्रमी ॥
चेकितानंपरंशक्त्यायोधयामासभारत ५४ तथैवचेकितानोऽपिचित्रसेनमवारयत् ॥ तद्युद्धमासीत्सुमहत्तयोस्तत्रसमागमे ५५ अर्जुनोवार्यमाणस्तुबहुशस्तत्रभारत ॥
विमुखीकृत्यपुत्रंतेसेनांतवममर्दह ५६ दुःशासनोऽपिपरयाशक्त्यापार्थमवारयत् ॥ कथंभीष्मंननोहन्यादितिनिश्चित्यभारत ५७ सावध्यमानासमरेपुत्रस्यतववाहि
नी ॥ लोड्यतेरथिभिःश्रेष्ठैस्तत्रतत्रैवभारत ५८ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभी० द्वंद्वयुद्धे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥ संजयउवाच ॥ अथवी
रोमहेष्वासोमत्तवारणविक्रमः ॥ समादायमहच्चापंमत्तवारणवारणम् १ विधुन्वानोनरश्रेष्ठोद्रावयाणोवरूथिनीम् ॥ पृतनांपांडवेयानांगाहमानोमहाबलः २ निमित्ता
निनिमित्तज्ञःसर्वतोवीक्ष्यवीर्यवान् ॥ प्रतपंतमनीकानिद्रोणःपुत्रमभाषत ३ अयंहिदिवसस्तातयत्रपार्थोमहाबलः ॥ जिघांसुःसमरेभीष्मंपरंयत्नंकरिष्यति ४ उत्प
तंतिहिमेबाणाधनुःप्रस्फुरतीवच ॥ योगमस्त्राणिगच्छंतिक्रूरेमेवर्ततेमतिः ५ दिक्ष्वशांतानिघोराणिव्याहरंतिमृगद्विजाः ॥ नीचैर्गृध्रानिलीयंतेभारतानांचमूंप्रति ६
नष्टप्रभइवादित्यःसर्वतोलोहितादिशः ॥ रसतेव्यथतेभूमिःकंपतीवचसर्वशः ७ कंकगृध्राबलाकाश्चव्याहरंतिमुहुर्मुहुः ॥ शिवाश्चैवाशिवाघोरावेदयंत्योमहद्भयम् ८
पपातमहतीचोल्कामध्येनादित्यमंडलात् ॥ सकबंधश्चपरिघोभानुमावृत्यतिष्ठति ९ परिवेषस्तथाघोरश्चंद्रभास्करयोरभूत् ॥ वेदयानोभयंघोरंराज्ञांदेहावकर्तनम् १०
देवतायतनस्थाश्चकौरवेंद्रस्यदेवताः ॥ कंपंतेचहसंतेचनृत्यंतिचरुदंतिच ११ अपसव्यंग्रहाश्चकुरलक्ष्माणंदिवाकरम् ॥ अवाक्शिराश्चभगवानुपातिष्ठतचंद्रमाः १२

ऽध्यायः ॥ १११ ॥ अथेति १ । २ । ३ । ४ । ५ घोराणिभयंकराणि अशांतानिअनुपरतानि ६ रसतेशब्दायते व्यथतेबिभेतीवकंपतइवच ७ । ८ । ९ । १० । ११ अलक्ष्माणंप्रचंडलक्षणलक्षितं अवाक्
शिराअधोमुखकोटिद्वयः १२

१३ । १४ आस्थायआलंब्य १५ । १६ । १७ । १८ । १९ । २० अस्त्रसमारंभःउग्रममात्रंनतुपूर्ववदस्त्राणामुपस्थितिः २१ । २२ । २३ । २४ । २५ । २६ । २७ हेपुत्रउपजीविभिरनुगतैः २८ । २९

वपूंषिचनरेन्द्राणांविगताभानिलक्षये ॥ धार्तराष्ट्रस्यसैन्येपुनचभ्राजंतिदंशिताः १३ सेनयोरुभयोश्चापिसमंताच्छ्रूयतेमहान् ॥ पांचजन्यस्यनिर्घोषोगांडीवस्य
चनिःस्वनः १४ ध्रुवमास्थायबीभत्सुरुत्तमास्त्राणिसंयुगे ॥ अपास्यान्यान्रणेयोधानभ्येष्यतिपितामहम् १५ हृष्यंतिरोमकूपाणिसीदतीवचमेमनः ॥ चिंतयि
त्वामहाबाहोभीष्मार्जुनसमागमम् १६ तंचेहनिकृतिप्रज्ञंपांचाल्यंपापचेतसम् ॥ पुरस्कृत्यरणेपार्थोभीष्मस्यायोधनंगतः १७ अब्रवीच्चपुराभीष्मोनाहंहन्यांशि
खंडिनम् ॥ स्त्रीह्येषाविहिताधात्रादैवाच्चसपुनःपुमान् १८ अमंगल्यध्वजश्चैवयाज्ञसेनिर्महाबलः ॥ नचामंगलिकेतस्मिन्प्रहरेदापगासुतः १९ एतद्विचिंतयान
स्यप्रज्ञासीदतिमेभृशम् ॥ अभ्युद्यतोरणेपार्थःकुरुवृद्धमुपाद्रवत् २० युधिष्ठिरस्यचक्रोधोभीष्मश्चार्जुनसंगतः ॥ ममचास्त्रसमारंभःप्रजानामशिवंध्रुवम् २१
मनस्वीबलवान्शूरःकृतास्त्रोलघुविक्रमः ॥ दूरपातीदृढेषुश्चनिमित्तज्ञश्चपांडवः २२ अजेयःसमरेचापिदेवैरपिसवासवैः ॥ बलवान्बुद्धिमांश्चैवजितक्लेशोयुधांवरः
२३ विजयीचरणेनित्यंभैरवास्त्रश्चपांडवः ॥ तस्यमार्गंपरिहरन्द्रुतंगच्छयतव्रत २४ पश्याद्यैतन्महाघोरेसंयुगेवैशसंमहत् ॥ हेमचित्राणिशूराणांमहांतिचशुभानि
च २५ कवचान्यवदीर्यन्तेशरैःसन्नतपर्वभिः ॥ छिद्यन्तेचध्वजाग्राणितोमराश्चधनूंषिच २६ प्रासाश्चविमलास्तीक्ष्णाःशक्तयश्चकनकोज्ज्वलाः ॥ वैजयंत्यश्चना
गानांसंक्रुद्धेनकिरीटिना २७ नायंसंरक्षितुंकालःप्राणान्पुत्रोपजीविभिः ॥ याहिस्वर्गंपुरस्कृत्ययशसेविजयायच २८ रथनागहयावर्तांमहाघोरांसुदुर्गमाम् ॥
रथेनसंग्रामनदींतरत्येषकपिध्वजः २९ ब्रह्मण्यतादमोदानंतपश्चचरितंमहत् ॥ इहैवदृश्यतेपार्थेभ्रातायस्यधनंजयः ३० भीमसेनश्चबलवान्माद्रीपुत्रौचपांडवौ ॥
वासुदेवश्चवार्ष्णेयोयस्यनाथोव्यवस्थितः ३१ तस्यैषमन्युप्रभवोधार्तराष्ट्रस्यदुर्मतेः ॥ तपोदग्धशरीरस्यकोपोदहतिभारतीम् ३२ एषसंदृश्यतेपार्थोवासुदेवव्यपा
श्रयः ॥ दारयन्सर्वसैन्यानिधार्तराष्ट्राणिसर्वशः ३३ एतदालोक्यतेसैन्यंक्षोभ्यमाणंकिरीटिना ॥ महोर्मिनद्धंसुमहत्तिमिनेवमहाजलम् ३४ हाहाकिलकिला
शब्दाःश्रूयंतेचचमूमुखे ॥ याहिपांचालदायादमहंयास्येयुधिष्ठिरम् ३५ दुर्गमंह्यंतरंराज्ञोव्यूहस्यामिततेजसः ॥ समुद्रकुक्षिप्रतिमंसर्वतोऽतिरथैःस्थितैः ३६
सात्यकिश्चाभिमन्युश्चधृष्टद्युम्नवृकोदरौ ॥ पर्यरक्षंतराजानंयमौचमनुजेश्वरम् ३७ उपेन्द्रसदृशःश्यामोमहाशालइवोद्गतः ॥ एषगच्छत्यनीकाग्रेद्वितीयइवफा
ल्गुनः ३८ उत्तमास्त्राणिचाधत्स्वगृहीत्वाचमहद्धनुः ॥ पार्षतंयाहिराजानंयुध्यस्वचवृकोदरम् ३९ कोहिनेच्छेत्प्रियंपुत्रंजीवन्तंशाश्वतीःसमाः ॥ क्षत्रधर्मंतु
संप्रेक्ष्यततस्त्वांनियुनज्म्यहम् ४० एषचातिरणेभीष्मोदहतेवैमहाचमूम् ॥ युद्धेषुसदृशस्तातयमस्यवरुणस्यच ४१ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्म
वधपर्वणि द्रोणाश्वत्थामसंवादे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

पार्थेयुधिष्ठिरे ३० । ३१ तस्यधर्मस्यमन्युर्दैन्यंभारतींसेनामितिशेषः ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ ॥ इति भी०नी०भा० द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

भगदत्तइति १।२।३।४।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६।१७।१८।१९।२० कर्मारंशस्त्रोल्लेखनयंत्रम् २१।२२।२३।२४।२५।२६।२७।२८।२९।३०।३१

॥ संजयउवाच ॥ ॥ भगदत्तःकृपःशल्यःकृतवर्मातथैवच ॥ विंदानुविंदावावन्त्यौसैन्धवश्चजयद्रथः १ चित्रसेनोविकर्णश्चतथादुर्मर्षणादयः ॥ दशैतेतावकायो
धाभीमसेनमयोधयन् २ महत्यासेनयायुक्तानानादेशसमुत्थया ॥ भीष्मस्यसमरेराजन्प्रार्थयानामहद्यशः ३ शल्यस्तुनवभिर्बाणैर्भीमसेनमताडयत् ॥ कृतव
र्मात्रिभिर्बाणैःकृपश्चनवभिःशरैः ४ चित्रसेनोविकर्णश्चभगदत्तश्चमारिष ॥ दशभिर्दशभिर्बाणैर्भीमसेनमताडयन् ५ सैन्धवश्चत्रिभिर्बाणैर्भीमसेनमताडयत् ॥ विंदा
नुविंदावावंत्यौपंचभिःपंचभिःशरैः ६ दुर्मर्षणस्तुविंशत्यापांडवंनिशितैःशरैः ॥ सतान्सर्वान्महाराजराजमानान्पृथक्पृथक् ७ प्रवीरान्सर्वलोकस्यधार्तराष्ट्रान्म
हारथान् ॥ जघानसमरेवीरःपांडवःपरवीरहा ८ सप्तभिःशल्यमाविध्यत्कृतवर्माणमष्टभिः ॥ कृपस्यसशरंचापंमध्येचिच्छेदभारत ९ अथैनंछिन्नधन्वानंपुनर्वि
व्याधसप्तभिः ॥ विन्दानुविंदौचतथात्रिभिस्त्रिभिरताडयत् १० दुर्मर्षणंचविंशत्याचित्रसेनंचपंचभिः ॥ विकर्णंदशभिर्बाणैःपंचभिश्चजयद्रथम् ११ विध्वाभीमोन
दद्धृष्टःसैन्धवंचपुनस्त्रिभिः ॥ अथान्यद्धनुरादायगौतमोरथिनांवरः १२ भीमंविव्याधसंरब्धोदशभिर्निशितैःशरैः ॥ सविद्धोदशभिर्बाणैस्तोत्रैरिवमहाद्विपः ॥
१३ ततःक्रुद्धोमहाराजभीमसेनःप्रतापवान् ॥ गौतमंताडयामासशरैर्बहुभिराहवे १४ सैन्धवस्यतथाश्वांश्चसारथिंचत्रिभिःशरैः ॥ प्राहिणोन्मृत्युलोकायकालांत
कसमद्युतिः १५ हताश्वात्तुरथात्तूर्णमवप्लुत्यमहारथः ॥ शरांश्चिक्षेपनिशितान्भीमसेनस्यसंयुगे १६ तस्यभीमोधनुर्मध्येद्वाभ्यांचिच्छेदमारिष ॥ भल्लाभ्यांभरत
श्रेष्ठसैन्धवस्यमहात्मनः १७ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ चित्रसेनरथंराजन्नारुरोहत्वरान्वितः १८ अत्यद्भुतंरणेकर्मकृतवांस्तत्रपांडवः ॥ महारथान्
शरैर्विद्ध्वावारयित्वाचमारिष १९ विरथंसैन्धवंचक्रेसर्वलोकस्यपश्यतः ॥ तदानमम्रषेशल्योभीमसेनस्यविक्रमम् २० ससंधायशरांस्तीक्ष्णान्कर्मारपरिमार्जि
तान् ॥ भीमंविव्याधसमरेतिष्ठतिष्ठेतिचाब्रवीत् २१ कृपश्चकृतवर्माचभगदत्तश्चवीर्यवान् ॥ विंदानुविंदावावंत्यौचित्रसेनश्चसंयुगे २२ दुर्मर्षणोविकर्णश्चसिंधुरा
जश्चवीर्यवान् ॥ भीमंतेविव्यधुस्तूर्णंशल्यहेतोररिंदमाः २३ सचतान्प्रतिविव्याधपंचभिःपंचभिःशरैः ॥ शल्यंविव्याधसप्तत्यापुनश्चदशभिःशरैः २४ तंशल्योन
वभिर्भित्त्वापुनर्विव्याधपंचभिः ॥ सारथिंचास्यभल्लेनगाढंविव्याधमर्मणि २५ विशोकंप्रेक्ष्यनिर्भिन्नंभीमसेनःप्रतापवान् ॥ मद्रराजंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत्
२६ तथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ॥ ताडयामाससमरेसिंहवद्विननादच २७ तेहियत्तामहेष्वासाःपांडवंयुद्धकोविदम् ॥ त्रिभिस्त्रिभिरकुंठाग्रैर्भृशंमर्म
स्वताडयन् २८ सोऽतिविद्धोमहेष्वासोभीमसेनोनविव्यथे ॥ पर्वतोवारिधाराभिर्वर्षमाणैरिवांबुदैः २९ सतुक्रोधसमाविष्टःपांडवानांमहारथः ॥ मद्रेश्वरंत्रिभि
र्बाणैर्भृशंविध्वामहायशाः ३० कृपंचनवभिर्बाणैर्भृशंविध्वासमंततः ॥ प्राग्ज्योतिषंशतैराजौराजन्विव्याधसायकैः ३१

सात्वतस्यकृतवर्मणः ३२ । ३३ । ३४ । ३५ मत्वातृणेनतांस्तुल्यानितितुल्यशब्दोपादानान्नद्वितीयाचतुर्थ्यौकिंतुतुल्यार्थैरतुलोपमाभ्यामितितृतीया ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

ततस्तुसशरंचापंसात्वतस्यमहात्मनः ॥ क्षुरप्रेणसुतीक्ष्णेनचिच्छेदकृतहस्तवत् ३२ तथाऽन्यद्धनुरादायकृतवर्मावृकोदरम् ॥ आजघानभ्रुवोर्मध्येनाराचेनपरं
तपः ३३ भीमस्तुसमरेविध्वाशल्यंनवभिरायसैः ॥ भगदत्तंत्रिभिश्चैवकृतवर्माणमष्टभिः ३४ द्वाभ्यांद्वाभ्यांतुविव्याधगौतमप्रभृतीन्रथान् ॥ तेऽपितंसमरेरा
जन्विव्यधुर्निशितैःशरैः ३५ सतथापीड्यमानोऽपिसर्वशस्त्रैर्महारथैः ॥ मत्वातृणेनतांस्तुल्यान्विचचारगतव्यथः ३६ तेचापिरथिनांश्रेष्ठाभीमायनिशितान्श
रान् ॥ प्रेषयामासुरव्यग्राःशतशोऽथसहस्रशः ३७ तस्यशक्तिंमहावेगांभगदत्तोमहारथः ॥ चिक्षेपसमरेवीरःस्वर्णदंडांमहामते ३८ तोमरंसैन्धवोराजापट्टिशंचम
हाभुजः ॥ शतघ्नींचकृपोराजञ्छरंशल्यश्चसंयुगे ३९ अथेतरेमहेष्वासाःपंचपंचशिलीमुखान् ॥ भीमसेनंसमुद्दिश्यप्रेषयामासुरोजसा ४० तोमरंचद्विधाचक्रेक्षुरप्रे
णानिलात्मजः ॥ पट्टिशंचत्रिभिर्बाणैश्चिच्छेदतिलकांडवत् ४१ सबिभेदशतघ्नींचनवभिःकंकपत्रिभिः ॥ मद्रराजप्रयुक्तंचशरंछित्त्वामहारथः ४२ शक्तिंचिच्छेदसहसा
भगदत्तेरितांरणे ॥ तथेतरान्शरान्घोरान्शरैःसन्नतपर्वभिः ४३ भीमसेनोरणश्लाघीत्रिधैकैकंसमाच्छिनत् ॥ तांश्चसर्वान्महेष्वासांस्त्रिभिस्त्रिभिरताडयत् ४४ ततोधनंजय
स्तत्रवर्तमानेमहारणे ॥ आजगामरथेनाजौभीमंदृष्ट्वामहारथम् ४५ निघ्नन्तंसमरेशत्रून्योधयानंचसायकैः ॥ तौतुतत्रमहात्मानौसमेतौवीक्ष्यपांडवौ ४६ नशशंसुर्जयंत
त्रतावकाःपुरुषर्षभाः ॥ अथार्जुनोरणेभीमंयोधयन्तंमहारथान् ४७ भीष्मस्यनिधनाकांक्षीपुरस्कृत्यशिखंडिनम् ॥ आससादरणेवीरांस्तावकान्दशभारत ४८
येस्मभीमंरणेराजन्योधयंतोव्यवस्थिताः ॥ बीभत्सुस्तानथाविध्यद्भीमस्यप्रियकाम्यया ४९ ततोदुर्योधनोराजासुशर्माणमचोदयत् ॥ अर्जुनस्यवधार्थायभीमसे
नस्यचोभयोः ५० सुशर्मन्गच्छशीघ्रंत्वंबलौघैःपरिवारितः ॥ जहिपांडुसुतावेतौधनंजयवृकोदरौ ५१ तच्छ्रुत्वावचनंतस्यत्रैगर्तःप्रस्थलाधिपः ॥ अभिद्रुत्य
रणेभीममर्जुनंचैवधन्विनौ ५२ रथैरनेकसाहस्रैःसमंतात्पर्यवारयत् ॥ ततःप्रववृतेयुद्धमर्जुनस्यपरैःसह ५३ ॥ इतिमहाभारते भीष्मपर्वणि भीष्मवधपर्वणि
भीमपराक्रमेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ संजयउवाच ॥ ॥ अर्जुनस्तुरणेशल्यंयतमानंमहारथम् ॥ छादयामाससमरेशरैःसन्न
तपर्वभिः १ सुशर्माणंकृपंचैवत्रिभिस्त्रिभिरविध्यत ॥ प्राग्ज्योतिषंचसमरेसैन्धवंचजयद्रथम् २ चित्रसेनंविकर्णंचकृतवर्माणमेवच ॥ दुर्मर्षणंचराजेन्द्रह्यावंत्यौच
महारथौ ३ एकैकंत्रिभिरानर्च्छत्कंकबर्हिणवाजितैः ॥ शरैरतिरथोयुद्धेपीडयन्वाहिनींतव ४ जयद्रथोरणेपार्थंविध्वाभारतसायकैः ॥ भीमंविव्याधतरसाचित्रसे
नरथेस्थितः ५ शल्यश्चसमरेजिष्णुंकृपश्चरथिनांवरः ॥ विव्यधातेमहाराजबहुधामर्मभेदिभिः ६

४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ अर्जुनइति १ । २ । ३ । ४ । ५ । ६

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ बर्हिणवाजानांमयूरपक्षवतांबाणानाम् २४ । २५ । २६ । २७ । २८ । २९ मागधोजयत्सेनः

चित्रसेनादयश्चैवपुत्रास्तवविशांपते ॥ पंचभिःपंचभिस्तूर्णंसंयुगेनिशितैःशरैः ७ आजघ्नुरर्जुनंसंख्येभीमसेनंचमारिष ॥ तौतत्ररथिनांश्रेष्ठौकौन्तेयौभरतर्षभौ ८
अपीडयेतांसमरेत्रिगर्तानांमहद्बलम् ॥ सुशर्माऽपिरणेपार्थंशरैर्नवभिराशुगैः ९ ननादबलवन्नादंत्रासयानोमहद्बलम् ॥ अन्येचरथिनःशूराभीमसेनधनंजयौ १०
विव्यधुर्निशितैर्बाणैरुक्मपुंखैरजिह्मगैः ॥ तेषांचरथिनांमध्येकौन्तेयौभरतर्षभौ ११ क्रीडमानौरथोदारौचित्ररूपौव्यदृश्यताम् ॥ आमिषेप्सूगवांमध्येसिंहाविव
मदोत्कटौ १२ छित्वाधनूंषिशूराणांशरांश्चबहुधारणे ॥ पातयामासतुर्वीरौशिरांसिशतशोनृणाम् १३ रथाश्चबहवोभग्नाहयाश्चशतशोहताः ॥ गजाश्चसगजा
रोहाःपेतुरुर्व्यांमहा[illegible] १४ रथिनःसादिनश्चापितत्रतत्रनिषूदिताः ॥ दृश्यन्तेबहवोराजन्वेपमानाःसमंततः १५ हतैर्गजपदात्योघैर्वाजिभिश्चनिषूदितैः ॥ रथैश्चब
हुधाभग्नैःसमास्तीर्यतमेदिनी १६ छत्रैश्चबहुधाच्छिन्नैर्ध्वजैश्चविनिपातितैः ॥ अंकुशैरपविद्धैश्चपरिस्तोमैश्चभारत १७ केयूरैरंगदैर्हारैरांकवैर्मृदितैस्तथा ॥ उष्णीषै
र्ऋष्टिभिश्चैवचामरव्यजनैरपि १८ तत्रतत्रापविद्धैश्चबाहुभिश्चंदनोक्षितैः ॥ ऊरुभिश्चनरेन्द्राणांसमास्तीर्यतमेदिनी १९ तत्राद्भुतमपश्यामरणेपार्थस्यविक्रमम् ॥ शरैः
संवार्यतान्वीरान्यज्जयानमहाबलः २० पुत्रस्तुतवतंदृष्ट्वाभीमार्जुनपराक्रमम् ॥ गांगेयस्यरथाभ्याशमुपजग्मेमहाबलः २१ कृपश्चकृतवर्माचसैन्धवश्चजयद्रथः ॥ विं
दानुविंदावावंत्यौनाजहुःसंयुगंतदा २२ ततोभीमोमहेष्वासःफाल्गुनश्चमहारथः ॥ कौरवाणांचमूंघोरांभृशंदुद्रुवतूरणे २३ ततोबर्हिणवाजानामयुतान्यर्बुदानिच ॥
धनंजयरथेतूर्णंपातयंतिस्मभूमिपाः २४ ततस्तान्शरजालेनसन्निवार्यमहारथान् ॥ पार्थःसमंतात्समरेप्रेषयामासमृत्यवे २५ शल्यस्तुसमरेजिष्णुंक्रीडन्निवमहारथः ॥
आजघानोरसिक्रुद्धोभल्लैःसन्नतपर्वभिः २६ तस्यपार्थोधनुश्छित्वाहस्तावापंचपंचभिः ॥ अथैनंसायकैस्तीक्ष्णैर्भृशंविव्याधमर्मणि २७ अथान्यद्धनुरादायसमरेभार
साधनम् ॥ मद्रेश्वरोरणेजिष्णुंताडयामासरोषितः २८ त्रिभिःशरैर्महाराजवासुदेवंचपंचभिः ॥ भीमसेनंचनवभिर्बाह्वोरुरसिचार्पयत् २९ ततोद्रोणोमहाराजमागध
श्चमहारथः ॥ दुर्योधनसमादिष्टौतंदेशमुपजग्मतुः ३० यत्रपार्थोमहाराजभीमसेनश्चपांडवः ॥ कौरव्यस्यमहासेनांजघ्नतुःसुमहारथौ ३१ जयत्सेनस्तुसमरेभीमंभी
मायुधंयुधि ॥ विव्याधनिशितैर्बाणैरष्टभिर्भरतर्षभ ३२ तंभीमोदशभिर्विध्वापुनर्विव्याधपंचभिः ॥ सारथिंचास्यभल्लेनरथनीडादपातयत् ३३ उद्भ्रांतैस्तुरगैःसोऽथ
द्रवमाणैःसमंततः ॥ मागधोऽपसृ[illegible]राजासर्वसैन्यस्यपश्यतः ३४ द्रोणश्चविवरंदृष्ट्वाभीमसेनंशिलीमुखैः ॥ विव्याधबाणैर्निशितैःपंचषष्टिभिरायसैः ३५ तंभीमःस
मरश्लाघीगुरुंपितृसमंरणे ॥ विव्याधपंचभिर्भल्लैस्तथाषष्ट्याचभारत ३६ अर्जुनस्तुसुशर्माणंविध्वाबहुभिरायसैः ॥ व्यधमत्तस्यतत्सैन्यंमहाभ्राणियथाऽनिलः ३७

३० । ३१ । ३२ । ३३ । अपसृतः पलायितः ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ इति भी० नी० भा० चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ निरविद्यतनिर्वेदंजगाम १०

ततोभीष्मश्चराजाचकौसल्यश्चबृहद्बलः ॥ समवर्तन्तसंक्रुद्धाभीमसेनधनंजयौ ३८ तथैवपांडवाःशूराधृष्टद्युम्नश्चपार्षतः ॥ अभ्यद्रवन्रणेभीष्मंव्यादितास्यमिवांतकम्
३९ शिखंडीतुसमासाद्यभरतानांपितामहम् ॥ अभ्यद्रवतसंहृष्टोभयंत्यक्त्वामहारथात् ४० युधिष्ठिरमुखाःपार्थाःपुरस्कृत्यशिखंडिनम् ॥ अयोधयन्रणेभीष्मंसहि
ताःसर्वसृंजयैः ४१ तथैवतावकाःसर्वेपुरस्कृत्ययतव्रतम् ॥ शिखंडिप्रमुखान्पार्थान्योधयंतिस्मसंयुगे ४२ ततःप्रववृतेयुद्धंकौरवाणांभयावहम् ॥ तत्रपांडुसुतैःसार्धं
भीष्मस्यविजयंप्रति ४३ तावकानांजयेभीष्मोग्लहआसीद्विशांपते ॥ तत्रहिद्यूतमासक्तंविजयायेतरायवा ४४ धृष्टद्युम्नस्तुराजेंद्रसर्वसैन्यान्यचोदयत् ॥ अभ्यद्रवतगां
गेयंमाभैष्टरथसत्तमाः ४५ सेनापतिवचःश्रुत्वापांडवानांवरूथिनी ॥ भीष्मंसमभ्ययात्तूर्णंप्राणांस्त्यक्त्वामहाहवे ४६ भीष्मोऽपिरथिनांश्रेष्ठःप्रतिजग्राहतांचमूम् ॥
आपतंतींमहाराजवेलामिवमहोदधिः ४७ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणि भीमार्जुनपराक्रमेचतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥
॥ ॥ धृतराष्ट्रउवाच ॥ कथंशान्तनवोभीष्मोदशमेऽहनिसंजय ॥ अयुध्यतमहावीर्यःपांडवैःसहसृंजयैः १ कुरवश्चकथंयुद्धेपांडवान्प्रत्यवारयन् ॥ आचक्ष्वमेमहा
युद्धंभीष्मस्याहवशोभिनः २ ॥ संजयउवाच ॥ कुरवःपांडवैःसार्धंयदयुध्यंतभारत ॥ यथाचतदभूद्युद्धंतत्तुवक्ष्यामिसांप्रतम् ३ गमिताःपरलोकायपरमास्त्रैःकिरीटि
ना ॥ अहन्यहनिसंक्रुद्धास्तावकानांमहारथाः ४ यथाप्रतिज्ञंकौरव्यःसचापिसमितिंजयः ॥ पार्थानामकरोद्भीष्मःसततंसमितिक्षयम् ५ कुरुभिःसहितंभीष्मंयुध्यमा
नंपरंतप ॥ अर्जुनंचसपांचाल्यंसंशयोविजयेऽभवत् ६ दशमेऽहनितस्मिंस्तुभीष्मार्जुनसमागमे ॥ अवर्ततमहारौद्रःसततंसमितिक्षयः ७ तस्मिन्नयुतशोराजन्भूयश
श्चपरंतपः ॥ भीष्मःशांतनवोयोधान्जघानपरमास्त्रवित् ८ येषामज्ञातकल्पानिनामगोत्राणिपार्थिव ॥ तेहतास्तत्रभीष्मेणशूराःसर्वेऽनिवर्तिनः ९ दशाहानिततस्त
प्त्वाभीष्मःपांडववाहिनीम् ॥ निरविद्यतधर्मात्माजीवितेनपरंतप १० सक्षिप्रंवधमन्विच्छन्नात्मनोऽभिमुखोरणे ॥ नहन्यांमानवश्रेष्ठान्संग्रामेसुबहूनिति ११ चिंतयि
त्वामहाबाहुःपितादेवव्रतस्तव ॥ अभ्याशस्थंमहाराजपांडवंवाक्यमब्रवीत् १२ युधिष्ठिरमहाप्राज्ञसर्वशास्त्रविशारद ॥ शृणुष्ववचनंतातधर्म्यंस्वर्ग्यंचजल्पतः १३
निर्विण्णोऽस्मिभृशंतातदेहेनानेनभारत ॥ घ्नतश्चमेगतःकालःसुबहून्प्राणिनोरणे १४ तस्मात्पार्थंपुरोधायपंचालान्सृंजयांस्तथा ॥ मद्वधेक्रियतांयत्नोममचेदिच्छ
सिप्रियम् १५ तस्यतन्मतमाज्ञायपांडवःसत्यदर्शनः ॥ भीष्मंप्रतिययौराजासंग्रामेसहसृंजयैः १६ धृष्टद्युम्नस्ततोराजन्पांडवश्चयुधिष्ठिरः ॥ श्रुत्वाभीष्मस्यतांवाचं
चोदयामासतुर्बलम् १७ अभिद्रवध्वंयुध्यध्वंभीष्मंजयतसंयुगे ॥ रक्षिताःसत्यसंधेनजिष्णुनारिपुजिष्णुना १८

११ । १२ । १३ निर्विण्णोविरक्तः १४ । १५ । १६ । १७ । १८

१९ । २० ब्रह्मलोकपराःबृहत्त्वान्महांतंलोकंप्रतियतमानाः २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५

अयंचापिमहेष्वासःपार्षतोवाहिनीपतिः ॥ भीमसेनश्चसमरेपालयिष्यतिवोध्रुवम् १९ मावोभीष्माद्भयंकिंचिदस्त्वद्ययुधिसृंजयाः ॥ ध्रुवंभीष्मंविजेष्यामःपुरस्कृत्य
शिखंडिनम् २० तेतथासमयंकृत्वादशमेऽहनिपांडवाः ॥ ब्रह्मलोकपराभूत्वासंजग्मुःक्रोधमूर्छिताः २१ शिखंडिनंपुरस्कृत्यपांडवंचधनंजयम् ॥ भीष्मस्यपातनेय
त्नंपरमंतसमास्थिताः २२ ततस्तवसुतादिष्टानानाजनपदेश्वराः ॥ द्रोणेनसहपुत्रेणसहसेनामहाबलाः २३ दुःशासनश्चबलवान्सहसर्वैःसहोदरैः ॥ भीष्मंसमरमध्य
स्थंपालयांचक्रिरेतदा २४ ततस्तुतावकाःशूराःपुरस्कृत्यमहाव्रतम् ॥ शिखंडिप्रमुखान्पार्थान्योधयंतिस्मसंयुगे २५ चेदिभिस्तुसपंचालैःसहितोवानरध्वजः ॥ ययौ
शांतनवंभीष्मंपुरस्कृत्यशिखंडिनम् २६ द्रोणपुत्रंशिनेर्नप्ताधृष्टकेतुस्तुपौरवम् ॥ अभिमन्युःसहामात्यंदुर्योधनमयोधयत् २७ विराटस्तुसहानीकःसहसेनंजयद्रथम् ॥
वृद्धक्षत्रस्यदायादमाससादपरंतप २८ मद्रराजंमहेष्वासंसहसैन्यंयुधिष्ठिरः ॥ भीमसेनोऽभिगुप्तस्तुनागानीकमुपाद्रवत् २९ अप्रधृष्यमनावार्यंसर्वशस्त्रभृतांवरम् ॥ द्रौणिंप्र
तिययौयत्तःपांचाल्यःसहसोदरैः ३० कर्णिकारध्वजंचैवसिंहकेतुररिंदमः ॥ प्रत्युज्जगामसौभद्रंराजपुत्रोबृहद्बलः ३१ शिखंडिनंचपुत्रास्तेपांडवंचधनंजयम् ॥ राजभिः
समरेपार्थमभिपेतुर्जिघांसवः ३२ तस्मिन्नतिमहाभीमेसेनयोर्वैपराक्रमे ॥ संप्रधावत्स्वनीकेषुमेदिनीसमकंपत ३३ तान्यनीकान्यनीकेषुसमसज्जंतभारत ॥ तावकानां
परेषांचदृष्ट्वाशांतनवंरणे ३४ ततस्तेषांप्रतप्तानामन्योन्यमभिधावताम् ॥ प्रादुरासीन्महाशब्दोदिक्षुसर्वासुभारत ३५ शंखदुन्दुभिघोषश्चवारणानांचबृंहितैः ॥ सिंहना
दश्चसैन्यानांदारुणःसमपद्यत ३६ साचसर्वनरेंद्राणांचन्द्रार्कसदृशीप्रभा ॥ वीरांगदकिरीटेषुनिष्प्रभासमपद्यत ३७ रजोमेघास्तुसंजज्ञुःशस्त्रविद्युद्भिरावृताः ॥ धनुषां
चापिनिर्घोषोदारुणःसमपद्यत ३८ बाणशंखप्रणादाश्चभेरीणांचमहास्वनाः ॥ रथघोषश्चसंजज्ञेसेनयोरुभयोरपि ३९ पाशशक्त्यृष्टिसंघैश्चबाणौघैश्चसमाकुलम् ॥
निष्प्रकाशमिवाकाशंसेनयोःसमपद्यत ४० अन्योन्यंरथिनःपेतुर्वाजिनश्चमहाहवे ॥ कुंजरान्कुंजराजघ्नुःपादातांश्चपदातयः ४१ तत्रासीत्सुमहद्युद्धंकुरूणांपांडवैःसह ॥
भीष्महेतोर्नरव्याघ्रश्येनयोरामिषेयथा ४२ तेषांसमागमोघोरोबभूवयुधिसंगतः ॥ अन्योन्यस्यवधार्थायजिगीषूणांमहाहवे ४३ ॥ इतिश्रीम० भीष्मप० भीष्मव०
भीष्मोपदेशेपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ संजयउवाच ॥ अभिमन्युर्महाराजतवपुत्रमयोधयत् ॥ महत्यासेनयायुक्तंभीष्महेतोःपराक्रमी १ दुर्योधनो
रणेकार्ष्णिंनवभिर्नतपर्वभिः ॥ आजघानोरसिक्रुद्धःपुनश्चैनंत्रिभिःशरैः २ तस्यशक्तिंरणेकार्ष्णिर्मृत्योर्घोरांस्वसामिव ॥ प्रेषयामाससंक्रुद्धोदुर्योधनरथंप्रति ३ तामाप
तंतींसहसाघोररूपांविशांपते ॥ द्विधाचिच्छेदतेपुत्रःक्षुरप्रेणमहारथः ४ तांशक्तिंपतितांदृष्ट्वाकार्ष्णिःपरमकोपनः ॥ दुर्योधनंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत् ५

३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपेपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ अभिमन्युरिति १ । २ । ३ । ४ । ५

पुनश्चैनं वीरोराजन्नानस्तनांतरे ॥ दशभिर्भरतश्रेष्ठभरतानांमहारथः ६ तयुद्धमभवद्घोरंचित्ररूपंचभारत ॥ इंद्रियप्रीतिजननंसर्वपार्थिवपूजितम् ७ भीष्मस्य
निधनाकांक्षपार्थस्यविजयायच ॥ युयुधातेरणेवीरौसौभद्रकुरुपुंगवौ ८ सात्यकिंरभसंयुद्धेद्रौणिर्ब्राह्मणपुंगवः ॥ आजघानोरसिक्रुद्धोनाराचेनपरंतपः ९ शैने
योऽपिगुरोःपुत्रंसर्वमर्मसुभारत ॥ अताडयदमेयात्मानवभिःकंकवाजितैः १० अश्वत्थामातुसमरेसात्यकिंनवभिःशरैः ॥ त्रिंशताचपुनस्तूर्णंबाह्वोरुरसिचार्पयत् ११
सोऽतिविद्धोमहेष्वासोद्रोणपुत्रेणसात्वतः ॥ द्रोणपुत्रंत्रिभिर्बाणैराजघानमहायशाः १२ पौरवोधृष्टकेतुंचशरैराच्छाद्यसंयुगे ॥ बहुधादारयांचक्रेमहेष्वासंमहारथः १३
तथैवपौरवंयुद्धेधृष्टकेतुर्महारथः ॥ त्रिंशतानिशितैर्बाणैर्विव्याधाशुमहाभुजः १४ पौरवस्तुधनुश्छित्वाधृष्टकेतोर्महारथः ॥ ननादबलवन्नादंविव्याधचशितैःशरैः १५
सोऽन्यत्कार्मुकमादायपौरवंनिशितैःशरैः ॥ आजघानमहाराजत्रिसप्तत्याशिलीमुखैः १६ तौतुतत्रमहेष्वासौमहामात्रौमहारथौ ॥ महताशरवर्षेणपरस्परमविध्यताम्
१७ अन्योन्यस्यधनुश्छित्वाहयान्हत्वाचभारत ॥ विरथावसियुद्धायसमीयतुरमर्षणौ १८ आर्षभेचर्मणीचित्रेशतचंद्रपुरस्कृते ॥ तारकाशतचित्रेचनिस्त्रिंशौसुमहाप्रभौ
१९ प्रगृह्यविमलौराजंस्तावन्योन्यमभिद्रुतौ ॥ वासितासंगमेयत्तौसिंहाविवमहावने २० मंडलानिविचित्राणिगतप्रत्यागतानिच ॥ चेरतुर्दर्शयन्तौचप्रार्थयंतौ
परस्परम् २१ पौरवोधृष्टकेतुंतुशंखदेशेमहासिना ॥ ताडयामाससंक्रुद्धस्तिष्ठतिष्ठेतिचाब्रवीत् २२ चेदिराजोऽपिसमरेपौरवंपुरुषर्षभम् ॥ आजघानशिताग्रेणजत्रुदे
शेमहासिना २३ तावन्योन्यंमहाराजसमासाद्यमहाहवे ॥ अन्योन्यवेगाभिहतौनिपेततुररिंदमौ २४ ततःस्वरथमारोप्यपौरवंतनयस्तव ॥ जयत्सेनोरथेनाजावपो
वाहरणाजिरात् २५ धृष्टकेतुंतुसमरेमाद्रीपुत्रःप्रतापवान् ॥ अपोवाहरणेक्रुद्धःसहदेवःपराक्रमी २६ चित्रसेनःसुशर्माणंविध्वाबहुभिरायसैः ॥ पुनर्विव्याधतंषष्ट्यापु
नश्चनवभिःशरैः २७ सुशर्मातुरणेक्रुद्धस्तवपुत्रंविशांपते ॥ दशभिर्दशभिश्चैवविव्याधनिशितैःशरैः २८ चित्रसेनश्चतंराजंस्त्रिंशतानतपर्वभिः ॥ आजघानरणेक्रुद्धःस
चतंप्रत्यविध्यत २९ भीष्मस्यसमरेराजन्यशोमानंचवर्धयन् ॥ सौभद्रोराजपुत्रंतुबृहद्बलमयोधयत् ३० पार्थहेतोःपराक्रान्तोभीष्मस्यायोधनंप्रति ॥ आर्जुनिंकोसलें
द्रस्तुविध्वापंचभिरायसैः ३१ पुनर्विव्याधविंशत्याशरैःसन्नतपर्वभिः ॥ सौभद्रःकोसलेन्द्रंतुविव्याधाष्टभिरायसैः ३२ नाकंपयतसंग्रामेविव्याधचपुनःशरैः ॥ कौसल्य
स्यधनुश्चापिपुनश्चिच्छेदफाल्गुनिः ३३ आजघानशरैश्चापित्रिंशताकंकपत्रिभिः ॥ सोऽन्यत्कार्मुकमादायराजपुत्रोबृहद्बलः ३४ फाल्गुनिंसमरेक्रुद्धोविव्याधबहुभिः
शरैः ॥ तयोर्युद्धंसमभवद्भीष्महेतोःपरंतप ३५ संरब्धयोर्महाराजसमरेचित्रयोधिनोः ॥ यथादेवासुरेयुद्धेबलिवासवयोरभूत् ३६

भीमसेनोगजानीकंयोधयन्बह्वशोभत ॥ यथाशक्रोवज्रपाणिर्दारयन्पर्वतोत्तमान् ३७ तेवध्यमानाभीमेनमातंगागिरिसन्निभाः ॥ निपेतुरुर्व्यांसहितानादयंतोवसुंधराम् ३८ गिरिमात्राहितेनागाभिन्नांजनचयोपमाः ॥ विरेजुर्वसुधांप्राप्ताविकीर्णाइवपर्वताः ३९ युधिष्ठिरोमहेष्वासोमद्रराजानमाहवे ॥ महत्यासेनयागुप्तंपीडयामास संगतम् ४० मद्रेश्वरश्चसमरेधर्मपुत्रंमहारथम् ॥ पीडयामाससंरब्धोभीष्महेतोःपराक्रमी ४१ विराटंसैन्धवोराजाविध्वासन्नतपर्वभिः ॥ नवभिःसायकैस्तीक्ष्णै स्त्रिंशतापुनरार्पयत् ४२ विराटश्चमहाराजसैन्धवंवाहिनीपतिः ॥ त्रिंशद्भिर्निशितैर्बाणैराजवानस्तनांतरे ४३ चित्रकार्मुकनिस्त्रिंशौचित्रवर्मायुधध्वजौ ॥ रेजतु श्चित्ररूपौतौसंग्रामेमत्स्यसैन्धवौ ४४ द्रोणःपांचालपुत्रेणसमागम्यमहारणे ॥ महासमुदयंचक्रेशरैःसन्नतपर्वभिः ४५ ततोद्रोणोमहाराजपार्षतस्यमहद्धनुः ॥ छित्वा पंचाशतेषूणांपार्षतंसमविध्यत ४६ सोऽन्यत्कार्मुकमादायपार्षतःपरवीरहा ॥ द्रोणस्यमिषतोयुद्धेप्रेषयामाससायकान् ४७ ताञ्छराञ्छरघातेनचिच्छेदसमहारथः॥ द्रोणायचिक्षेपगदांयमदंडोपमांरणे ४९ तामापतंतींसहसाहेमपट्टविभूषि ततःक्रुद्धोमहाराजपार्षतःपरवीरहा ॥ द्रोणायचिक्षेपगदांयमदंडोपमांरणे ४९ तामापतंतींसहसाहेमपट्टविभूषि ताम् ॥ शरैःपंचाशताद्रोणोवारयामाससंयुगे ५० साछिन्नाबहुधाराजन्द्रोणचापच्युतैःशरैः ॥ चूर्णीकृताविशीर्यंतीपपातवसुधातले ५१ गदांविनिहतांदृष्ट्वापा र्षतःशत्रुतापनः ॥ द्रोणायशक्तिंचिक्षेपसर्वपारसवींशुभाम् ५२ तांद्रोणोनवभिर्बाणैश्चिच्छेदयुधिभारत ॥ पार्षतंचमहेष्वासंपीडयामाससंयुगे ५३ एवमेतन्महा युद्धंद्रोणपार्षतयोरभूत् ॥ भीष्मंप्रतिमहाराजघोररूपंभयानकम् ५४ अर्जुनःप्राप्यगांगेयंपीडयन्निशितैःशरैः ॥ अभ्यद्रवतसंयत्तोवनेमत्तमिवद्विपम् ५५ प्रत्युद्य यौचतंराजाभगदत्तःप्रतापवान् ॥ त्रिधाभिन्नेननागेनमदांधेनमहाबलः ५६ तमापतंतंसहसामहेन्द्रगजसन्निभम् ॥ परंयत्नंसमास्थायबीभत्सुःप्रत्यपद्यत ५७ ततो गजगतोराजाभगदत्तःप्रतापवान् ॥ अर्जुनंशरवर्षेणवारयामाससंयुगे ५८ अर्जुनस्तुततोनागमायांतंरजतोपमैः ॥ विमलैरायसैस्तीक्ष्णैरविध्यतमहारणे ५९ शिखं डिनंचकौन्तेयोयाहियाहीत्यचोदयत् ॥ भीष्मंप्रतिमहाराजजह्येनमितिचाब्रवीत् ६० प्राग्ज्योतिषस्ततोहित्वापांडवंपांडुपूर्वज ॥ प्रययौत्वरितोराजन्द्रुपदस्यरथंप्रति ६१ ततोऽर्जुनोमहाराजभीष्ममभ्यद्रवद्द्रुतम् ॥ शिखंडिनंपुरस्कृत्यततोयुद्धमवर्तत ६२ ततस्तेतावकाःशूराःपांडवंरभसंयुधि ॥ समभ्यधावन्क्रोशंतस्तदद्भुतमिवा भवत् ६३ नानाविधान्यनीकानिपुत्राणांतेजनाधिप ॥ अर्जुनोव्यधमत्कालेदिवीवाभ्राणिमारुतः ६४ शिखंडीतुसमासाद्यभरतानांपितामहम् ॥ इषुभिस्तूर्णमव्य ग्रोबहुभिःससमाचिनोत् ६५ रथाग्न्यगारश्चापार्चिरसिशक्तिगदेन्धनः ॥ शरसंघमहाज्वालःक्षत्रियान्समरेऽदहत् ६६ यथाग्निःसुमहानिद्धःकक्षेचरतिसानिलः ॥ तथाजज्वालभीष्मोऽपिदिव्यान्यस्त्राण्युदीरयन् ६७

६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० ॥ इतिभीष्मपर्वणिनीलकंठीये भारतभावदीपे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ ॥ ॥

सोमकांश्चरणेभीष्मोजघ्नेपार्थपदानुगान् ॥ न्यवारयततत्सैन्यंपांडवस्यमहारथः ६८ सुवर्णपुंखैरिषुभिःशितैःसन्नतपर्वभिः ॥ नादयन्सदिशोभीष्मःप्रदिशश्चमहाहवे
६९ पातयन्रथिनोराजन्हयांश्चसहसादिभिः ॥ मुण्डतालवनानीवचकारसरथव्रजान् ७० निर्मनुष्यान्रथान्राजन्गजानश्वांश्चसंयुगे ॥ चकारसमरेभीष्मःसर्वशस्त्र
भृतांवरः ७१ तस्यज्यातलनिर्घोषंविस्फूर्जितमिवाशनेः ॥ निशम्यसर्वतोराजन्समकंपन्तसैनिकाः ७२ अमोघान्यपतन्बाणाःपितुस्तेमनुजेश्वर ॥ नासज्जंतशरीरेषु
भीष्मचापच्युताःशराः ७३ निर्मनुष्यान्रथान्राजन्सुयुक्ताञ्जवनैर्हयैः ॥ वातायमानानद्राक्षंह्रियमाणान्विशांपते ७४ चेदिकाशिकरूषाणांसहस्राणिचतुर्दश ॥
महारथाःसमाख्याताःकुलपुत्रास्तनुत्यजः ७५ अपरावर्तिनःशूराःसुवर्णविकृतध्वजाः ॥ संग्रामेभीष्ममासाद्यसवाजिरथकुंजराः ७६ जग्मुस्तेपरलोकायव्यादितास्य
मिवांतकम् ॥ नतत्रासीद्रणेराजन्सोमकानांमहारथः ७७ यःसंप्राप्यरणेभीष्मंजीवितेस्ममनोदधे ॥ तांश्चसर्वान्रणेयोधान्प्रेतराजपुरंप्रति ७८ नीतानमन्यंतजना
दृष्ट्वाभीष्मस्यविक्रमम् ॥ नकश्चिदेनंसमरेप्रत्युद्यातिमहारथः ७९ ऋतेपांडुसुतंवीरंश्वेताश्वंकृष्णसारथिम् ॥ शिखंडिनंचसमरेपांचाल्यममितौजसम् ८० ॥ इतिश्री
महाभारतेभीष्मपर्वणिभीष्मवधपर्वणिसंकुलयुद्धेषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ ॥ ॥ संजयउवाच ॥ शिखंडीतुरणेभीष्ममासाद्यपुरुषर्ष
भम् ॥ दशभिर्निशितैर्भल्लैराजघानस्तनांतरे १ शिखंडिनंतुगाङ्गेयःक्रोधदीप्तेनचक्षुषा ॥ संप्रेक्षतकटाक्षेणनिर्दहन्निवभारत २ स्त्रीत्वंतस्यस्मरन्राजन्सर्वलोकस्यपश्य
तः ॥ नाजघानरणेभीष्मःसचतन्नावबुद्धवान् ३ अर्जुनस्तुमहाराजशिखंडिनमभाषत ॥ अभिद्रवस्वत्वरितंजहिचैनंपितामहम् ४ किंतेविवक्षयावीरजहिभीष्मंमहा
रथम् ॥ नह्यन्यमनुपश्यामिकंचिद्योधिष्ठिरेबले ५ यःशक्तःसमरेभीष्मंप्रतियोद्धुमिहाहवे ॥ ऋतेत्वांपुरुषव्याघ्रसत्यमेतद्ब्रवीमिते ६ एवमुक्तस्तुपार्थेनशिखंडीभरत
र्षभ ॥ शरैर्नानाविधैस्तूर्णंपितामहमवाकिरत् ७ अचिंतयित्वातान्बाणान्पितादेवव्रतस्तव ॥ अर्जुनंसमरेक्रुद्धंवारयामाससायकैः ८ तथैवचचमूंसर्वांपांडवानांमहा
रथः ॥ अप्रैषीत्सशरैस्तीक्ष्णैःपरलोकायमारिष ९ तथैवपांडवाराजन्सैन्येनमहतावृताः ॥ भीष्मंसंछादयामासुर्मेघाइवदिवाकरम् १० ससमंतात्परिवृतोभारतोभरत
र्षभ ॥ निर्ददाहरणेशूरान्वनेवह्निरिवज्वलन् ११ तत्राद्भुतमपश्यामतवपुत्रस्यपौरुषम् ॥ अयोधयच्चयत्पार्थंजुगोपचपितामहम् १२ कर्मणातेनसमरेतवपुत्रस्यध
न्विनः ॥ दुःशासनस्यतुतुषुःसर्वेलोकामहात्मनः १३ यदेकःसमरेपार्थान्सार्जुनान्समयोधयत् ॥ नचैनंपांडवायुद्धेवारयामासुरुल्बणम् १४ दुःशासनेनसमरेरथिनो
विरथीकृताः ॥ सादिनश्चमहेष्वासाहस्तिनश्चमहाबलाः १५

शिखंडीति १ । २ । ३ । ४ विवक्षयाविचारेणसंशयेनवा ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ उल्बणमुग्रं १४ । १५

१६ । १७ भारतमहामात्रंभरतवंशश्रेष्ठं १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ शर्ममुखहेतुत्वात् वर्मरक्षाहेतुत्वात् २८ ममामितुंउपमर्दितुं

विनिर्भिन्नाःशरैस्तीक्ष्णैर्निपेतुर्वसुधातले ॥ शरातुरास्तथैवान्येदंतिनोविद्रुतादिशः १६ यथाग्निरिन्धनंप्राप्यज्वलेद्दीप्तार्चिरुल्बणम् ॥ तथाजज्वालपुत्रस्तेपांडुसेनांविनिर्दहन् १७ तंभारतमहामात्रंपांडवानांमहारथः ॥ जेतुंनोत्सहतेकश्चिन्नाभ्युद्यातुंकथंचन १८ ऋतेमहेन्द्रतनयाच्छ्वेताश्वात्कृष्णसारथेः ॥ सहितंसमरेराजन्निर्जित्य विजयोऽर्जुनः १९ भीष्ममेवाभिदुद्रावसर्वसैन्यस्यपश्यतः ॥ विजितस्तवपुत्रोऽपिभीष्मबाहुव्यपाश्रयः २० पुनःपुनःसमाश्वस्यप्रायुध्यतमदोत्कटः ॥ अर्जुनस्तु रणेराजन्योधयन्संव्यराजत २१ शिखंडीतुरणेराजन्विव्याधैवपितामहम् ॥ शरैरशनिसंस्पर्शैस्तथासर्पविषोपमैः २२ नचस्मतेरुजंचक्रुःपितुस्तवजनेश्वर ॥ स्मयमानस्तुगांगेयस्तान्बाणाञ्जगृहेतदा २३ उष्णार्तोहिनरोयद्वज्जलधाराःप्रतीच्छति ॥ तथाजग्राहगांगेयःशरधाराःशिखंडिनः २४ तंक्षत्रियामहाराजददृशुर्घोरमाहवे ॥ भीष्मंदहन्तंसैन्यानिपांडवानांमहात्मनाम् २५ ततोऽब्रवीत्तवसुतःसर्वसैन्यानिमारिष ॥ अभिद्रवतसंग्रामेफाल्गुनंसर्वतोरणे २६ भीष्मोवःसमरेसर्वान्पालयिष्यतिधर्मवित् ॥ तेभयंसुमहत्त्यक्त्वापांडवान्प्रतियुध्यत २७ हेमतालेनमहताभीष्मस्तिष्ठतिपालयन् ॥ सर्वेषांधार्तराष्ट्राणांसमरेशर्मवर्मच २८ त्रिदशाऽपिसमुद्युक्तानालं भीष्मंसमासितुम् ॥ किमुपार्थामहात्मानंमर्त्यभूतामहाबलाः २९ तस्माद्द्रवतमायोधाःफाल्गुनंप्राप्यसंयुगे ॥ अहमद्यरणेयत्तोयोधयिष्यामिपांडवम् ३० सहितः सर्वतोयत्तैर्भवद्भिर्वसुधाधिपैः ॥ तच्छ्रुत्वातुवचोराजंस्तवपुत्रस्यधन्विनः ३१ सर्वेयोधाःसुसंरब्धाबलवंतोमहाबलाः ॥ तेविदेहाःकलिंगाश्चदासेरकगणाश्चह ३२ अभिपेतुर्निषादाश्चसौवीराश्चमहारणे ॥ बाह्लीकादरदाश्चैवप्रतीच्योदीच्यमालवाः ३३ अभीषाहाःशूरसेनाःशिवयोऽथवसातयः ॥ शाल्वाःशकास्त्रिगर्ताश्चअंबष्ठाःकेकयैः सह ३४ अभिपेतूरणेपार्थंपतंगाइवपावकम् ॥ शलभाइवराजेन्द्रपार्थमप्रतिमंरणे ॥ एतान्सर्वान्सहानीकान्महाराजमहारथान् ३५ दिव्यान्यस्त्राणिसंचिन्त्यप्रसंधाय धनंजयः ॥ सतैरस्त्रैर्महावेगैर्ददाहसुमहाबलः ३६ शरप्रतापैर्बीभत्सुःपतंगानिवपावकः ॥ तस्यबाणसहस्राणिसृजतोदृढधन्विनः ३७ दीप्यमानमिवाकाशेगांडीवं समदृश्यत ॥ तेशरार्तामहाराजविप्रकीर्णमहाध्वजाः ३८ नाभ्यवर्तन्तराजानःसहितावानरध्वजम् ॥ सध्वजारथिनःपेतुर्हयारोहाहयैःसह ३९ सगजाश्चगजारोहाः किरीटिशरताडिताः ॥ ततोऽर्जुनभुजोत्सृष्टैराव्रताऽऽसीद्वसुंधरा ४० विद्रवद्भिश्चबहुधाबलैराज्ञांसमंततः ॥ अथपार्थोमहाराजद्रावयित्वावरूथिनीम् ४१ दुःशासनायसुबहून्प्रेषयामाससायकान् ॥ तेतुभित्त्वातवसुतंदुःशासनमयोमुखाः ४२ धरणींविविशुःसर्वेवल्मीकमिवपन्नगाः ॥ हयांश्चास्यततोजघ्नेसारथिंचन्यपातयत् ४३ विविंशतिंचविंशत्याविरथंकृतवान्प्रभुः ॥ आजघानभृशंचैवपंचभिर्नतपर्वभिः ४४

नाशयितुंवा मर्त्यभूताःमर्त्यस्वरूपाः २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४

४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ महाधनाः बहुमूल्याः ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । इति श्री० नी० भारतभावदीपे

कृपंविकर्णशल्यंचविध्वाबहुभिरायसैः ॥ चकारविरथांश्चैवकौन्तेयःश्वेतवाहनः ४५ एवंतेविरथाःसर्वेकृपःशल्यश्चमारिष ॥ दुःशासनोविकर्णश्चतथैवचविविंशतिः ४६
संप्राद्रवंतसमरेनिर्जिताःसव्यसाचिना ॥ पूर्वाह्णेभरतश्रेष्ठपराजित्यमहारथान् ४७ प्रजज्वालरणेपार्थोविधूमइवपावकः ॥ तथैवशरवर्षेणभास्करोरश्मिवानिव ४८ अ
न्यानपिमहाराजतापयामासपार्थिवान् ॥ पराङ्मुखीकृत्यतथाशरवर्षैर्महारथान् ४९ प्रावर्तयतसंग्रामेशोणितोदांमहानदीम् ॥ मध्येनकुरुसैन्यानांपांडवानांच
भारत ५० गजाश्वरथसंघाश्चबहुधारथिभिर्हताः ॥ रथाश्चनिहतानागैर्हयाश्चैवपदातिभिः ५१ अंतराच्छिद्यमानानिशरीराणिशिरांसिच ॥ निपेतुर्दिक्षुसर्वासुग
जाश्वरथयोधिनाम् ५२ छन्नमायोधनंराजन्कुण्डलांगदधारिभिः ॥ पतितैःपात्यमानैश्चराजपुत्रैर्महारथैः ५३ रथनेमिनिकृत्तैश्चगजैश्चैवावपोथितैः ॥ पादाताश्चा
प्यधावंतसाश्वाश्चहययोधिनः ५४ गजाश्वरथयोधाश्चपरिपेतुःसमंततः ॥ विकीर्णाश्चरथाभूमौभग्नचक्रयुगध्वजाः ५५ तद्गजाश्वरथौघानांरुधिरेणसमुक्षितम् ॥
छन्नमायोधनंरेजेरक्ताभ्रमिवशारदम् ५६ श्वानःकाकाश्चगृध्राश्चवृकागोमायुभिःसह ॥ प्रणेदुर्भक्ष्यमासाद्यविकृताश्चमृगद्विजाः ५७ ववुर्बहुविधाश्चैवदिक्षुसर्वासुमा
रुताः ॥ दृश्यमानेषुरक्षःसुभूतेषुचनदत्सुच ५८ कांचनानिचदामानिपताकाश्चमहाधनाः ॥ धूयमानान्यदृश्यन्तसहसामारुतेरिताः ५९ श्वेतच्छत्रसहस्राणिसध्व
जाश्चमहारथाः ॥ विकीर्णाःसमदृश्यंतशतशोऽथसहस्रशः ६० सपताकाश्चमातंगादिशोजग्मुःशरातुराः ॥ क्षत्रियाश्चमनुष्येन्द्रगदाशक्तिधनुर्धराः ६१ समंतत
श्चदृश्यंतेपतिताधरणीतले ॥ ततोभीष्मोमहाराजदिव्यमस्त्रमुदीरयन् ६२ अभ्यधावतकौन्तेयंमिषतांसर्वधन्विनाम् ॥ तंशिखंडीरणेयांतमभ्यद्रवतदंशितः ६३ ततः
समाहरद्भीष्मस्तदस्त्रंपावकोपमम् ॥ त्वरितःपांडवोराजन्मध्यमःश्वेतवाहनः ६४ निजघ्नेतावकंसैन्यंमोहयित्वापितामहम् ६५ ॥ इतिश्रीमहाभारतेभीष्मपर्वणि
भीष्मवधपर्वणिसंकुलयुद्धेसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ ॥ संजयउवाच ॥ समव्यूढेष्वनीकेषुभूयिष्ठेष्वनिवर्तिनः ॥ ब्रह्मलोकपराःसर्वेसमपद्यंत
भारत १ नह्यनीकमनीकेनसमसज्जतसंकुले ॥ रथानरथिभिःसार्धंपादातानपदातिभिः २ अश्वानाश्वैरयुध्यंतगजानगजयोधिभिः ॥ उन्मत्तवन्महाराजयुध्यन्तेतत्रभा
रत ३ महान्व्यतिकरोरौद्रःसेनयोःसमपद्यत ॥ नरनागगणेष्वेवंविकीर्णेषुचसर्वशः ४ क्षयेतस्मिन्महारौद्रेनिर्विशेषमजायत ॥ ततःशल्यःकृपश्चैवचित्रसेनश्चभारत ५
दुःशासनोविकर्णश्चरथानास्थायभास्वरान् ॥ पांडवानांरणेशूराध्वजिनींसमकंपयन् ६ सावध्यमानासमरेपांडुसेनामहात्मभिः ॥ भ्राम्यतेबहुधाराजन्मारुतेनेवनौ
जले ७ यथाहिशैशिरःकालोगवांमर्माणिकृंतति ॥ तथापांडुसुतानांवैभीष्मोमर्माणिकृंतति ८

सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ ॥ मर्माणि १ । २ । ३ व्यतिकरःक्षोभः ४ । ५ । ६ । ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९

तथैवतवसैन्यस्यपार्थेनचमहात्मना ॥ नवमेघप्रतीकाशाःपातिताबहुधागजाः ९ मृद्यमानाश्चदृश्यन्तेपार्थेननरयूथपाः ॥ इषुभिस्ताड्यमानाश्चनाराचैश्चसहस्रशः १०
पेतुरार्तस्वरंघोरंकृत्वातत्रमहागजाः ॥ आनद्धाभरणैःकायैर्निहतानांमहात्मनाम् ११ छन्नमायोधनंरेजेशिरोभिश्चसकुंडलैः ॥ तस्मिन्नेवमहाराजमहावीरवरक्षये
१२ भीष्मेचयुधिविक्रांतेपांडवेचधनंजये ॥ तेपराक्रांतमालोक्यराजन्युधिपितामहम् १३ अभ्यवर्तन्ततेपुत्राःसर्वेसैन्यपुरस्कृताः ॥ इच्छंतोनिधनंयुद्धेस्वर्गं
कृत्वापरायणम् १४ पांडवानभ्यवर्त्तन्ततस्मिन्वीरवरक्षये ॥ पांडवाऽपिमहाराजस्मरन्तोविविधान्बहून् १५ क्लेशान्कृतान्सपुत्रेणत्वयापूर्वंनराधिप ॥ भयंत्यक्त्वा
रणेशूराब्रह्मलोकायतत्पराः १६ तावकास्तवपुत्रांश्चयोधयंतिप्रहृष्टवत् ॥ सेनापतिस्तुसमरेप्राहसेनांमहारथः १७ अभिद्रवतगांगेयंसोमकाःसृंजयैःसह ॥ सेनापति
वचःश्रुत्वासोमकाःसृंजयाश्चते १८ अभ्यद्रवंतगांगेयंशरवृष्ट्यासमाहताः ॥ वध्यमानस्ततोराजन्पिताशांतनवस्तव १९ अमर्षवशमापन्नोयोधमायामाससृंजयान् ॥
तस्यकीर्तिमतस्तातपुरारामेणधीमता २० संप्रदत्तास्त्रशिक्षावैपरानीकविनाशनी ॥ सतांशिक्षामधिष्ठायकुर्वन्परबलक्षयम् २१ अहन्यहनिपार्थानांवृ
द्धःकुरुपितामहः ॥ भीष्मोदशसहस्राणिजघानपरवीरहा २२ तस्मिंस्तुदशमेप्राप्तेदिवसेभरतर्षभ ॥ भीष्मेणैकेनमत्स्येषुपंचालेषुचसंयुगे २३ गजाश्वममितं
हत्वाहताःसप्तमहारथाः ॥ हत्वापंचसहस्राणिरथानांप्रपितामहः २४ नराणांचमहायुद्धेसहस्राणिचतुर्दश ॥ दंतिनांचसहस्राणिहयानामयुतंपुनः २५ शिक्षाब
लेननिहतंपित्रातवविशांपते ॥ ततःसर्वमहीपानांक्षपयित्वावरूथिनीम् २६ विराटस्यप्रियोभ्राताशतानीकोनिपातितः ॥ शतानीकंचसमरेहत्वाभीष्मःप्रताप
वान् २७ सहस्राणिमहाराजराज्ञांभल्लैरपातयत् ॥ उद्विग्नाःसमरेयोधाविक्रोशंतिधनंजयम् २८ येचकेचनपार्थानामभियाताधनंजयम् ॥ राजानोभीष्ममासाद्यग
तास्तेयमसादनम् २९ एवंदशदिशोभीष्मःशरजालैःसमंततः ॥ अतीत्यसेनांपार्थानामवतस्थेचमूमुखे ३० सकृत्वासुमहत्कर्मतस्मिन्वैदशमेऽहनि ॥ सेनयोरंतरे
तिष्ठन्प्रगृहीतशरासनः ३१ नचैनंपार्थिवाःकेचिच्छक्ताराजन्निरीक्षितुम् ॥ मध्यंप्राप्तंयथाग्रीष्मेतपंतंभास्करंदिवि ३२ यथादैत्यचमूंशक्रस्तापयामाससंयुगे ॥ तथा
भीष्मःपांडवेयांस्तापयामासभारत ३३ तथाचैनंपराक्रांतमालोक्यमधुसूदनः ॥ उवाचदेवकीपुत्रःप्रीयमाणोधनंजयम् ३४ एषशांतनवोभीष्मःसेनयोरंतरेस्थितः ॥
सन्निहत्यबलादेनंविजयस्तेभविष्यति ३५ बलात्संस्तंभयस्वेनंयत्रैषाभिद्यतेचमूः ॥ नहिभीष्मशरानन्यःसोढुमुत्सहतेविभो ३६ ततस्तस्मिन्क्षणेराजं
श्चोदितोवानरध्वजः ॥ सध्वजंसरथंसाश्वंभीष्ममंतर्दधेशरैः ३७ सचापिकुरुमुख्यानामृषभःपांडवेरितान् ॥ शरव्रातैःशरव्रातान्बहुधाविदुधावतान् ३८ ततःपंचा
लराजश्चधृष्टकेतुश्चवीर्यवान् ॥ पांडवोभीमसेनश्चधृष्टद्युम्नश्चपार्षतः ३९

४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । अदीनात्माअक्षीणस्वभावः ४९ । ५० । ५१ । ५२ । ५३ । ५४ इतिभी० नी० भा० अष्टाधिकशततमोऽध्यायः ॥ ११८ ॥ एवमिति १ । २

यमौचचेकितानश्चकेकयाःपंचचैवह ॥ सात्यकिश्चमहाबाहुःसौभद्रोऽथवटोत्कचः ४० द्रौपदेयाःशिखंडीचकुंतिभोजश्चवीर्यवान् ॥ सुशर्माचविराटश्चपांडवे
यामहाबलाः ४१ एतेचान्येचबहवःपीडिताभीष्मसायकैः ॥ समुद्धृताःफाल्गुनेननिमग्नाःशोकसागरे ४२ ततःशिखंडीवेगेनप्रगृह्यपरमायुधम् ॥ भीष्ममेवा
भिदुद्रावरक्ष्यमाणःकिरीटिना ४३ ततोऽस्यानुचरान्हत्वासर्वान्रणविभागवित् ॥ भीष्ममेवाभिदुद्राववीभत्सुरपराजितः ४४ सात्यकिश्चेकितानश्चधृष्टद्युम्नश्चपा
र्षतः ॥ विराटोद्रुपदश्चैवमाद्रीपुत्रौचपांडवौ ४५ दुद्रुवुभीष्ममेवाजौरक्षिताद्दृढधन्वना ॥ अभिमन्युश्चसमरेद्रौपद्याःपंचचात्मजाः ४६ दुद्रुवुःसमरेभीष्मंस
मुद्यतमहायुधाः ॥ तेसर्वेदृढधन्वानःसंयुगेष्वपलायिनः ४७ बहुधाभीष्ममानर्छुर्मार्गणैःक्षतमार्गणैः ॥ विधूयतान्बाणगणान्येमुक्ताःपार्थिवोत्तमैः ४८ पांडवानामदी
नात्माव्यगाहतवरूथिनीम् ॥ चक्रेशरविघातंचक्रीडन्निवपितामहः ४९ नाभिसंधत्तपांचाल्येस्मयमानोमुहुर्मुहुः ॥ स्त्रीत्वंतस्यानुसंस्मृत्यभीष्मोबाणान्शिखं
डिने ५० जघानद्रुपदानीकेरथान्सप्तमहारथः ॥ ततःकिलकिलाशब्दःक्षणेनसमभूत्तदा ५१ मत्स्यपांचालचेदीनांतमेकमभिधावताम् ॥ तेनराश्वरथव्रातैर्मा
र्गणैश्चपरंतप ५२ तमेकंछादयामासुर्मेघाइवदिवाकरम् ॥ भीष्मंभागीरथीपुत्रंप्रतपन्तंरणेरिपून ५३ ततस्तस्यचतेषांचयुद्धेदेवासुरोपमे ॥ किरीटीभीष्ममानर्च्छ
त्पुरस्कृत्यशिखंडिनम् ५४ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मव० भीष्मपराक्रमेअष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ॥ ॥ ॥ संजयउवाच ॥
एवंतेपांडवाःसर्वेपुरस्कृत्यशिखंडिनम् ॥ विव्यधुःसमरेभीष्मंपरिवार्यसमंततः १ शतघ्नीभिःसुघोराभिःपरिघैश्चपरश्वधैः ॥ मुद्गरैर्मुसलैःप्रासैःक्षेपणीयैश्च
सर्वशः २ शरैःकनकपुंखैश्चशक्तितोमरकंपनैः ॥ नाराचैर्वत्सदन्तैश्चभुशुंडीभिश्चसर्वशः ३ अताडयन्रणेभीष्मंसहिताःसर्वसृंजयाः ॥ सविशीर्णतनुत्राणःपीडितो
बहुभिस्तदा ४ नविव्यथेतदाभीष्मोभिद्यमानेषुमर्मसु ॥ संदीप्तशरचापाग्निरस्त्रप्रसृतमारुतः ५ नेमिनिर्ह्रादसंतापोमहास्त्रोदयपावकः ॥ चित्रचापमहाज्वा
लोवीरक्षयमहेन्धनः ६ युगांताग्निसमप्रख्यःपरेषांसमपद्यत ॥ विनृत्त्यरथसंघानामंतरेणविनिःसृतः ७ दृश्यतेस्मनरेन्द्राणांपुनर्मध्यगतश्चरन् ॥ ततःपंचालराजंच
धृष्टकेतुमचिंत्यच ८ पांडवानीकिनीमध्यमाससादविशांपते ॥ ततःसात्यकिभीमौचपांडवंचधनंजयम् ९ द्रुपदंचविराटंचधृष्टद्युम्नंचपार्षतम् ॥ भीमघोषैर्महावेगैर्मर्मा
वरणभेदिभिः १० षडेतान्निशितैर्भीष्मःप्रविव्याधोत्तमैःशरैः ॥ तस्यतेनिशितान्बाणान्सन्निवार्यमहारथाः ११ दशभिर्दशभिर्भीष्ममर्दयामासुरोजसा ॥ शिखंडीतुमहाबा
णान्यान्मुमोचमहारथः १२ नचक्रुस्तेरुजंतस्यस्वर्णपुंखाःशिलाशिताः ॥ ततःकिरीटीसंरब्धोभीष्ममेवाभ्यधावत १३ शिखंडिनंपुरस्कृत्यधनुश्चास्यसमा
च्छिनत् ॥ भीष्मस्यधनुषश्छेदंनामृष्यंतमहारथाः १४

१ । ६ । ७ । ८ । ९ मर्मावरणंवर्म देहचर्मवा १० । ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ आत्तमात्तंगृहीतंगृहीतं २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३४ । ३५ । ३६ व्यवसितंनिश्चितं

द्रोणश्चकृतवर्माचसैन्धवश्चजयद्रथः ॥ भूरिश्रवाःशलःशल्योभगदत्तस्तथैवच १५ सप्तैतेपरमक्रुद्धाःकिरीटिनमभिद्रुताः ॥ तत्रशस्त्राणिदिव्यानिदर्शयंतोमहारथाः
१६ अभिपेतुर्भृशंक्रुद्धाश्छादयंतश्चपांडवम् ॥ तेषामापततांशब्दःशुश्रुवेफाल्गुनंप्रति १७ उद्वृतानांयथाशब्दःसमुद्राणांयुगक्षये ॥ घ्नतानयतगृह्णीतविद्धयध्व
मवकर्तत १८ इत्यासीत्तुमुलःशब्दःफाल्गुनस्यरथंप्रति ॥ तंशब्दंतुमुलंश्रुत्वापांडवानांमहारथाः १९ अभ्यधावन्परीप्सन्तःफाल्गुनंभरतर्षभ ॥ सात्यकिर्भीमसेनश्च
धृष्टद्युम्नश्चपार्षतः २० विराटद्रुपदौचोभौराक्षसश्चघटोत्कचः ॥ अभिमन्युश्चसंक्रुद्धःसप्तैतेक्रोधमूर्छिताः २१ समभ्यधावंस्त्वरिताश्चित्रकार्मुकधारिणः ॥ तेषांस
मभवद्युद्धंतुमुलंलोमहर्षणम् २२ संग्रामेभरतश्रेष्ठदेवानांदानवैरिव ॥ शिखंडीतुरणेश्रेष्ठोरक्ष्यमाणःकिरीटिना २३ अविध्यद्दशभिर्भीष्मंछिन्नधन्वानमाहवे ॥ सा
रथिंदशभिश्चास्यध्वजंचैकेनचिच्छिदे २४ सोऽन्यत्कार्मुकमादायगांगेयोवेगवत्तरम् ॥ तदप्यस्यशितैर्बाणैस्त्रिभिश्चिच्छेदफाल्गुनः २५ एवंसपांडवःक्रुद्धआत्तमात्तंपुनः
पुनः ॥ धनुश्चिच्छेदभीष्मस्यसव्यसाचीपरंतपः २६ सच्छिन्नधन्वासंक्रुद्धःसृक्किणीपरिसंलिहन् ॥ शक्तिंजग्राहतरसागिरीणामपिदारणीम् २७ तांचचिक्षेपसंक्रुद्धः
फाल्गुनस्यरथंप्रति ॥ तामापतंतींसंप्रेक्ष्यज्वलंतीमशनीमिव २८ समादत्तशितान्भल्लान्पंचपांडवनन्दनः ॥ तस्यचिच्छेदतांशक्तिंपंचधापंचभिःशरैः २९ संक्रुद्धोभरत
श्रेष्ठभीष्मबाहुप्रवेरिताम् ॥ सापपाततथाच्छिन्नासंक्रुद्धेनकिरीटिना ३० मेघवृंदपरिभ्रष्टाविच्छिन्नेवशतह्रदा ॥ छिन्नांतांशक्तिमालोक्यभीष्मःक्रोधसमन्वितः ३१
अचिन्तयद्रणेवीरोबुद्ध्यापरपुरंजयः ॥ शक्तोऽहंधनुषैकेननिहन्तुंसर्वपांडवान् ३२ यद्येषांनभवेद्गोप्ताविष्वक्सेनोमहाबलः ॥ कारणद्वयमास्थायनाहंयोत्स्यामिपांड
वान् ३३ अवध्यत्वाच्चपांडूनांस्त्रीभावाच्चशिखंडिनः ॥ पित्रातुष्टेनमेपूर्वंयदाकालीमुदावहम् ३४ स्वच्छंदमरणंदत्तमवध्यत्वंरणेतथा ॥ तस्मान्मृत्युमहंमन्येप्राप्तकाल
मिवात्मनः ३५ एवंज्ञात्वाव्यवसितंभीष्मस्यामिततेजसः ॥ ऋषयोवसवश्चैववियत्स्थाभीष्ममब्रुवन् ३६ यत्तेव्यवसितंतातदस्माकमपिप्रियम् ॥ तत्कुरुष्व
महाराजयुद्धेबुद्धिंनिवर्तय ३७ अस्यवाक्यस्यनिधनेप्रादुरासीच्छिवोऽनिलः ॥ अनुलोमःसुगंधीचपृषतैश्चसमन्विनः ३८ देवदुन्दुभयश्चैवसंप्रणेदुर्महास्वनाः ॥
पपातपुष्पवृष्टिश्चभीष्मस्योपरिमारिष ३९ नचतच्छुश्रुवेकश्चित्तेषांसंवदतांनृप ॥ ऋतेभीष्मंमहाबाहुंमांचापिमुनितेजसा ४० संभ्रमश्चमहानासीत्त्रिदशानांविशां
पते ॥ पतिष्यतिरथाद्भीष्मेसर्वलोकप्रियेतदा ४१ इतिदेवगणानांचवाक्यंश्रुत्वामहातपाः ॥ ततःशांतनवोभीष्मोबीभत्सुंनात्यवर्तत ४२ भिद्यमानःशितैर्बाणैः
सर्वावरणभेदिभिः ॥ शिखंडीतुमहाराजभरतानांपितामहम् ४३ आजघानोरसिक्रुद्धोनवभिर्निशितैःशरैः ॥ संतनाभिहतःसंख्येभीष्मःकुरुपितामहः ४४

३७ निधनेसमाप्तौ ३८ । ३९ मुनितेजसाव्यासप्रभावेण ४० । ४१ । ४२ । ४३ । ४४

॥

४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० अव्यवच्छिन्नाःसंतताः ६१ । ६२ । ६३ । ६४ । ६५ 'माघमाकर्कटीप्रोक्तातदपत्यंतुसेगवा' ॥

नाकंपतमहाराजक्षितिकंपेयथाचलः ॥ ततःप्रहस्यबीभत्सुर्व्याक्षिपन्गांडिवंधनुः ४५ गांगेयंपंचविंशत्याक्षुद्रकाणांसमार्पयत् ॥ पुनःपुनःशतैरेनंत्वरमाणोधनंजयः ४६ सर्वगात्रेषुसंक्रुद्धःसर्वमर्मस्वताडयत् ॥ एवमन्यैरपिभृशंविद्ध्यमानःसहस्रशः ४७ तानप्याशुशरैर्भीष्मःप्रविव्याधमहारथः ॥ तैश्चमुक्ताञ्छरान्भीष्मोयुधिसत्यपराक्रमः ४८ निवारयामासशरैःसमंसन्नतपर्वभिः ॥ शिखंडीतुरणेबाणान्यान्मुमोचमहारथः ४९ नचक्रुस्तेरुजंतस्यरुक्मपुंखाःशिलाशिताः ॥ ततःकिरीटीसंक्रुद्धोभीष्ममेवाभ्यवर्तत ५० शिखंडिनंपुरस्कृत्यधनुश्चास्यसमाच्छिनत् ॥ अथैनंनवभिर्विद्ध्वाध्वजमेकेनचिच्छिदे ५१ सारथिंविशिखैश्चास्यदशभिःसमकंपयत् ॥ सोऽन्यत्कार्मुकमादायगांगेयोबलवत्तरम् ५२ तदप्यस्यशितैर्भल्लैस्त्रिधात्रिभिरघातयत् ॥ निमेषार्धेनकौन्तेयआत्तमात्तंमहारणे ५३ एवमस्यधनूंष्याजौचिच्छेदसुबहून्यथ ॥ ततःशांतनवोभीष्मोबीभत्सुंनात्यवर्तत ५४ अथैनंपंचविंशत्याक्षुद्रकाणांसमार्पयत् ॥ सोऽतिविद्धोमहेष्वासोदुःशासनमभाषत ५५ एषपार्थोरणेक्रुद्धःपांडवानांमहारथः ॥ शरैरनेकसाहस्रैर्मामेवाभ्यहनद्रणे ५६ नचैषसमरेशक्योजेतुंवज्रभृताअपि ॥ नचापिसहितावीरादेवदानवराक्षसाः ५७ मांचापिशक्तानिर्जेतुंकिमुमर्त्यामहारथाः ॥ एवंतयोःसंवदतोःफाल्गुनोनिशितैःशरैः ५८ शिखंडिनंपुरस्कृत्यभीष्मंविव्याधसंयुगे ॥ ततोदुःशासनंभूयःस्मयमानइवाब्रवीत् ५९ अतिविद्धःशितैर्बाणैर्भृशंगांडीवधन्वना ॥ वज्राशनिसमस्पर्शाअर्जुनेनशरायुधि ६० मुक्ताःसर्वेऽव्यवच्छिन्नानेमेबाणाःशिखंडिनः ॥ निकृंतमानामर्माणिदृढावरणभेदिनः ६१ मुसलाइवमेघ्नंतिनेमेबाणाःशिखंडिनः ॥ वज्रदंडसमस्पर्शावज्रवेगदुरासदाः ६२ ममप्राणानारुजंतिनेमेबाणाःशिखंडिनः ॥ नाशयंतीवमेप्राणान्यमदूताइवाहिताः ६३ गदापरिघसंस्पर्शानेमेबाणाःशिखंडिनः ॥ भुजगाइवसंक्रुद्धालेलिहानाविषोल्बणाः ६४ समाविशंतिमर्माणिनेमेबाणाःशिखंडिनः ॥ अर्जुनस्यइमेबाणानेमेबाणाःशिखंडिनः ६५ कृन्तन्तिममगात्राणिमाघमासेगवाइव ॥ सर्वेह्यपिनमेदुःखंकुर्युरन्येनराधिपाः ६६ वीरंगांडीवधन्वानमृतेजिष्णुंकपिध्वजम् ॥ इतिब्रुवञ्छांतनवोदिधक्षुरिवपांडवान् ६७ शक्तिंभीष्मःसपार्थायततश्चिक्षेपभारत ॥ तामस्यविशिखैश्छित्वात्रिधात्रिभिरपातयत् ६८ पश्यतांकुरुवीराणांसर्वेषांतवभारत ॥ चर्माथादत्तगांगेयोजातरूपपरिष्कृतम् ६९ खड्गंचान्यतरप्रेप्सुर्मृत्योरग्रेजयायवा ॥ तस्यतच्छतधाचर्मव्यधमत्सायकैस्तथा ७० रथादनवरूढस्यतदद्भुतमिवाभवत् ॥ ततोयुधिष्ठिरोराजास्वान्यनीकान्यचोदयत् ७१ अभिद्रवतगांगेयंमावोऽस्तुभयमण्वपि ॥ अथतेतोमरैःप्रासैर्बाणौघैश्चसमन्ततः ७२ पट्टिशैश्चसुनिस्त्रिंशैर्नाराचैश्चतथाशितैः ॥ वत्सदन्तैश्चभल्लैश्चतमेकमभिदुद्रुवुः ७३

यथामाघमांकर्कटींमातरंसेगवास्तदपत्यानिकृन्तन्तिउदरस्थान्यपत्यानिपृष्ठंविदार्यबहिर्निर्गच्छंतितद्वदित्यर्थः तेनप्राणापहारिवेदनाजनकत्वंबाणानां नेदंशिखंडिबाणेषुसंभवति तेषांमदंगेपुष्पतुल्यत्वात् ६६ । ६७ । ६८ । ६९ अग्रेतेषां मृत्योरितिचतुर्थ्यर्थेषष्ठी मृत्यवेइत्यर्थः ७० । ७१ । ७२ । ७३

७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । कालंमृत्युं ९५ । ९६ । ९७ । ९८ । ९९ । १०० दक्षिणे

सिंहनादस्ततोघोरःपांडवानामभूत्तदा ॥ तथैवतवपुत्राश्चनेदुर्भीष्मजयैषिणः ७४ तमेकमभ्यरक्षंतसिंहनादांश्चचक्रिरे ॥ तत्रासीत्तुमुलंयुद्धंतावकानांपरैःसह
७५ दशमेऽहनिराजेन्द्रभीष्मार्जुनसमागमे ॥ आसीद्गांगइवावर्तोमुहूर्तमुदधेरिव ७६ सैन्यानांयुध्यमानानांनिघ्नतामितरेतरम् ॥ असौम्यरूपापृथिवीशोणिता
क्ताऽभवत्तदा ७७ समंचविषमंचैवनप्राज्ञायतकिंचन ॥ योधानामयुतंहत्वातस्मिन्सदशमेऽहनि ७८ अतिष्ठदाहवेभीष्मोभिद्यमानेषुमर्मसु ॥ ततःसेनामुखे
तस्मिन्स्थितःपार्थोधनुर्धरः ७९ मध्येनकुरुसैन्यानांद्रावयामासवाहिनीम् ॥ वयंश्वेतहयाद्भीताःकुंतीपुत्राद्धनंजयात् ८० पीड्यमानाःशितैःशस्त्रैःप्राद्रवामरणे
तदा ॥ सौवीराःकितवाःप्राच्याःप्रतीच्योदीच्यमालवाः ८१ अभीषाहाःशूरसेनाःशिवयोऽथवसातयः ॥ शाल्वाश्रयास्त्रिगर्ताश्चअंबष्ठाःकेकयैःसह ८२ सर्वे
एतेमहात्मानःशरार्ताव्रणपीडिताः ॥ संग्रामेनजहुर्भीष्मंयुध्यमानंकिरीटिना ८३ ततस्तमेकंबहवःपरिवार्यसमंततः ॥ परिकाल्यकुरून्सर्वान्शरवर्षैरवाकिरन्
८४ निपातयतगृह्णीतयुध्यध्वमवकृंतत ॥ इत्यासीत्तुमुलःशब्दोराजन्भीष्मरथंप्रति ८५ निहत्यसमरेराजन्शतशोऽथसहस्रशः ॥ नतस्यासीदनिर्भिन्नंगात्रेद्व्यंगुलमं
तरम् ८६ एवंभूतस्तवपिताशरैर्विशकलीकृतः ॥ शिताग्रैःफाल्गुनेनाजौप्राक्शिराःप्रापतद्रथात् ८७ किंचिच्छेषेदिनकरेपुत्राणांतवपश्यताम् ॥ हाहेतिदिविदेवानां
पार्थिवानांचभारत ८८ पतमानेरथाद्भीष्मेबभूवसुमहास्वनः ॥ संपतन्तमभिप्रेक्ष्यमहात्मानंपितामहम् ८९ सहभीष्मेणसर्वेषांप्रापतन्हृदयानिनः ॥ सपपातम
हाबाहुर्वसुधामनुनादयन् ९० इंद्रध्वजइवोत्सृष्टःकेतुःसर्वधनुष्मताम् ॥ धरणींनसपस्पर्शशरसंघैःसमावृतः ९१ शरतल्पेमहेष्वासंशयानंपुरुषर्षभम् ॥ रथात्प्रपति
तंचैनंदिव्योभावःसमाविशत् ९२ अभ्यवर्षच्चपर्जन्य प्राकंपतचमेदिनी ॥ पतन्सददृशेचापिदक्षिणेनदिवाकरम् ९३ संज्ञांचोपालभद्वीरःकालंसंचिन्त्यभारत ॥ अंत
रिक्षेचशुश्रावदिव्यावाचःसमंततः ९४ कथंमहात्मागांगेयःसर्वशस्त्रभृतांवरः ॥ कालकर्तानरव्याघ्रःसंप्राप्तेदक्षिणायने ९५ स्थितोऽस्मीतिचगांगेयस्तच्छ्रुत्वावाक्य
मब्रवीत् ॥ धारयामासचप्राणान्पतितोऽपिमहीतले ९६ उत्तरायणमन्विच्छन्भीष्मःकुरुपितामहः ॥ तस्यतन्मतमाज्ञायगंगाहिमवतःसुता ९७ महर्षीन्हंसरूपे
णप्रेषयामासतत्रवै ॥ ततःसंपातिनोहंसास्त्वरितामानसौकसः ९८ आजग्मुःसहितादृष्टुंभीष्मंकुरुपितामहम् ॥ यत्रशेतेनरश्रेष्ठःशरतल्पेपितामहः ९९ तेतुभीष्मंस
मासाद्यऋषयोहंसरूपिणः ॥ अपश्यञ्छरतल्पस्थंभीष्मंकुरुकुलोद्वहम् १०० तेतंदृष्ट्वामहात्मानंकृत्वाचापिप्रदक्षिणम् ॥ गांगेयंभरतश्रेष्ठंदक्षिणेनचभास्करम् १०१ इतरे
तरमामंत्र्यप्राहुस्तत्रमनीषिणः ॥ भीष्मःकथंमहात्मामन्संस्थातादक्षिणायने २ इत्युक्त्वाप्रस्थिताहंसादक्षिणामभितोदिशम् ॥ संप्रेक्ष्यवैमहाबुद्धिश्चिंतयित्वाचभारत ३

नदक्षिणमार्गस्थंभास्करंचदृष्ट्वेत्यन्वयः १०१ संस्थातामरिष्यति २ । १०३

१. धारयिष्याम्यहंप्राणानितिवापाठः

४ । ५ ऐश्वर्येणस्वसामर्थ्येनभूतःप्राप्तःस्वच्छंदमृत्युत्वात ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ ॥ इतिभीष्मपर्वणिनीलकंठीये

तानब्रवीच्छांतनवोनाहंगंताकथंचन ॥ दक्षिणावर्तआदित्येएतन्मेमनसिस्थितम् १०४ गमिष्यामिस्वकंस्थानमासीद्यन्मेपुरातनम् ॥ उदगायनआदित्येहंसाःसत्यं
ब्रवीमिवः ५ धारयिष्याम्यहंप्राणानुत्तरायणकांक्षया ॥ ऐश्वर्यभूतःप्राणानामुत्सर्गोहियतोमम ६ तस्मात्प्राणान्धारयिष्येमुमूर्षुरुदगायने ॥ यश्चदत्तोवरोमह्यंपित्रा
तेनमहात्मना ७ छंदतोमृत्युरित्येवंतस्यचास्तुवरस्तथा ॥ धारयिष्येततःप्राणानुत्सर्गेनियतेसति ८ इत्युक्त्वातांस्तदाहंसान्सशेतेशरतल्पगः ॥ एवंकुरूणांपतिते
शृंगेभीष्मेमहौजसि ९ पांडवाःसृंजयाश्चैवसिंहनादंप्रचक्रिरे ॥ तस्मिन्हतेमहासत्वेभरतानांपितामहे ११० नकिंचित्प्रत्यपद्यंतपुत्रास्तेभरतर्षभ ॥ संमोहश्चैवतुमुलः
कुरूणामभवत्तदा ११ कृपदुर्योधनमुखानिःश्वस्यरुरुदुस्ततः ॥ विषादाच्चचिरंकालमतिष्ठन्विगतेंद्रियाः १२ दध्युश्चैवमहाराजनयुद्धेदधिरेमनः ॥ ऊरुग्राहगृहीताश्च
नाभ्यधावंतपाडवान् १३ अवध्येशन्तनोःपुत्रेहतेभीष्मेमहौजसि ॥ अभावःसहसाराजन्कुरुराजस्यतर्कितः १४ हतप्रवीरास्तुवयंनिकृत्ताश्चशितैःशरैः ॥ कर्तव्यंनाभि
जानीमोनिर्जिताःसव्यसाचिना १५ पांडवाश्चजयंलब्ध्वापरत्रचपरांगतिम् ॥ सर्वेदध्मुर्महाशंखान्शूराःपरिघबाहवः १६ सोमकाश्चसपंचालाःप्राहृष्यंतजनेश्वर ॥
ततस्तूर्यसहस्रेषुनदत्सुसमहाबलः १७ आस्फोटयामासभृशंभीमसेनोननादच ॥ सेनयोरुभयोश्चापिगांगेयेनिहतेविभौ १८ संन्यस्यवीराःशस्त्राणिप्राध्यायंतसमंततः ॥
प्राक्रोशन्प्राद्रवंश्चान्येजग्मुर्मोहंतथाऽपरे १९ क्षत्रंचान्येऽभ्यनिंदन्तभीष्मंचान्येऽभ्यपूजयन् ॥ ऋषयःपितरश्चैवप्रशशंसुर्महाव्रतम् २० भरतानांचयेपूर्वेतेचैनंप्रशशं
सिरे ॥ महोपनिषदंचैवयोगमास्थायवीर्यवान् २१ जपन्शांतनवोधीमान्कालाकांक्षीस्थितोऽभवत् १२२ ॥ इतिश्रीमहाभारतेभीष्मपर्वणिभीष्मवधपर्वणिभीष्मनि
पातनेऊनविंशत्यधिकशततमोध्यायः ॥ ११९ ॥ धृतराष्ट्रउवाच ॥ कथमासंस्तदायोधाहीनाभीष्मेणसंजय ॥ बलिनादेवकल्पेनगुर्वर्थेब्रह्मचारिणा १ तदैवनिहता
न्मन्येकुरूनन्यांश्चपांडवैः ॥ नप्राहरद्यदाभीष्मोघृणित्वाद्द्रुपदात्मजम् २ ततोदुःखतरंमन्येकिमन्यत्प्रभविष्यति ॥ अद्याहंपितरंश्रुत्वानिहतंस्मसुदुर्मतिः ३ अश्म
सारमयंनूनंहृदयंममसंजय ॥ श्रुत्वाविनिहतंभीष्मंशतधायन्नदीर्यते ४ यदन्यन्निहतेनाजौभीष्मेणजयमिच्छता ॥ चेष्टितंकुरुसिंहेनतन्मेकथयसुव्रत ५ पुनःपुनर्न
मृष्यामिहतंदेवव्रतंरणे ॥ नहतोजामदग्न्येनदिव्यैरस्त्रैरयंपुरा ६ सहतोद्रौपदेयेनपांचाल्येनशिखंडिना ॥ संजयउवाच ॥ सायाह्नेनिहतोभूमौधार्तराष्ट्रान्विषादयन् ७
पंचालानांददौहर्षंभीष्मःकुरुपितामहः ॥ सशेतेशरतल्पस्थोमेदिनीमस्पृशंस्तदा ८ भीष्मेरथात्प्रपतितेप्रच्युतेधरणीतले ॥ हाहेतितुमुलःशब्दोभूतानांसमपद्यत ९

भारतभावदीपेएकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ कथमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

सीमावृक्षेइति । ननुकौरवाणांतावद्भीष्मेसेनापतौपतितेभयमुचितंप्रधानविनाशेजयाशाविच्छेदात् । पांडवानांतुकथंभयमग्रेतेषांहर्षस्यकथनात । उच्यते । पांडवानामपिमहद्भयमुपपद्यतएवसंधित्वांछाविच्छेदात्
अयंभावः । उभयोःसीमास्थानीयोभीष्मोजीवन्नस्माकंसंधिंकरिष्यति । तेनचपुत्रसुहृद्विनाशधनव्ययप्रसवायानभविष्यंति । हतेत्वेतस्मिन्सुतरांसंध्याशाविच्छेदएवजातइतिपुत्रसुहृद्विनाशादिप्रयुक्तंभयंयुज्यत



सीमावृक्षेनिपतितेकुरूणांसमितिंजये ॥ सेनयोरुभयोराजन्क्षत्रियान्भयमाविशत् १० भीष्मंशांतनवंदृष्ट्वाविशीर्णकवचध्वजम् ॥ कुरवःपर्यवर्तन्तपांडवाश्चविशांपते ११
खंतमःसंवृतमभूदासीद्भानुर्गतप्रभः ॥ ररासपृथिवीचैवभीष्मेशांतनवेहते १२ अयंब्रह्मविदांश्रेष्ठोह्ययंब्रह्मविदांवरः ॥ इत्यभाषंतभूतानिशयानंपुरुषर्षभम् १३ अयंपि
तरमाज्ञायकामार्त्तंशन्तनुंपुरा ॥ ऊर्ध्वरेतसमात्मानंचकारपुरुषर्षभः १४ इतिस्मशरतल्पस्थंभरतानांमहत्तमम् ॥ ऋषयस्त्वभ्यभाषंतसहिताःसिद्धचारणैः १५ हतेशांत
नवेभीष्मेभरतानांपितामहे ॥ नकिंचित्प्रत्यपद्यंतपुत्रास्तवहिमारिष १६ विषण्णवदनाश्चासन्हतश्रीकाश्चभारत ॥ अतिष्ठन्व्रीडिताश्चैवह्रियायुक्ताह्यधोमुखाः १७
पांडवाश्चजयंलब्ध्वासंग्रामशिरसिस्थिताः ॥ सर्वेदध्मुर्महाशंखान्हेमजालपरिष्कृतान् १८ हर्षात्तूर्यसहस्रेषुवाद्यमानेषुचानघ ॥ अपश्याममहाराजभीमसेनंमहाबलम्
१९ विक्रीडमानंकौन्तेयंहर्षेणमहतायुतम् ॥ निहत्यतरसाशत्रुंमहाबलसमन्वितम् २० संमोहश्चापितुमुलःकुरूणामभवत्ततः ॥ कर्णदुर्योधनौचापिनिःश्वसेतांमुहुर्मुहुः
२१ तथानिपतितेभीष्मेकौरवाणांपितामहे ॥ हाहाभूतमभूत्सर्वंनिर्मर्यादमवर्तत २२ दृष्ट्वाचपतितंभीष्मंपुत्रोदुःशासनस्तव ॥ उत्तमंजवमास्थायद्रोणानीकमुपाद्रवत्
२३ भ्रात्राप्रस्थापितोवीरःस्वेनानीकेनदंशितः ॥ प्रययौपुरुषव्याघ्रःस्वसैन्यंसविषादयन् २४ तमायांतमभिप्रेक्ष्यकुरवःपर्यवारयन् ॥ दुःशासनंमहाराजकिमयंवक्ष्य
तीतिच २५ ततोद्रोणायनिहतंभीष्ममाचष्टकौरवः ॥ द्रोणस्तत्राप्रियंश्रुत्वामुमोहभरतर्षभ २६ ससंज्ञामुपलभ्याशुभारद्वाजःप्रतापवान् ॥ निवारयामासतदास्वान्य
नीकानिमारिष २७ विनिवृत्तान्कुरून्दृष्ट्वापांडवाऽपिस्वसैनिकान् ॥ दूतैःशीघ्राश्वसंयुक्तैःसमंतात्पर्यवारयन् २८ निवृत्तेषुचसैन्येषुपारंपर्येणसर्वशः ॥ निर्मुक्तकवचाः
सर्वेभीष्ममीयुर्नराधिपाः २९ व्युपरम्यततोयुद्धाद्योधाःशतसहस्रशः ॥ उपतस्थुर्महात्मानंप्रजापतिमिवामराः ३० तेतुभीष्मंसमासाद्यशयानंभरतर्षभम् ॥ अभि
वाद्यावतिष्ठंतपांडवाःकुरुभिःसह ३१ अथपांडून्कुरूंश्चैवप्रणिपत्याग्रतःस्थितान् ॥ अभ्यभाषतधर्मात्माभीष्मःशांतनवस्तदा ३२ स्वागतंवोमहाभागाःस्वागतंवोमहा
रथाः ॥ तुष्यामिदर्शनाच्चाहंयुष्माकममरोपमाः ३३ अभिमंत्र्याथतानेवंशिरसालंबताऽब्रवीत् ॥ शिरोमेलंबतेऽत्यर्थमुपधानंप्रदीयताम् ३४ ततोनृपाःसमाजह्रुस्त
नूनिचमृदूनिच ॥ उपधानानिमुख्यानिनैच्छत्तानिपितामहः ३५ अथाब्रवीन्नरव्याघ्रःप्रहसन्निवतान्नृपान् ॥ नैतानिवीरशय्यासुयुक्तरूपाणिपार्थिवाः ३६

इति तस्माद्युक्तमुक्तंसेनयोरुभयोरिति । हर्षकथनंत्वापाततोज्ञेयम् १० पर्यवर्त्तंतपरिवृत्तवंतः ११ । १२ । १३ । १४ । १५ । १६ व्रीडिताःव्रीडावंतः व्रीडाचान्यतः ह्रीश्चाकार्यकरणात् १७ । १८
१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ पारंपर्येणक्रमेण २९ । ३० । ३१ । ३२ । ३३ उपधानंउपबर्हम् ३४ । ३५ । ३६

१ ' परमार्त्तैंतवसुतान्स्थितानुद्वीक्ष्य भारत इत्यधिकम् '

३७ इहवीरशय्यायां ३८ । ३९ । ४० । ४१ । ४२ व्यवसायमुचितोद्योगम् ४३ । ४४ अन्वगृह्णादभ्यवतष्टंभे ४५ । ४६ । ४७ उपहितंउपधानीयंदत्तम् ४८ । ४९ पांडवानभिसंस्थितान् पांडवानांस

ततोवीक्ष्यनरश्रेष्ठमभ्यभाषतपांडवम् ।। धनंजयंदीर्घबाहुंसर्वलोकमहारथम् ३७ धनंजयमहाबाहोशिरोमेतातलंबते ।। दीयतामुपधानंवैयद्युक्तमिहमन्यसे ३८
।। संजयउवाच ।। समारोप्यमहच्चापमभिवाद्यपितामहम् ।। नेत्राभ्यामश्रुपूर्णाभ्यामिदंवचनमब्रवीत् ३९ आज्ञापयकुरुश्रेष्ठसर्वशस्त्रभृतांवर ।। प्रेष्योऽहंतवदु
र्धर्षक्रियतांकिंपितामह ४० तमब्रवीच्छांतनवःशिरोमेतातलंबते ।। उपधानंकुरुश्रेष्ठफाल्गुनोपदधत्स्वमे ४१ शयनस्यानुरूपंवैशीघ्रंवीरप्रयच्छमे ।। त्वंहिपार्थ
समर्थोवैश्रेष्ठःसर्वधनुष्मताम् ४२ क्षत्रधर्मस्यवेत्ताचबुद्धिसत्वगुणान्वितः ।। फाल्गुनोऽपितथेत्युक्त्वाव्यवसायमरोचयत् ४३ गृह्यानुमंत्र्यगांडीवंशरान्सन्नतपर्वणः ।।
अनुमान्यमहात्मानंभरतानांमहारथम् ४४ त्रिभिस्तीक्ष्णैर्महावेगैरन्वगृह्णाच्छिरःशरैः ।। अभिप्रायेतुविदितेधर्मात्मासव्यसाचिना ४५ अतुष्यद्भरतश्रेष्ठोभीष्मो
धर्मार्थतत्त्ववित् ।। उपधानेनदत्तेनप्रत्यनंदद्धनंजयम् ४६ प्राहसर्वान्समुद्वीक्ष्यभरतान्भारतंप्रति ।। कुंतीपुत्रंयुधांश्रेष्ठंसुहृदांप्रीतिवर्धनम् ४७ शयनस्यानुरूपं
मेपांडवोपहितंत्वया ।। यद्यन्यथाप्रपद्येथाःशपेयंत्वामहंरुषा ४८ एवमेवमहाबाहोधर्मेषुपरितिष्ठता ।। स्वप्तव्यंक्षत्रियेणाजौशरतल्पगतेनवै ४९ एवमुक्त्वातु
बीभत्सुंसर्वांस्तानब्रवीद्वचः ।। राज्ञश्चराजपुत्रांश्चपांडवानभिसंस्थितान् ५० पश्यध्वमुपधानंमेपांडवेनाभिसंधितम् ।। शिश्येऽहमस्यांशय्यायांयावदावर्तनंरवेः
५१ येतदामांगमिष्यंतितेचप्रेक्ष्यंतिमांनृपाः ।। दिशंवैश्रवणाक्रांतांयदागन्तादिवाकरः ५२ नूनंसप्ताश्वयुक्तेनरथेनोत्तमतेजसा ।। विमोक्ष्येऽहंतदाप्राणान्सुहृदः
सुप्रियानिव ५३ परिखाःखन्यतामत्रममावसदनेनृपाः ।। उपासिष्येविवस्वंतमेवंशरशताचितः ५४ उपारमध्वंसंग्रामाद्वैरमुत्सृज्यपार्थिवाः ।। संजयउवाच ।।
उपातिष्ठन्नथोवैद्याःशल्योद्धरणकोविदाः ५५ सर्वोपकरणैर्युक्ताःकुशलैःसाधुशिक्षिताः ।। तान्दृष्ट्वाजाह्नवीपुत्रःप्रोवाचतनयंतव ५६ धनंदत्वाविसृज्यन्तांपूजयित्वा
चिकित्सकाः ।। एवंगतेमयेदानींवैद्यैःकार्यमिहास्तिकिम् ५७ क्षत्रधर्मप्रशस्तांहिप्राप्तोऽस्मिपरमांगतिम् ।। नैषधर्मोमहीपालाःशरतल्पगतस्यमे ५८ एभिरे
वशरैश्चाहंदग्धव्योऽस्मिनराधिपाः ।। तच्छ्रुत्वावचनंतस्यपुत्रोदुर्योधनस्तव ५९ वैद्यान्विसर्जयामासपूजयित्वायथार्हतः ।। ततस्तेविस्मयंजग्मुर्नानाजनपदेश्वराः
६० स्थितिंधर्मेपरांदृष्ट्वाभीष्मस्यामिततेजसः ।। उपधानंततोदत्वापितुस्तेमनुजेश्वराः ६१ सहिताःपांडवाःसर्वेकुरवश्चमहारथाः ।। उपगम्यमहात्मानंशयानंशयने
शुभे ६२ तेऽभिवाद्यततोभीष्मंकृत्वाचत्रिःप्रदक्षिणम् ।। विधायरक्षांभीष्मस्यसर्वएवसमंततः ६३ वीराःस्वशिबिराण्येवध्यायंतःपरमातुराः ।। निवेशायाभ्युपागच्छ
न्सायाह्नेरुधिरोक्षिताः ६४ निविष्टान्पांडवांश्चैवप्रीयमाणान्महारथान् ।। भीष्मस्यपतनेहृष्टानुपगम्यमहाबलः ६५

मीपवर्तिनः ५० । ५१ । ५२ । ५३ ममावसदनेमन्निवासस्थाने ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५

६६ । ६७ चक्षुषाहंतीतितथातंदृष्टिमात्रेणहननक्षमम् ६८ । ६९ । ७० । ७१ ॥ इतिभीष्मपर्वणिनीलकंठीयेभारतभावदीपे विंशाधिकशततमोऽध्यायः ॥ १२० ॥ व्युष्टायामिति १ । २ । ३ पृथग्जनाः



उवाचमाधवःकालेधर्मपुत्रंयुधिष्ठिरम् ॥ दिष्ट्याजयसिकौरव्यदिष्ट्याभीष्मोनिपातितः ६६ अवध्योमानुषैरेवसत्यसंधोमहारथः ॥ अथवादैवतैःसार्धंसर्वशास्त्रस्य
पारगः ६७ त्वांतुचक्षुर्हणंप्राप्यदग्धोघोरेणचक्षुषा ॥ एवमुक्तोधर्मराजःप्रत्युवाचजनार्दनम् ६८ तवप्रसादाद्विजयःक्रोधात्तवपराजयः ॥ त्वंहिनःशरणंकृष्ण
भक्तानामभयंकरः ६९ अनाश्चर्योजयस्तेषांयेषांत्वमसिकेशव ॥ रक्षितासमरेनित्यंनित्यंचापिहितेरतः ७० सर्वथात्वांसमासाद्यनाश्चर्यमितिमेमतिः ॥ एवमु
क्तःप्रत्युवाचस्मयमानोजनार्दनः ॥ त्वय्येवैतद्युक्तरूपंवचनंपार्थिवोत्तम ७१ ॥ इतिश्रीमहाभारते भीष्मपर्वणिभीष्मवधप० भीष्मोपधानदानेविंशाधिकशततमोऽध्यायः
॥ १२० ॥ संजयउवाच ॥ व्युष्टायांतुमहाराजशर्वर्यांसर्वपार्थिवाः ॥ पांडवाधार्तराष्ट्राश्चउपातिष्ठन्पितामहम् १ तंवीरशयनेवीरंशयानंकुरुसत्तम ॥ अभिवा
द्योपतस्थुर्वैक्षत्रियाःक्षत्रियर्षभम् २ कन्याश्चंदनचूर्णैश्चलाजैर्माल्यैश्चसर्वशः ॥ अवाकिरञ्छांतनवंतत्रगत्वासहस्रशः ३ स्त्रियोवृद्धास्तथाबालाःप्रेक्षकाश्चपृथ
ग्जनाः ॥ समभ्ययुःशांतनवंभूतानीवतमोनुदम् ४ तूर्याणिशतसंख्यानितथैवनटनर्तकाः ॥ शिल्पिनश्चतथाऽऽजग्मुःकुरुवृद्धंपितामहम् ५ उपारम्यचयु
द्धेभ्यःसन्नाहान्विप्रमुच्यते ॥ आयुधानिचनिक्षिप्यसहिताःकुरुपांडवाः ६ अन्वासंतदुराधर्षंदेवव्रतमरिन्दमम् ॥ अन्योन्यंप्रीतिमंतस्तेयथापूर्वंयथावयः ७
सापार्थिवशताकीर्णासमितिर्भीष्मशोभिता ॥ शुशुभेभारतीदीप्तादिवीवादित्यमंडलम् ८ विबभौचनृपाणांसागंगासुतमुपासताम् ॥ देवानामिवदेवेशंपितामहमु
पासताम् ९ भीष्मस्तुवेदनांधैर्यान्निगृह्यभरतर्षभ ॥ अभितप्तःशरैश्चैवनिःश्वसन्नुरगोयथा १० शराभितप्तकायोऽपिशस्त्रसंपातमूर्छितः ॥ पानीयमितिसंप्रेक्ष्य
राज्ञस्तान्प्रत्यभाषत ११ ततस्तेक्षत्रियाराजन्नुपाजह्रुःसमंततः ॥ भक्ष्यानुच्चावचान्राजन्वारिकुंभांश्चशीतलान् १२ उपानीतंतुपानीयंदृष्ट्वाशांतनवोऽब्रवीत् ॥
नाद्याऽतीतामयाशक्याभोगाःकेचनमानुषाः १३ अपक्रांतोमनुष्येभ्यःशरशय्यांगतोह्यहम् ॥ प्रतीक्षमाणस्तिष्ठामिनिवृत्तिंशशिसूर्ययोः १४ एवमुक्त्वाशांतन
वोनिन्दन्वाक्येनपार्थिवान् ॥ अर्जुनंद्रष्टुमिच्छामीत्यभ्यभाषतभारत १५ अथोपेत्यमहाबाहुरभिवाद्यपितामहम् ॥ अतिष्ठत्प्राजंलिःप्रह्वःकिंकरोमीतिचाब्रवीत् १६
तंदृष्ट्वापांडवंराजन्नभिवाद्याग्रतःस्थितम् ॥ अभ्यभाषतधर्मात्माभीष्मःप्रीतोधनंजयम् १७ दह्यतीवशरीरंमेसंवृतस्यतवेषुभिः ॥ मर्माणिपरिदूयंतेमुखंचपरिशुष्यति १८
वेदनार्तशरीरस्यप्रयच्छापोममार्जुन ॥ त्वंहिशक्तोमहेष्वासदातुमापोयथाविधि १९ अर्जुनस्तुतथेत्युक्त्वारथमारुह्यवीर्यवान् ॥ अधिज्यंबलवत्कृत्वागांडीवंव्याक्षिपद्ध
नुः २० तस्यज्यातलनिर्घोषंविस्फूर्जितमिवाशनेः ॥ वित्रेसुःसर्वभूतानिसर्वेश्रुत्वाचपार्थिवाः २१ ततःप्रदक्षिणंकृत्वारथेनरथिनांवरः ॥ शयानंभरतश्रेष्ठंसर्वशस्त्रभृतांवरम् २२

प्राकृताःजनाःभूतानिप्राणिनोगंधर्वादीनिवा तमोनुदंसूर्यम् ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ परिदूयंतेपरितप्यंते १८ । १९ । २० । २१ । २२

२३ । २४ । २५ विकुर्वतोविशेषेणकुर्वतः २६ । २७ व्याविध्यन्भ्रामितवंतः २८ । २९ । ३० । ३१ । निधनंनिधनहेतु ःतद्विदोदेवरहस्यज्ञाः ३२ । ३३ जगतिभूलोके ३४ । ३५ । ३६

संधायचशरंदीप्तमभिमंत्र्यसपांडवः ॥ पर्जन्यास्त्रेणसंयोज्यसर्वलोकस्यपश्यतः २३ अविध्यत्पृथिवींपार्थःपार्श्वेभीष्मस्यदक्षिणे ॥ उत्पपाततततोधारावारिणोविमला
शुभा २४ शीतस्यामृतकल्पस्यदिव्यगंधरसस्यच ॥ अतर्पयत्ततःपार्थःशीतयाजलधारया २५ भीष्मंकुरूणामृषभंदिव्यकर्मपराक्रमम् ॥ कर्मणातेनपार्थस्यश
क्रस्येवविकुर्वतः २६ विस्मयंपरमंजग्मुस्ततस्तेवसुधाधिपाः ॥ तत्कर्मप्रेक्ष्यबीभत्सोरतिमानुषविक्रमम् २७ संप्रावेपंतकुरवोगावःशीतार्दिताइव ॥ विस्मया
च्चोत्तरीयाणिव्याविध्यन्सर्वतोनृपाः २८ शंखदुंदुभिनिर्घोषस्तुमुलःसर्वतोऽभवत् ॥ तृप्तःशांतनवश्चापिराजन्बीभत्सुमब्रवीत् २९ सर्वपार्थिववीराणांसन्निधौपूजय
न्निव ॥ नैतच्चित्रंमहाबाहोत्वयिकौरवनन्दन ३० कथितोनारदेनासिपूर्वर्षिरमितद्युते ॥ वासुदेवसहायस्त्वंमहत्कर्मकरिष्यसि ३१ यन्नोत्सहतिदेवेन्द्रःसहदेवैरपिध्रुवम्
विदुस्त्वांनिधनंपार्थसर्वक्षत्रस्यतद्विदः ३२ धनुर्धराणामेकस्त्वंपृथिव्यांप्रवरोनृषु ३३ मनुष्याजगतिश्रेष्ठाःपक्षिणांपतगेश्वरः ॥ सारितांसागरःश्रेष्ठोगौर्वरिष्ठाचतु
ष्पदाम् ३४ आदित्यस्तेजसांश्रेष्ठोगिरीणांहिमावान्वरः ॥ जातीनांब्राह्मणःश्रेष्ठःश्रेष्ठस्त्वमसिधन्विनाम् ३५ नवैश्रुतंधार्तराष्ट्रेणवाक्यंमयोच्यमानंविदुरेणचैव ॥ द्रो
णेनरामेणजनार्दनेनमुहुर्मुहुःसंजयेनापिचोक्तम् ३६ परीतबुद्धिर्हिविसंज्ञकल्पोदुर्योधनोनचतच्छ्रद्दधाति ॥ सशेष्यतेवैनिहतश्चिरायशास्त्रातिगोभीमबलाभिभूतः
३७ एतच्छ्रुत्वातद्वचःकौरवेन्द्रोदुर्योधनोदीनमनाबभूव ॥ तमब्रवीच्छांतवोऽभिवीक्ष्यनिबोधराजन्भववीतमन्युः ३८ दृष्टंदुर्योधनैतत्तेयथापार्थेनधीमता ॥ जलस्य
धाराजनिताशीतस्यामृतगंधिनः ३९ एतस्यकर्तालोकेऽस्मिन्नान्यःकश्चनविद्यते ॥ आग्नेयंवारुणंसौम्यंवायव्यमथवैष्णवम् ४० ऐन्द्रंपाशुपतंब्राह्मंपारमेष्ठ्यंप्रजा
पतेः ॥ धातुस्त्वष्टुश्चसवितुर्वैवस्वतमथापिवा ४१ सर्वस्मिन्मानुषेलोकेवेत्त्येकोहिधनंजयः ॥ कृष्णोवादेवकीपुत्रोनान्योवेदेहकश्चन ४२ अशक्यःपांडवस्ता
तयुद्धेजेतुंकथंचन ॥ अमानुषाणिकर्माणियस्यैतानिमहात्मनः ४३ तेनसत्ववतासंख्येशूरेणाहवशोभिना ॥ कृतिनासमरेराजन्संधिर्भवतुमाचिरम् ४४ यावत्कृ
ष्णोमहाबाहुःस्वाधीनःकुरुसत्तम ॥ तावत्पार्थेनशूरेणसंधिस्तेतातयुज्यताम् ४५ यावन्नतेचमूःसर्वाःशरैःसन्नतपर्वभिः ॥ नाशयत्यर्जुनस्तावत्संधिस्तेतातयुज्यता
म् ४६ यावत्तिष्ठंतिसमरेहतशेषाःसहोदराः ॥ नृपाश्चबहवोराजंस्तावत्सन्धिःप्रयुज्यताम् ४७ ननिर्दहतितेयावत्क्रोधदीप्तेक्षणश्चमूम् ॥ युधिष्ठिरोरणेतावत्सं
धिस्तेतातयुज्यताम् ४८ नकुलःसहदेवश्चभीमसेनश्चपांडवः ॥ यावच्चमूंमहाराजनाशयंतिनसर्वशः ४९ तावत्तेपांडवैर्वीरैःसौहार्दंममरोचते ॥ युद्धंमदंतमेवास्तुतातसं
शाम्यपांडवैः ५० एतत्तुरोचतांवाक्यंयदुक्तोऽसिमयाऽनघ ॥ एतत्क्षममहंमन्येतवचैवकुलस्यच ५१

३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० क्षेमंहितं ५१

फाल्गुनेनयत्कृतंएतदेतावदेवपर्याप्तमस्तु चशब्दादेतावतांभ्रातॄणामंतादपीति ५२ । ५३ । ५४ । ५५ योज्ययोगधारणांयुक्तंकृत्वा ५६ । ५७ ॥ इतिभी० नी० भारतभावदीपेएकविंशाधिकशततमोऽध्या

त्यक्त्वमन्युंव्युपशाम्यस्वपार्थैःपर्याप्तमेतद्यत्कृतंफाल्गुनेन ॥ भीष्मस्यांतादस्तुवःसौहृदंचजीवंतुशेषाःसाधुराजन्प्रसीद ५२ राज्यस्यार्धंदीयतांपांडवानामिन्द्रप्रस्थं धर्मराजोऽभियातु ॥ मामित्रध्रुक्पार्थिवानांजघन्यःपापांकीर्तिंप्राप्स्यसेकौरवेन्द्र ५३ ममावसानाच्छांतिरस्तुप्रजानांसंगच्छंतांपार्थिवाःप्रीतिमन्तः ॥ पितापुत्रंमा तुलंभागिनेयोभ्राताचैवभ्रातरंप्रैतुराजन् ५४ नचेदेवंप्राप्तकालंवचोमेमोहाविष्टःप्रतिपत्स्यस्यबुद्ध्या ॥ तप्स्यस्यन्तेएतदन्ताःस्थसर्वेसत्यामेतांभारतीमीरयामि ५५ एत द्वाक्यंसौहृदादापगेयोमध्येराज्ञांभारतंश्रावयित्वा ॥ तूष्णीमासीच्छल्यसंतप्तमर्मायोज्यात्मानंवेदनांसंनियम्य ५६ ॥ संजयउवाच ॥ धर्मार्थसहितंवाक्यं श्रुत्वाहितमनामयम् ॥ नारोचयतपुत्रस्तेमुमूर्षुरिवभेषजम् ५७ ॥ इतिश्रीम० भी० भी० दुर्योधनंप्रतिभीष्मवाक्येएकविंशाधिकशततमोऽध्यायः ॥ ॥ १२१ ॥ संजयउवाच ॥ ततस्तेपार्थिवाःसर्वेजग्मुःस्वानालयान्पुनः ॥ तूष्णींभूतेमहाराजभीष्मेशांतनुनन्दने १ श्रुत्वातुनिहतंभीष्मंराधेयःपुरुषर्षभः ॥ ईषदा गतसंत्रासस्त्वरयोपजगामह २ सददर्शमहात्मानंशरतल्पगतंतदा ॥ जन्मशय्यागतंवीरंकार्तिकेयमिवप्रभुम् ३ निमीलिताक्षंतंवीरंसाश्रुकण्ठस्तदावृषः ॥ भीष्मभी ष्ममहाबाहोइत्युवाचमहाद्युतिः ४ राधेयोऽहंकुरुश्रेष्ठनित्यमक्षिगतस्तव ॥ ॥ द्वेष्योऽहंतवसर्वत्रइतिचैनमुवाचह ५ तच्छ्रुत्वाकुरुवृद्धोहिबलीसंवृतलोचनः ॥ शनैरु द्वीक्ष्यसस्नेहमिदंवचनमब्रवीत् ६ रहितंधिष्ण्यमालोक्यसमुत्सार्यचरक्षिणः ॥ पितेवपुत्रंगांगेयःपरिरभ्यैकपाणिना ७ एह्येहिमेविप्रतीपस्पर्धसेत्वंमयासह ॥ यदि मांनाधिगच्छेथानतेश्रेयोध्रुवंभवेत् ८ कौन्तेयस्त्वंनराधेयोनतवाधिरथःपिता ॥ सूर्यजस्त्वंमहाबाहोविदितोनारदान्मया ९ कृष्णद्वैपायनाच्चैवतच्चसत्यंनसंशयः ॥ नचद्वेषोऽस्तिमेतातत्वयिसत्यंब्रवीमिते १० तेजोवधनिमित्तंतुपरुषंत्वाऽहमब्रुवम् ॥ अकस्मात्पाडवान्सर्वानवाक्षिपसिसुव्रत ११ येनासिबहुशोराज्ञाचोदितःसूत नंदन ॥ जातोऽसिधर्मलोपेनततस्तेबुद्धिरीदृशी १२ नीचाश्रयान्मत्सरेणद्वेषिणीगुणिनामपि ॥ तेनासिबहुशोरूक्षंश्रावितःकुरुसंसदि १३ जानामिसमरेवीर्यं शत्रुभिर्दुःसहंभुवि ॥ ब्रह्मण्यतांचशौर्यंचदानेचपरमांस्थितिम् १४ नत्वयासदृशःकश्चित्पुरुषेष्वमरोपम ॥ कुलभेदभयाच्चाहंसदापरुषमुक्तवान् १५ इष्वस्त्रेचास्त्रसं धानेलाघवेऽस्त्रबलेतथा ॥ सदृशःफाल्गुनेनासिकृष्णेनचमहात्मना १६ कर्णकाशिपुरंगत्वात्वयैकेनधनुष्मता ॥ कन्यार्थेकुरुराजस्यराजानोमृदितायुधि १७ तथाच बलवान्राजाजरासंधोदुरासदः ॥ समरेसमरश्लाघिन्नत्वयासदृशोभवत् १८

यः ॥ १२१ ॥ ततइति १ । २ जन्मशय्यागतंजन्मकालेशरशय्यागतंशरजन्मत्वात् ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ पुरुषेषुमानुषेषु एवंसत्यपिअतिसंभावितःपांडवान तिपीडयेरितिनिश्चित्यातिरथोऽप्यर्धरथत्वेनगणितइतिभावः १५ । १६ । १७ । त्वयासदृशोनाभवत् त्वयाजितइत्यर्थः इयंकथाराजधर्मे अनेननागायुतबलत्वंकर्णस्यसूचितम् १८

युधिसंमहारे १९ । २० । २१ निर्वृत्तंसमाप्तं २२ । २३ अवकीर्णस्त्यक्तः २४ । २५ । २६ । २७ निवर्तितुंनिवर्तयितुं २८ । २९ पाडूनर्जुनंविहायचतुरः अर्जुनेनयोत्स्येअन्यान्विजेष्येइतिभावः ३० । ३१
३२ । ३३ विप्रतीपंविरुद्धम् ३४ । ३५३६ । ३७ । ३८ । ३९ ॥ इतिभीष्मपर्वणि नीलकंठीये भारतभावदीपे द्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥ समाप्तोभीष्मपर्वार्थप्रकाशः ॥ ॥

ब्रह्मण्यःसत्त्वयोधीचतेजसाचबलेनच ॥ देवगर्भसमःसंख्येमनुष्यैरधिकोयुधि १९ व्यपनीतोऽद्यमन्युर्मेयस्त्वांप्रतिपुराकृतः ॥ दैवंपुरुषकारेणनशक्यमतिवर्तितुम्
२० सोदर्याःपांडवावीराभ्रातरस्तेऽरिसूदन ॥ संगच्छतैर्महाबाहोममचेदिच्छसिप्रियम् २१ मयाभवतुनिर्वृत्तंवैरमादित्यनंदन ॥ पृथिव्यांसर्वराजानोभवंत्वद्यनिराम
याः २२ ॥ कर्णउवाच ॥ जानाम्येवमहाबाहोसर्वमेतन्नसंशयः ॥ यथावदसिमेभीष्मकौन्तेयोऽहंनसूतजः २३ अवकीर्णस्त्वहंकुंत्यासूतेनचविवर्धितः ॥ भुक्त्वादुर्योधनै
श्वर्यंनमिथ्याकर्तुमुत्सहे २४ वसुदेवसुतोयद्वत्पांडवायदृढव्रतः ॥ वसुचैवशरीरंचपुत्रदारंतथायशः २५ सर्वंदुर्योधनस्यार्थेत्यक्तंमेभूरिदक्षिण ॥ माचैतद्व्याधिमरणंक्षत्रंस्या
दितिकौरव २६ कोपिताःपांडवानित्यंसमाश्रित्यसुयोधनम् ॥ अवश्यभावीह्यर्थोऽयंयोनशक्योनिवर्तितुम् २७ दैवंपुरुषकारेणकोनिवर्तितुमुत्सहेत् ॥ पृथिवीक्षयशं
सीनिनिमित्तानिपितामह २८ भवद्भिरुपलब्धानिकथितानिचसंसदि ॥ पांडवावासुदेवश्वविदिताममसर्वशः २९ अजेयाःपुरुषैरन्यैरितितांश्चोत्सहामहे ॥ विजयिष्ये
रणेपांडूनितिमेनिश्चितंमनः ३० नचशक्यमवस्रष्टुंवैरमेतत्सुदारुणम् ॥ धनंजयेनयोत्स्येऽहंस्वधर्मप्रीतमानसः ३१ अनुजानीष्वमांतातयुद्धायकृतनिश्चयम् ॥ अनु
ज्ञातस्त्वयावीरयुद्ध्येयमितिमेमतिः ३२ दुरुक्तंविप्रतीपंवारभसाच्चापलात्तथा ॥ यन्मयेहकृतंकिंचित्तन्मेत्वंक्षन्तुमर्हसि ३३ ॥ भीष्मउवाच ॥ नचेच्छक्यमवस्रष्टुंवैर
मेतत्सुदारुणम् ॥ अनुजानामिकर्णत्वांयुद्ध्यस्वस्वर्गकाम्यया ३४ निर्मन्युर्गतसंरंभःकृतकर्मारणेस्मह ॥ यथाशक्तियथोत्साहंसतांवृत्तेषुवृत्तवान् ३५ अहंत्वामनुजाना
मियदिच्छसितदाप्नुहि ॥ क्षत्रधर्मजिताँल्लोकानवाप्स्यसिधनंजयात् ३६ युध्यस्वनिरहंकारोबलवीर्यव्यपाश्रयः ॥ धर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यते ३७
प्रशमेहिकृतोयत्नःसुमहान्सुचिरंमया ॥ नचैवशकितःकर्तुंकर्णसत्यंब्रवीमिते ३८ ॥ संजयउवाच ॥ इत्युक्तवतिगांगेयेअभिवाद्योपमंत्र्यच ॥ राधेयोरथमारुह्यप्राया
त्तवसुतंप्रति ३९ ॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासक्यांभीष्मपर्वणिभीष्मवधपर्वणि भीष्मकर्णसंवादे द्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥ ॥
॥ समाप्तंभीष्मवधपर्व भीष्मपर्वच ॥ अस्यानन्तरंद्रोणपर्वभविष्यति ॥ तस्यायमाद्यःश्लोकः ॥ तमप्रतिमसत्त्वौजोबलवीर्यसमन्वितम् ॥ हतंदेवव्रतंश्रुत्वापांचाल्येन
शिखंडिना १

श्वेतोपाख्यानसमाप्त्यनंतरग्रंथप्रभृतिआपर्वसमाप्तिलिखिताटीकाअन्यैव नचतुर्धरप्रणीतेतिशंक्यते टीकांतरपुस्तकेषूपलंभाल्लेखसादृश्याभावाच्च ॥

॥ अस्मिन्पर्वणिआदिपर्वोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यंपूर्ववल्लेखकादिदोषादेवबोध्यम् ॥

